निजत्वाभावः

धनवि०—हे आत्मन्नयं जनो निजः—स्वकीयः अयं परः—परकीय इत्ययं विभागो—भेदव्यवहारो रागादिभिः—रागद्वेषकामक्रोध-मदमत्सरैः कृतो—निष्पादितोऽस्ति, ते तु—रागादयश्चतुर्गतिक्लेशविधानतस्तवारयो—वैरिणः सन्ति; तत्—तस्मादरिनिर्मितं—वैरि-विलसितं स्वपरविभागं किं प्रमाणयन्नसि ?, किं सत्यतया मन्यसे ? इत्यर्थः ॥ २२ ॥

नन्वनंतरं समतोपयोगी निजपरविभागाभावः कर्तव्य उपदिष्टः, स कथं भवतीत्याकांक्षायां (निजपरत्वाभावं) दर्शयन्नुपदिशति—

**अनादिरात्मा न निजः परो वा, कस्यापि कश्चिन्न रिपुः सुहृद्वा ।**
**स्थिरा न देहाकृतयोऽणवश्च, तथापि साम्यं किमुपैषि नैषु ? ॥ २३ ॥**

धनवि०—आत्मा—जीवोऽनादिः—आदिरहितो वर्त्तते नित्यत्वेन सदा वर्त्तमानत्वात्, च पुनः कस्याप्यात्मनः कश्चिदात्मा न—नैव स्वकीयः—सर्वथा निजः स्वकीयः परश्च—अस्वकीयो भवति, अत्र निजत्वपरत्वाभावोऽनन्तशो भिन्नभिन्नजातीयरूपेणास्वकीयत्वेन मातापित्रा-

---

भेदो रागादिभिः षडन्तरारिवर्गैः कृतोऽस्ति, तुरिति विशेषे, ते रागादयस्तवारयः सन्ति। कुतः ?—चतसृणां मनुष्यतिर्यग्देवनरकगतीनां यत्क्लेशविधानं तस्मात्, तत्—तस्मात्कारणादरिनिर्म्मितं स्वपरादिविभागं किं प्रमाणयन्नसि ?—प्रमाणीकुर्वन्नसि, अपि तु मा प्रमाणयेत्यर्थः ॥ २२ ॥

रत्न०—अथ सर्ववस्तुनामनित्यत्वज्ञापनेन साम्ये प्रेरयन्नाह—**अनादिरिति**, आत्मा न विद्यते आदिरस्य सः अनादिर्वर्त्तते, यद्यात्मन आदिर्भवेत् तदा कश्चित्कर्त्ता विलोक्यते, किंचिच्च समवायि कारणं द्रव्यं विलोक्यते, ते द्वे अपि न स्तः तेनात्माऽनादिः, प्रयोगश्च—आत्मा अनादिरनिर्म्मितत्वात्, यद्यदनिर्मितं तत्तदनादिर्यथा व्योमेत्यन्वयव्याप्तिः, यदनादि न भवति तदनिर्मितं न भवति, यथा घट इति व्यतिरेकव्याप्तिः,

दिरूपेण शत्रुत्वेन च जातत्वात्; च पुनः कस्याप्यात्मनः कश्चिदात्मा सर्वथा **न रिपुः**—वैरी **सुहृद्वा**—मित्रं भवति, अत्र सर्वथा शत्रुत्वाभावो मित्रत्वाभावश्चानन्तशः शत्रुत्वेन मित्रत्वेन च सर्वेषां जीवानां सर्वेषु जातपूर्वत्वात्, यदुक्तमुत्तराध्ययने "न सा जाई न सा जोणी, न तं ठाणं न तं कुलं। न जाया न मुया जत्थ, सव्वे जीवा अणंतसो" ॥ १ ॥[1] तथा भगवत्यादिष्वपि [द्वादशे शतके सप्तमोद्देशके] "अयन्नं भंते! जीवे सव्वजीवाणं माइत्ताए भाइत्ताए भगिणित्ताए भज्जत्ताए पुत्तत्ताए धूयत्ताए सुण्हत्ताए उववण्णपुव्वे ?, हंता गोयमा! जाव अणंतखुत्तो" इत्यादि एवं "मित्तत्ताए अरियत्ताए दासत्ताए" इत्याद्यपि; च पुनः कस्यापि देहिनो **देहाकृतयः**—शरीराकारा **अणवः**—परमाणवो **न स्थिराः**, तत्र देहाकाराणां परमाणूनामस्थिरत्वं मृत्तिकावालुकाधान्यकणरसासृग्मांसमेदोऽस्थिमज्जाशुक्रादिनानारूपत्वेन जायमानत्वात्; **तथाऽपि**—एवं सत्यप्येषु—निजपरवैरिसुहृच्छरीरेषु **साम्यं**—समतां **किं नोपैषि**—प्राप्नोषीत्यर्थः ? ॥ २३ ॥

---

इत्यन्वयव्यतिरेकाभ्यामात्माऽनादिः साधितः, अत्रार्थे बहु वक्तव्यं परं ग्रन्थगौरवभयान्न प्रतन्यते। अथ प्रस्तुतं, तेन कश्चिदात्मा कस्यापि निजः—स्वो नास्ति, वा—अथवा परः—अन्योऽस्वजनो नास्ति, स्वपरव्यवहारौ सादित्वे भवतः। तथा कश्चित्कस्यापि रिपुः, वा—अथवा सुहृद्—मित्रं नास्ति, रिपुमित्रव्यवहारावपि सादित्वे भवतः, तथा देहाकृतयः—शरीराकाराः स्थिरा न भवन्ति, क्षणक्षयित्वात्, तथा अणवः—परमाणवः स्थिरा न भवन्ति, क्षणेन सुरभिदुरभितया परिणमनशीलत्वात्, तथापि हे आत्मन्! एषु देहाकृत्यणुषु साम्यं—समत्वं रागद्वेषराहित्यलक्षणं कि न त्वमुपैषि—प्राप्नोषि ?, अपि तु साम्यं भजेत्यर्थः, तथा देहाः—शरीराण्याकृतयो येषान्ते देहाकृत्यणवः, देहत्वेन परिणताः परमाणव इत्यर्थः, इति विशेषणविशेष्यतयाऽपि व्याख्येयं ॥ २३ ॥

---

१ न सा जातिर्न सा योनिर्न तत्स्थानं न तत्कुलम्। न जाता न मृता यत्र सर्वे जीवा अनन्तशः ॥

लेप्यसमानता

नन्वनंतरं समतोक्ता, सा सुखदायकेषु स्नेहस्थानकेषु मातापितृपुत्रकलत्रेषु कथं भवतीत्याशंकायामुपदिशति—

**यथा विदां लेप्यमया न तत्त्वात्, सुखाय मातापितृपुत्रदाराः ।**
**तथा परेऽपीह विशीर्णतत्तदाकारमेतद्धि समं समग्रम् ॥ २४ ॥**

धनवि०—**यथा**—येन प्रकारेण विदन्ति—जानन्तीति क्विप्प्रत्यये विदस्तेषां **विदां**—पण्डितानां **लेप्यमयाः**—चित्रकृता निर्मिता **मातापितृपुत्रदारा**—जननीजनकतनयकलत्राणि **तत्त्वतः**— परमार्थतः **सुखाय न** भवन्ति, अत्र च मातरश्च पितरश्च पुत्राश्च दाराश्च 'आ द्वन्द्वे' ( ३–२–३९ ) इत्यनेन मातापितृ इति साधु, **तथा**—तेन प्रकारेणेह—संसारे **परेऽपि**—प्रत्यक्षेण दृश्यमाना अपि मातापितृपुत्रदारास्तत्त्वतः सुखाय न भवन्तीति, अत्र कियत्कालीनसुखस्येन्द्रजालिककृतनयनसुखस्येवापरमार्थिकत्वात्तत्त्वतोऽपरमार्थिकत्वम्; अत्र कियत्कालीनतामेव दर्शयति—**हि**—यतः **विशीर्णतत्तदाकारं**—विनष्टमातापितृपुत्रकलत्राद्याकार**मेतत्समग्रं**—लेप्यमयमलेप्यमयं च दृश्यमानं सर्वं **समं**—सुखकारित्वाभावेन सदृशं भवतीति; भावार्थस्तु लेप्यमयाः प्रत्यक्षेण दृश्यमानाश्च मातापितृपुत्रदारा अविनष्टाः सन्तो नेत्रादिसुखाय भवन्ति विनष्टाश्च न भवन्तीत्येषां साम्यमिति ॥ २४ ॥

---

**रत्न०**—पुनरनित्यत्वमेव द्रढयति—**यथा विदा**मिति०, व्याख्या—हे आत्मन् ! यथा विदां—पण्डितानां लेप्यमया—लेप्यनिर्म्मिता मातापितृपुत्रदारास्तत्त्वात्—तत्त्वतः परमार्थतः सुखाय न भवन्ति तथा परेऽपि—लेप्यमयेभ्योऽन्येऽपीह—जगति मातापितृपुत्रदाराः सुखाय न भवन्ति । हि—यस्मात्कारणाद्विशीर्णो—विनष्टः स स आकारो यस्य तद्विशीर्णतत्तदाकारमेतत्समग्रं वस्तु तुल्यमिति ॥ २४ ॥

अत्रैवं सत्यपि संसाररूपे समतां विरला एव जना जानन्तीति दर्शयन्नाह—

**जानन्ति कामान्निखिलाः १ ससंज्ञा, अर्थं २ नराः कर्म च ३ केऽपि धर्मम् ४ ।**
**जैनं च केचि ५ द्गुरुदेवशुद्धं, केचि ६ च्छिवं केऽपि च ७ केऽपि साम्यम् ८ ॥ २५ ॥**

धनवि०—निखिलाः—सर्वे संज्ञिनोऽसंज्ञिनश्च प्राणिनः कामान्—पदैकदेशे पदसमुदायोपचारात् कामगुणान्—शब्दादिविषयान् जानन्ति—विदन्ति, ननु सर्वप्राणिनां शब्दादिग्रहणं कथमितिचेत्, न, एकेन्द्रियादिष्वनुत्तरवैमानिकदेवपर्यवसानेषु संज्ञ्यसंज्ञिजीवेषु शब्दादिज्ञानयोग्यतायाः विद्यमानत्वात्, तत्रैकेन्द्रियेषु शब्दादिविषयग्रहश्च स्वसिद्धान्तोक्तो यथा—"पञ्चिंदिओ [१]उ बउलो नरो व्व सवविसयउवलंभा । तहवि न भण्णइ पञ्चिंदिउत्ति बज्झिन्दियाभावा ॥ १ ॥ इति श्रीजीवाभिगमवृत्तौ, एवं लौकिकशास्त्रोक्तोऽपि यथा—पादाहतः प्रमदया विकसत्यशोकः, शोकं जहाति बकुलो मधुसीधुसिक्तः । आलिङ्गितः कुरबकः कुरुते विकासमालोकितस्तिलक उत्क-

रत्न०—अथ साम्यभाजामल्पत्वमाह—**जानन्ति कामानिति,** व्याख्या—निखिलाः ससंज्ञा—संज्ञावन्तो जीवाः स्त्रीसम्भोगादिलक्षणान् कामान् जानन्ति, जानन्तीति सर्वत्र योज्यं १ अर्थं—द्रव्यं जानन्ति द्रव्योपार्जने तत्पराः सन्तीत्यर्थः । नराणामेवार्थेनोदरम्भरित्वाद्, देवानां नारकाणां चार्थेन प्रयोजनाभावात् तिरश्चामपि नराणां पारवश्यादर्थेन प्रयोजनाभावात् २ केऽपि च कर्म जानन्ति, कर्मवादिन एव सन्तीत्यर्थः, अथवा कर्म—स्वोदरभरणार्थं प्रवृत्तिनिवृत्तिलक्षणं जानन्ति ३ केऽपि धर्मं, सामान्यतो वयं धर्मं कुर्म इति पूत्कुर्वन्तीत्यर्थः ४ केचिज्जैनवेषधारिणो जैनं धर्मं—वयं जैना जैनं

१ पञ्चिन्द्रियस्तु बकुलो नर इव सर्वविषयोपलम्भात् । तथापि न भण्यते पञ्चिन्द्रिय इति बाह्येन्द्रियाभावात् ॥

साम्यभाजां विरलता

लिको विभाति ॥ १ ॥ एवमन्यत्र क्वचिदागमगम्यः क्वचित्प्रत्यक्षसिद्धश्च शब्दादिविषयग्रहसद्भाव इति, च पुनः संज्ञ्यसंज्ञिषु प्राणिषु ससंज्ञाः–संज्ञिनः प्राणिनोऽर्थं–द्वितीयपुरुषार्थं धनं जानन्ति, अत्र प्राय इति गम्यं, एकेन्द्रियादिष्वप्यसंज्ञिष्वप्यव्यक्तलोभसंज्ञायाः सिद्धान्ते भणनात्, लोकेऽपि सप्ररोहबिल्वपलाशप्रपुन्नाटादिषु सद्रव्यताव्यवहारदर्शनाच्च न विरोधः, सर्वेषु संज्ञिषु तु मूषकभुजगादिषु प्रायो धनस्थानज्ञानस्य लोके शास्त्रे च श्रूयमाणत्वात्; च पुनः संज्ञिष्वपि केऽपि नराः कर्म–कृषिवाणिज्यादिव्यापारं जानन्ति, कृषिवाणिज्यादिव्यापारज्ञानयोग्यताया मनुष्येष्वेव विद्यमानत्वात्, च पुनर्मनुष्येष्वपि केऽपि प्राणिनो धर्मम्–दानादिकं जानन्ति; दानाद्यन्तरायापाये केषुचिन्मनुष्येषु दानादिधर्मं करोमीति ज्ञानस्य विद्यमानत्वात्, पुनर्धर्मज्ञमनुष्येष्वपि जैनं धर्मं–देशविरतिसर्वविरत्यादिरूपं केचिन्मनुष्या जानन्ति, मिथ्यात्वमलिनीकृतधर्मज्ञेष्वपि केषुचिदेव मनुष्येषु देशविरतिसर्वविरत्यादिप्रतिपत्तिं करोमीति ज्ञानस्य विद्यमानत्वात्; पुनर्जैनधर्मज्ञेष्वपि निन्हवत्वादिवर्जिताः केचिन्मनुष्या गुरुदेवशुद्धं जैनं धर्मं जानन्ति, अत्र देवाश्च रागद्वेषविजेतारो, गुरवश्च पञ्चेन्द्रियसंवरणनवविधब्रह्मचर्यगुप्त्यादिषट्त्रिंशद्गुणविराजमानास्तैः शुद्धं–निर्दोषं, केषुचिदेव जैनधर्मज्ञमनुष्येषु देवगुरुशुद्धं पञ्चविधमिथ्यात्वापगमे सम्यक्त्वालंकृतं जैनं धर्मं करोमीति ज्ञानस्य जायमानत्वात्; पुनस्तेषां मध्ये केऽपि मनुष्याः शिवं–मोक्षं जानन्ति, सम्यक्त्वसहितजैनधर्मज्ञेष्वपि केषुचिदेव संसारनिर्विण्णचित्तेषु प्राणिषु मोक्षं प्राप्नोमीति ज्ञानस्य जायमानत्वात्, तेष्वपि केऽपि प्राणिनः साम्यं जानन्ति, यत इह मुमुक्षवो भूयांसः सन्ति तेष्वप्यासन्नसिद्धिकानामेव समतां श्रयेऽहमिति ज्ञानस्य जायमानत्वात्; अत्र चशब्दः समुच्चयार्थः सर्वत्र योज्य इति; भावार्थस्तु समताया ज्ञातारः स्वल्पा एव सन्तीति ॥ २५ ॥

धर्मं कुर्वे इति ५ केचिद्गुरुदेवाभ्यां शुद्धं जैनं धर्मं जानन्ति, गुरुः सदाचारवान् शुद्धप्ररूपकश्चेति, देवोऽष्टादशदोषरहितोऽर्हन्नेवेति ६ तथा

अथ समताप्रतिबन्धकं स्नेहं निरस्यन्नुपदिशति—

**स्निह्यंति तावद्धि निजा निजेषु, पश्यन्ति यावन्निजमर्थमेभ्यः ।**
**इमां भवेऽत्रापि समीक्ष्य रीतिं, स्वार्थे न कः प्रेत्यहिते यतेत ? ॥ २६ ॥**

**धनवि०**—हि यतो निजाः—स्वकीया **निजेषु**—स्वकीयेषु **तावत्**कालं **स्निह्यन्ति**—स्नेहपरा भवन्ति **याव**त्काल**मेभ्यो**—निजेभ्यो **निजं**—स्वकीय**मर्थं**—साध्यं **पश्यंति**, एतदर्थसंवादो वेदेऽपि "न दारपुत्राणां कामाय पुत्राः प्रिया भवन्ति, आत्मनस्तु कामाय पुत्राः प्रिया भवन्ती"ति; ततः कारणाद**त्रापि**—इह संसारेऽपी**मां** दृश्यमानां **रीतिं**—लोकव्यवस्थां **समीक्ष्य**—दृष्ट्वा **प्रेत्यहिते**—परभवपथ्ये **स्वार्थे**—आत्मकार्ये तपःसंयमसाम्यादौ **कः** पुमान्न **यतेत**—न प्रयत्नं कुर्याद् ?, अपि तु सर्वोऽपि कुर्यादित्यर्थः ॥ २६ ॥

---

केचिच्छिवं—मोक्षं, मोक्षपदार्थं तु तेषां मध्ये अल्पीयांस एव विदन्तीत्यर्थः ७ केचित्साम्यं—समभावं रागद्वेषानाकुलितत्वं, मोक्षवित्स्वपि साम्यवेत्तारः अल्पीयांस एवेत्यर्थः इति दिक् ८ ॥ २५ ॥

**रत्न०**—अथ सर्वेषां स्वार्थनिष्ठत्वं ज्ञापयति—**स्निह्यन्ति तावदिति,** व्याख्या—हि निश्चितं निजाः—स्वकीया निजेषु—स्वकीयेषु कलत्रादिषु तावत्—तावत्कालं स्निह्यन्ति—स्नेहं कुर्वन्ति यावदिति—यावत्कालं निजं—स्वकीयमर्थं—कृत्यमेभ्यः—स्वेभ्यः कलत्रादिभ्यः पश्यन्ति, अत्रापि भवे इमां रीतिं—मर्यादां समीक्ष्य—विचार्य विलोक्य वा प्रेत्य—परभवे हिते—हितकारिणि स्वार्थे—तपःक्रियानुष्ठानादिरूपे को न यतेत ?—न यत्नं कुर्याद्, अपितु दक्षो जनः सर्वोऽपि यतेतेति ॥ २६ ॥

नन्विन्द्रियपञ्चकप्रभवे विषयसुखे स्वाधीने सति किं समतासुखेनेत्याकाङ्क्षायामुपदिशति—

**स्वप्नेन्द्रजालादिषु यद्वदाप्तै, रोषश्च तोषश्च मुधा पदार्थैः ।**
**तथा भवेऽस्मिन् विषयैः समस्तैरेवं विभाव्यात्मलयेऽवधेहि ॥ २७ ॥**

धनवि०—यद्वद्-यथा स्वप्नेन्द्रजालादिष्वाप्तैः—प्राप्तैः पदार्थैः—दारिद्र्यादिभिः साम्राज्यादिभिर्वा रोषः—ईर्ष्या च पुनस्तोषः
तुष्टिर्मुधा—निष्फलो भवति, अत्र स्वप्नाश्च—निद्रावस्थाज्ञानविशेषा इन्द्रजालानि च—नाटकविशेषास्ते आदौ येषान्ते तथा तेषु स्वप्नेन्द्रजा-
लादिषु, अत्रादिपदात् मरुमरीचिकादिभ्रमपरिग्रहः; तथा—तद्वद् अस्मिन्ननुभूयमाने भवे—संसारे समस्तैः—सर्वैरिन्द्रियपञ्चकप्रभवैर्विषयैः—
इष्टानिष्टैराप्तैः—प्राप्तैर्मुधा रोषस्तोषश्च कर्त्तव्यो भवति; भावार्थस्तु स्वप्नेन्द्रजालादिना प्राप्तेषु विषयेषु साक्षात्प्राप्तेषु च विषयेषु यावदनु-
भवं सुखदुःखे भवतः, अनुभवोत्तरकालं च स्वप्नेन्द्रजालप्राप्तसाक्षात्प्राप्तयोर्विषययोः सुखदुःखानुभवाभावात् मुधात्वमिति; एवमन-
न्तरोक्तं विभाव्य—विशेषेण चेतसा पर्यालोच्यात्मलये—ममात्मा कथं सुखी भवतीतिध्यानेऽवधेहि—समाधानवान् भवेत्यर्थः ॥ २७ ॥

---

रत्न०—अथ रागद्वेषयोर्मुधात्वं दर्शयन्नाह—'**स्वप्नेन्द्रजालादिष्विति**' व्याख्या—यद्वदिति यथा स्वप्ने इन्द्रजालादिषु चाप्तैः—प्राप्तैरशुभशुभैः
पदार्थैः करणभूतैर्यो रोषो—द्वेषस्तोषश्च—रागो मुधा—वृथा, क्षणदृष्टनष्टत्वात्कार्यकरणासमर्थत्वाच्च रोषस्तोषश्च कृतस्तदा किमिति ?; तथाऽस्मिन् भवे
समस्तैर्विषयैः—शब्दरूपगन्धरसस्पर्शलक्षणैः स्वप्नेन्द्रजालादिवत् क्षणदृष्टनष्टैरेवमिति रोषतोषौ मुधा विभाव्य—विचिन्त्य हे आत्मन् ! आत्मलये—
आत्मनि लयः—साम्यं रागद्वेषाभ्यां रहितत्वं तत्रावधेहि—अवधानं कुरु, सावधानो भवेत्यर्थः ॥ २७ ॥

नन्वात्मीयवस्तुनि ममतापरिहारेण समताखीकारः केन क्रियते इत्याशङ्कायां यमभयेन सर्वत्र ममतां निरस्यन्नुपदिशति—

**एष मे जनयिता जननीयं, बन्धवः पुनरिमे स्वजनाश्च। द्रव्यमेतदिति जातममत्वो, नैव पश्यसि कृतान्तवशं स्वम् ॥**

धनवि०—एषः प्रत्यक्षेण दृश्यमानो मे—मम जनयिता वर्त्तते, च पुनरियं जननी—मम माता वर्त्तते, च पुनरिमे मम बन्धवो—भ्रातरो वर्तन्ते, च पुनर्मम इमे स्वजनाः—सगोत्रा वर्त्तते, च पुनः ममैतद् द्रव्यम्—धनधान्यादि नवविधपरिग्रहलक्षणं धनं वर्त्तते, इत्यमुना प्रकारेण जातममत्वः—सञ्जातममतापरिणामः स्वम्—आत्मानं कृतान्तवशं—यमायत्तं न पश्यसि—न विलोकयसीत्यन्वयः, भावार्थस्तु "चेतोहरा युवतयः स्वजनोऽनुकूलः, सद्बान्धवाः प्रणयगर्भगिरश्च भृत्याः। गर्जन्ति दन्तिनिवहास्तरलास्तुरङ्गाः, संमीलने नयनयोर्नहि किञ्चिदस्ति" ॥ १ ॥ इति पद्यभावनया स्पष्ट एव ॥ २८ ॥

ननु धनस्वजनपरिजनेषु सत्सु कुतः कृतान्तवशतेत्याशङ्कायामर्थतो युग्मेनोपदिशति—

**नो धनैः परिजनैः स्वजनैर्वा, दैवतैः परिचितैरपि मन्त्रैः।**
**रक्ष्यतेऽत्र खलु कोऽपि कृतान्तान्, नो विभावयसि मूढ! किमेवम्? ॥ २९ ॥**

---

रत्न०—अथ काव्यद्वयेन जीवस्य मृत्युपारवश्यमाह—'**एष मे जनयिते**'ति, व्याख्या—एष इति प्रत्यक्षं दृश्यमानो मे—मम जनयिता—जनकोऽस्ति, सन्ति (अस्तीति) च यथार्हं योज्यं, तथा इयं जननी, पुनरिमे बन्धवो—भ्रातरः, डमरुकमणिन्यायेनेमे इत्यस्योभयत्रापि योजनादिमे स्वजना—गोत्रिणश्च तथैतद्द्रव्यमिति जातं ममत्वं यस्य स इति जातममत्वः सन् हे आत्मन्! स्वमात्मानं कृतान्तवशं—यमपराधीनं नैव पश्यसि—नैव विलोकयसि?, अपि तु स्वं कृतान्तपराधीनं विलोकयेति भावः ॥ २८ ॥ '**नो धनै**'रिति व्याख्या—अत्र—संसारे खलु—निश्चितं कोऽपि जनो

कृतान्ता-
धीनत्वं

तैर्भवेऽपि यदहो सुखमिच्छंस्तस्य साधनतया प्रतिभातैः ।
मुह्यसि प्रतिकलं विषयेषु, प्रीतिमैषि न तु साम्यसतत्त्वे ॥ ३० ॥ अर्थतो युग्मम् ॥

धनवि०—खलु—निश्चितमत्र—जगति कोऽपि धनैः—द्रव्यैरपि, वाऽथवा परिजनैः—दासदासीप्रमुखपरिवारैरपि, वाऽथवा स्वजनैः—मातापितृभ्रातृपुत्रकलत्राद्यैः स्वजातीयैरपि, वाऽथवा दैवतैः—देववृन्दैरपि, वाऽथवा परिचितैः—पूर्वसेवासाधनादिना बहुकालाभ्यस्तैर्मन्त्रैः—साधिष्ठायकोंकाराद्यक्षरसंयोगैरपि, सुभूमरावणादिवत्कृतान्तात्—यमात्रो रक्ष्यते—नैव त्रायते; हे मूढ—हे मूर्ख ! एवमनेन प्रकारेणोक्तं जगत्स्वरूपं किन्नो विभावयसि ?—किं नो विचिन्तयसि ॥ २९ ॥ अहो इत्याश्चर्ये यद्—यस्मात्कारणात्तस्य सुखस्य साधनतया—हेतुतया प्रतिभातैः—मनसा मिथ्याज्ञातैस्तैरनन्तरोक्तैर्यमादरक्षकैर्धनादिभिर्भवेऽपि—संसारेऽपि सुखं—सौख्यमिच्छन्—वांछन् प्रतिकलं—प्रतिक्षणं विषयेषु—शब्दादिषु मुह्यसि—मोहं गच्छसि; तु पुनः साम्यसतत्त्वे साम्यस्वरूपे प्रीतिं—प्रेम नैषि—न गच्छसीत्यर्थः ॥ ३० ॥

---

धनैः—स्वर्णरूप्यमण्यादिभिः कृतातात्—यमात् नो रक्ष्यते, एवं परिजनैर्वा अथवा स्वजनैर्दैवतैः—देवैस्तथा परिचितैः—अहरहर्जापेन साधितैर्मन्त्रैरपीति योऽयं, हे मूढ—हे रागग्रस्त एवं किं नो विभावयसि—न विचिंतयसि ?, अपि तु सम्यग्विभावयेत्यर्थः ॥ २९ ॥

रत्न०—अथ धनादिभिर्जीवस्य मूढत्वमाह—'तैर्भवेऽपीति, व्याख्या—अहो इति सम्बोधने, हे आत्मन् ! तैर्धनादिभिः कारणभूतैर्यत्त्वं भवेऽपि—संसारेपि सुखमिच्छन्—वाञ्छन् विषयेषु—शब्दरूपगन्धरसस्पर्शेषु मुह्यसि—मोहं प्राप्नोषि, तैः कथम्भूतैः ?—स्वस्य सुखस्य साधनतया प्रतिभातैः, कथं ?—प्रतिकलं प्रतिसमयं तु पुनः साम्यस्य सतत्त्वं—स्वरूपं तस्मिन् प्रीतिं—प्रेम नोपैषि—न प्राप्नोषि, अपिग्रहणेनैकान्तदुःखमये संसारे इति सूचनमिति ॥३०॥

नन्वत्र वृत्तद्वये क्रियाभेदे सति युग्मरूपता कथं जायते इत्याशङ्कायामाह—**अर्थतो युग्ममिति,** भावार्थतो युग्ममित्यर्थः ॥

स्वापराधिषु वैरिषु कथं समता कार्येत्याकाङ्क्षायामुपदिशति—

**किं कषायकलुषं कुरुषे स्वं, केषुचिन्ननु मनोऽरिधियाऽऽत्मन्! । तेऽपि ते हि जनकादिकरूपैरिष्टतां दधुरनन्तभवेषु ३१**

धनवि०—नन्विति वितर्के, हे **आत्मन्!**—**केषुचित्**प्राणिष्व**रिधिया**—वैरिबुद्ध्या **कषायकलुषं**—क्रोधादिकषायमलिनं **स्वं**—स्वकीयं **मन**श्चित्तं **किं कुरुषे, हि** यत**स्तेऽपि**—वैरित्वव्यवहारभाजः प्राणिनस्ते **तव जनकादिकरूपैः**—जननीजनकत्वादिस्वरूपै**रिष्टतां**—प्रीतिपात्रता**मनन्तभवेषु**—अनन्तजन्मसु **दधुः**—धरन्ति स्मेति । यदागमः—"अयंणभंते! जीवे सव्व जीवाणं माइत्ताए इत्यादि अणन्तखुत्तो इत्यन्त" इति ॥ ३१ ॥

ननु स्वोपकारिषु वियुक्तेषु सत्सु शोकाकुलितचित्तेन कथं समता कार्येत्याकाङ्क्षायामुपदिशति—

**यांश्च शोचसि गताः किमिमे मे, स्नेहला? इति धिया विधुरात्मा ।**
**तैर्भवेषु निहतस्त्वमनन्तेष्वेव तेऽपि निहता भवता च ॥ ३२ ॥**

---

**रत्न०**—अथानेकशः पितृमात्रादिसम्बन्धदर्शनेनात्मानं प्रतिबोधयन्नाह—'**किं कषायकलुष**'मिति, व्याख्या—हे आत्मन्! ननु—निश्चितं केषुचिज्जनेष्वरिधिया—वैरिबुद्ध्या त्वं स्वं—स्वकीयं मनः प्रतिकषायैः कलुषं—मलिनं किं कुरुषे? अपि तु मा कुर्वित्यर्थः । यतस्तेऽपि जनास्ते—तव हि निश्चितमनन्तभवेषु जनकादिरूपैः—पितृपुत्रमातृभ्रातृसम्बन्धैरिष्टतां वल्लभत्वं दधुः, यतः "न सा जाई न सा जोणी, न तं ठाणं न तं कुलं । न जाया न मुया जत्थ, सव्वे जीवा अणन्तसोत्ति" ॥ ३१ ॥

साम्ये शोकापनोदनं

धनवि०—चकारोऽवधारणे, इमे प्रत्यक्षा मे—मम स्नेहलाः—स्नेहपात्राणि स्वजनाः किं गताः—किं परलोकं प्राप्ता इति धिया—एवं प्रकारबुद्ध्या विधुरात्मा—व्याकुलान्तःकरणः सन् यानेव स्वजनान् शोचसि—शोकविपयीकरोपि तैः स्वजनैरनन्तेषु भवेषु—जन्मसु त्वं निहतो—घातविपयीकृतोऽसि, च पुनस्तेऽपि स्वजनास्त्वयाऽनन्तेषु भवेषु निहता—घातविषयीकृता इति । भावार्थस्तु "अयण्णं भन्ते! जीवे एयस्स जीवस्स वेरियत्ताए घायगत्ताए" इत्यादि उववण्णपुव्वे हन्ता गोयमा ! इत्यादिना अदुवा अणन्तखुत्तो इत्यन्तेन' भगवतीपाठेन श्रेणिककोणिकाद्युदाहरणेन च स्पष्ट एवेति ॥ ३२ ॥

अथ साम्यानयनाय शोकापनोदनोपायं दर्शयन्नुपदिशति—

**त्रातुं न शक्या भवदुःखतो ये, त्वया न ये त्वामपि पातुमीशाः ।**
**ममत्वमेतेषु दधन्मुधाऽऽत्मन्!, पदे पदे किं शुचमेषि? मूढ! ॥ ३३ ॥**

धनवि०—ये स्नेहलास्त्वया भवदुःखतः संसारापायात्रातुं—पातुं न शक्याः, शक्यंते इति शक्याः, न शक्तिविषया इत्यर्थः, च पुनर्ये स्नेहलास्त्वामप्यनाथीश्चपिमिव भवदुःखतः पातुं—त्रातुं न ईशा—न समर्था भवन्ति, ततः कारणाद्धे आत्मन् हे मूढ मुधा—

---

रत्न०—अथ य एव स्वजनास्त एव शत्रव इति दर्शयन्नाह 'यांश्च शोचसि गता', इति व्याख्या—हे आत्मन्! त्वं यान् मृतान् शोचसि—शोकं कुरुपे, किंलक्षणः? इतिधिया विधुर आत्मा यस्य सः, इतीति किं?—इमे—मम स्नेहला—ममोपरि स्नेहवन्तः किं गताः? परं तैः स्वजनैः स्नेहलैस्त्वमनन्तेष्वेव भवेपु निहतोऽसि—मारितोऽसि, भवता च—त्वयापि ते अनन्तेष्वेव भवेषु निहता वर्त्तन्त इति ॥ ३२ ॥

रत्न०—अथ न कश्चित्कान् प्रति वक्तुं शक्त इति दर्शयन्नाह—त्रातुं न शक्या' इति, व्याख्या—हे आत्मन्! ये त्वया भवदुःखतस्त्रातुं—

निरर्थकमेतेषु स्नेहलेषु—ममत्वं—ममैते ममैते इति ममतां **दधत्**—धरन् **पदे** २—स्थाने २ **किं शुचं**—शोकमेषि—यासीत्यर्थः, अत्र 'हुवः शिति' (४—१—१२) इति सूत्रेण द्विर्भावे 'अन्तो नो लुगि' (४—२—१४) त्यनेन नलुकि दधदिति प्रयोगः शतृप्रत्ययान्त इति ॥३३॥

अथ समताद्वारोपसंहाराय समताप्रतिपक्षौ रागद्वेषौ परिहर्त्तव्यावित्युपदिशति—

**सचेतनाः पुद्गलपिण्डजीवा, अर्थाः परे चाणुमया द्वयेऽपि ।**
**दधत्यनन्तान् परिणामभावांस्तत्तेषु को न्वर्हति रागरोषौ ? ॥ ३४ ॥**

धनवि०—**पुद्गलपिण्डः**—शरीरं तदधिष्ठिता **जीवाः**—प्राणिनो**ऽर्थाः**—पदार्थाः स्त्रीसर्पादयः **सचेतनाः**—चैतन्यवन्तः, **च** पुनः **परे**—अचेतना **अणुमयाः**—परमाणुमयाः स्वर्णलोहादयोऽर्थाः सन्ति, एते द्वयेऽपि पदार्था **अनन्तान् परिणामभावान्**—अनेकान् पर्यायान् **दधति**—धरन्ति; **तत्**—तस्मात् **नु** इति वितर्के **तेषु**—स्त्रीसर्पादिषु स्वर्णलोहादिषु च **रागद्वेषौ** कर्तुं **कः पुमानर्हति**—योग्यो भवति ?, न कोऽपीत्यर्थः ।

---

रक्षितुं न शक्या—न शकनीया ये च त्वामपि पातुं—रक्षितुं न ईशाः—न समर्थाः, हे मूढ !—हे आत्मन् एतेषु स्वजनादिषु त्वं ममत्वं दधत् पदे पदे—स्थाने स्थाने किं शुचं—शोकमेषि—प्राप्नोपि ?, अपितु ममत्वं शोकं च त्यज, साम्यं भजेत्युपदेशः ॥ ३३ ॥

**रत्न०**—अथ जीवानां पुद्गलानां च नानापरिणामपरिणतत्वदर्शनेन रागद्वेषपरिहारमाह—**'सचेतना'** इति, व्याख्या—पुद्गलपिण्ड इति—पुद्गलानां समुदायः, पुद्गलस्कन्ध इत्यर्थः, तमाश्रित्य जीवन्तीति पुद्गलपिण्डजीवाः, एवंविधा ये सचेतनाः—चेतनावन्तः, सर्वे जीवा इत्यर्थः, यावन्तः सचेतनास्ते पुद्गलपिण्डमाश्रित्य जीवन्तीति, स पुद्गलपिण्डो जीवमुक्तः अचेतनो भवतीति, वा पुनः परे—अन्येऽणुमयाः—परमाणुमयाः अनन्तपरमाणुनिष्पन्नस्कन्धमया घटपटादयोऽर्थाः—पदार्थाः सन्ति अचेतनास्ते इत्युक्तं, ते सचेतना अचेतनाश्चैवं द्वयेऽप्यनन्तान् परिणामभावान् परिणामचेष्टा वा दधति ॥ यत

भावार्थस्तु सचेतनानां जीवद्रव्यापेक्षया भवान्तरे देवत्वमानुपत्वतिर्यक्त्वनारकत्वपितृत्वपुत्रत्वपतित्वपत्नीत्वादिपर्यायाणां इह भवेऽपि च मित्रत्वशत्रुत्वस्वामित्वसेवकत्वाद्यनेकपर्यायाणां च परावृत्त्या प्रियत्वाप्रियत्वसम्भवात् अचेतनानां च सुवर्णलोहादीनां कालांतरेण सुबुद्धि-प्रधानपरिकर्मितपरिखापानीयवदनेकपर्यायाणां परावृत्त्या प्रियत्वाप्रियत्वसंभवाच्च सचेतनाचेतनेषु पदार्थेषु रागद्वेषौ नोचितावितिं ॥ ३४ ॥

इति श्रीतपोगच्छनायकश्रीमुनिसुन्दरसूरिनिर्म्मितस्य तत्पट्टपरम्पराप्रभावकपातसाहिश्रीअकब्बरप्रतिबोधकभट्टारकश्रीहीरविजयसूरि-श्रीविजयसेनसूरिप्रमुखमहापुरुषपरिशीलितस्य षोडशशास्त्रस्याध्यात्मकल्पद्रुमस्याधिरोहणीटीकायां सकलशास्त्रारविन्दप्रद्योत-नमहोपाध्यायश्रीकल्याणविजयगणिशिष्योपाध्यायश्रीधनविजयगणिविरचितायां समतानाम्नी प्रथमपदपद्धतिः ॥१॥

उक्तमनेकार्थे "भावोऽभिप्रायवस्तुनोः । स्वभावजन्मसत्ताऽऽत्मक्रियालीलाविभूतिषु ॥ १ ॥ चेष्टायोग्ये बुधे जन्तौ, शृङ्गारादेश्च कारणे," आत्मशब्द-प्रवृत्तिहेतौ चेति, तत्—ततो हेतोस्तेषु—सचेतनाचेतनेष्वर्थेषु तु पुनः कः पुमान् रागरोषौ प्रत्यर्हति ?—योग्यो भवति, अपितु विद्वान् जनो नार्हतीत्यर्थः, कर्तुमितिगम्यम्, अथवा परिणामभावान् परिणामत्वानीति व्याख्येयम् ॥ ३४ ॥ ॥ इति समतैकलीनचित्त इति प्रथमोऽधिकारो व्याख्यातः ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धुलब्धप्रतिष्ठवरवाचकरत्नचन्द्रः । अध्यात्मकल्पफलदप्रथमाधिकारे, वृत्तिं चकार ललितार्थपदप्रपञ्चाम् ॥१॥

रणरोषा-भावः

## २ ललनाममत्वमोचनाधिकारः ।

नन्वनन्तरद्वारे समतोक्ता, सा च ममतायां सत्यां कुतः समायातीति ममतामोचनद्वाराणि वक्तुकामो ममतामूलं च स्त्रीति प्रथमं स्त्रीममतामोचनद्वारमाह—

**अथ स्त्रियः—मुह्यसि प्रणयचारुगिरासु, प्रीतितः प्रणयिनीषु कृतिन्! किम्?।**
**किं न वेत्सि पततां भववार्धौ, ता नृणां खलु शिला गलबद्धाः?॥ ३५ ॥ १ ॥**

धनवि०—अथ स्त्रिय इति, समताद्वारनिरूपणानन्तरं स्त्रियो—ललना ममतामोचनविषया उपदिश्यन्ते इत्यर्थः । तत्रापि स्त्रीममतामोचनासाधारणकारणं स्त्रीमोहमोचनं प्रथममुपदिशति—हे कृतिन्!—हे विद्वन् प्रणयेन—स्नेहेन चार्वी—मनोहरा गिरा—वाणी यासां तास्तथा तासु, अत्र गिराखिलाबन्तं सप्तमीबहुवचनान्तं ज्ञेयं, यतो 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । आपं चैव हसांतानां, यथा वाचा निशा दिशा ॥ १ ॥' इति, **प्रणयचारुगिरासु** वल्लभासु **प्रीतितः**—प्रेमतः त्वं **किं मुह्यसि?**—मोहं यासीति; अव्ययानामनेकार्थत्वादत्र खलु-

---

रत्न०—अथ द्वितीयोऽधिकारो ललनायां ममत्वमोचनाख्यो व्याख्यायते, तत्र स्त्रीषु मोहनिरासे प्रथमं वृत्तमाह—'**मुह्यसी**'ति, व्याख्या—हे कृतिन्!—हे पण्डित! त्वं प्रीतितः—प्रेमतः प्रणयिनीषु किं मुह्यसि?—किं मोहं प्राप्नोषि, काकूक्त्या प्रश्नः, अपि तु मा मुह्य इत्युपदेशः, किंलक्षणासु?—प्रणयो गर्भे—मध्ये यासां ताः प्रणयगर्भाः प्रणयगर्भा गिरो—वाण्यः यासां तास्तासु, ताः प्रणयिनीः प्रति शिलाः किं न वेत्सि?—कि न जानासि । अत्रापि

नारीशरीरारम्यता

शब्दो हेत्वर्थे, तेन खलु यतो हेतोर्भववार्द्धौ—संसारसागरे पतताम्—अधो गच्छतां नृणां—नराणां ताः—प्रणयिन्यो गलबद्धाः—कण्ठनियन्त्रिताः शिलाः—स्थूलपाषाणविशेषाः किं न वेत्सि ?—किं न जानासीत्यर्थः ॥ ३५ ॥

अथ ललनाखरमणीयतां दर्शयति—

चर्मास्थिमज्जांत्रवसास्रमांसामेध्याद्यशुच्यस्थिरपुद्गलानाम् ।
स्त्रीदेहपिण्डाकृतिसंस्थितेषु, स्कन्धेषु किं पश्यसि ? रम्यमात्मन् ! ॥ ३६ ॥ २ ॥

धनवि०—हे आत्मन्—हे प्राणिन्! स्त्रीदेहपिण्डाकृतिसंस्थितेषु, चर्मास्थिमज्जान्त्रवसास्रमांसामेध्याद्यशुच्यस्थिरपुद्गलानां स्कन्धेषु रम्यं—रमणीयं किं पश्यसि ?—किं विलोकयसीत्यन्वयः, अत्र चर्म च—शरीरत्वग् अस्थि च—कीकसं पञ्चमधातुतया प्रसिद्धं मज्जा च—

---

काकुध्वनिः, अपि तु विद्धि शिलाः, किंलक्षणाः ?—गले बद्धा गलबद्धाः । केषां ?—नृणां, किं कुर्वतां ?—पततां, कस्मिन् ?—भव एव वार्द्धिः—समुद्रस्तस्मिन्, एकं तावत्समुद्रपतनं विषममुत च गले शिलाः बद्धाः, तथैककस्यापि पुंसः संसारवार्द्धेर्निर्गमो दुःशकः उत च स्त्रीद्वितीयस्य विशेषत इति भावः, खलु निश्चितार्थे ॥ ३५ ॥ १ ॥

रत्न०—अथ पुरुषादपि विशेषतः स्त्रीशरीराणामशुचित्वमाह—'चर्मास्थी'ति, व्याख्या—चर्म च अस्थि च मज्जा च अन्त्रं च वसा च अस्रं च मांसं च अमेध्यं च चर्मास्थि० मेध्यानि तान्यादौ येषां तानि चर्मा० मेध्यादीनि, आदिशब्देन मूत्रकफश्लेष्मादिग्रहणं, तेषामशुचयः—अपवित्रा

---

१ रस, असृज, मांस, मेदस्, अस्थि, मज्जा, शुक्राणीति सप्त धातवः ।

षष्ठधातुतया प्रसिद्धा शरीरान्तर्गता ज्ञेया अन्त्राणि च—शरीरान्तर्गता लोकप्रसिद्धा अवयवविशेषाः वसा च—मेदश्चतुर्थधातुतया प्रसिद्धः अस्रं च—रुधिरं द्वितीयधातुतया प्रसिद्धं मांसं च—पिशितं तृतीयधातुतया प्रसिद्धं अमेध्यं च—अपवित्रमर्थात्मूत्रपुरीषश्लेष्मादिकं तान्यादौ—प्रथमं येषां ते च ते अशुचयश्च—अपवित्रास्ते च तेऽस्थिराश्च—विनाशिनस्ते च ते पुद्गलाश्च—पूरणगलनधर्माणस्ते तथा तेषां **चर्मास्थिमज्जांत्रवसास्रमांसामेध्याद्यशुच्यस्थिरपुद्गलानाम्**, अत्रादिपदात्पूयादीनां, **स्कन्धेषु**—एकाकारतया जातानन्तपरमाणुषु **रम्यं**—रमणीयं **किं पश्यसि ?**—किं विलोकयसीत्यर्थः, अथ स्कंधानेव च सविशेषयति—स्त्रीणां—ललनानां देहरूपो यः पिण्डस्तस्याकृतिः—आकारस्तत्र संस्थितेषु—सन्निविष्टेष्विति ॥ ३६ ॥

पूर्वश्लोके ललनायां अरमणीयताया दर्शनाद् अनन्तरमनभिलषणीयतां दर्शयन्नुपदिशति—

**विलोक्य दूरस्थममेध्यमल्पं, जुगुप्ससे मोटितनासिकस्त्वम् ।**
**भृतेषु तेनैव विमूढ ! योषावपुष्षु तत्किं कुरुषेऽभिलाषम् ? ॥ ३७ ॥ ३ ॥**

---

अस्थिराः—क्षणक्षयिणो ये पुद्गलास्तेषां स्कन्धेषु हे आत्मन् ! किं रम्यं—सुन्दरं पश्यसि ?, एषु किमपि सुन्दरं नास्तीति मा पश्य इत्यर्थः, स्कन्धेषु किंलक्षणेषु ?—स्त्रिया देहः—शरीरं तस्य पिण्डाकृतिः—सान्द्रो य आकारस्तया संस्थितेषु—संस्थानमापन्नेषु, चर्मास्थ्यादिपदानि सुगमानीति न व्याख्यातानि। "पिण्डो वृन्दे जपापुष्पे, गोले बोलेऽङ्गसिल्हयोः । कवले पिण्डन्तु वेश्मैकदेशे जीवनायसोः ॥ १ ॥ बले सान्द्र" इत्यनेकार्थवचनात् स्कन्धः—समूह इति ॥ ३६ ॥

**रत्न०**—अथाशुचित्वमेव द्रढयति—'**विलोक्ये**'ति, व्याख्या—हे आत्मन् ! दूरस्थमल्पमपि अमेध्यं—शकृदाद्यशुचि वस्तु विलोक्य त्वं जुगुप्ससे—

धनवि०—हे विमूढ !–हे विशेपेण मूर्ख यतस्त्वं दूरस्थम्–अनासन्नमल्पं–किंचिन्मात्रममेध्यं–विष्टादि जुगुप्सनीयं वस्तु विलोक्य–दृष्ट्वा मोटितनासिको–वक्रीकृतनक्रो जुगुप्ससे–जुगुप्सां कुरुपे, तत्–तस्मात्तेनैव–अमेध्येन भृतेपु–भरितेपु योषावपुष्पु–नारीशरीरेष्वभिलापं–वांछां किं कुरुपे ?–किं करोपीत्यर्थः ॥ ३७ ॥ ३ ॥

अथ ललनामोहजनितमिह लोके परलोके चानिष्टफलं दर्शयन्नुपदिशति—

**अमेध्यमांसास्रवसात्मकानि, नारीशरीराणि निषेवमाणाः ।**
**इहाप्यपत्यद्रविणादिचिन्तातापान् परत्रेयूति दुर्गतीश्च ॥ ३८ ॥ ४ ॥**

धनवि०—अमेध्यमांसास्रवसात्मकानि नारीशरीराणि–स्त्रीणामङ्गोपाङ्गरूपाणि निपेवमाणा–नितरामत्यासक्त्या सेवमाना–भजमाना जना इहापि–इह भवेऽप्यपत्यद्रविणादिचिन्तातापान् स्वर्णमापद्वययाचककपिलादिवत् इयूति–प्राप्नुवन्ति, तत्रापत्यानि च–पुत्रीप्रभृतीनि द्रविणानि च–धनानि तान्यादौ–प्रथमं येपां तेऽपत्यद्रविणादयः, आदिपदाद्वस्त्रपात्रभक्ष्यादयस्तेपां चिन्ता–किं भविष्यति कथं

---

जुगुप्सा करोपि, अत्रापिशब्दोऽध्याहार्यः, इत्यमेवार्यप्राप्तेः, किंलक्षणः ?–मोटिता–वक्रीकृता नासिका येन सः, तत्कारणात् हे विमूढ !–हे मूर्खविशेप तैरेवामेध्यैर्भृतेपु योपाणां वपुष्पु–शरीरेष्वभिलापं–वाञ्छां किं कुरुपे ?, अपि तु मा कुर्वित्युपदेशः ॥ ३७ ॥

रत्न०—'अमेध्ये'ति, व्याख्या—नारीणां शरीराणि निपेवमाणाः–सम्भोगद्वारेण सेवमानाः पुरुपा इहापि–इहलोकेऽपि अपत्यं–पुत्रपुत्र्यादिलक्षणं द्रविणं–धनं द्वन्द्वसमासः अपत्यद्रविणे आदौ येपां तानि तथा तेपां चिन्ता–चिन्तनं तया तापान्–सन्तापान् ईयूति–प्राप्नुवन्ति, च पुनः परत्रेति–परलोके

दुर्गति-
कारणता

भविष्यतीत्यादिपीडा तस्यास्तापान्—परितापान् खेदानित्यर्थः; च पुनर्नारीशरीराणि निषेवमाणा जनाः **परत्र**—परभवे **दुर्गतीः**—तिर्यग्नरकगतीरियूति—प्राप्नुवन्ति, अत्र 'ऋ गता'वित्यस्य वर्त्तमाना अन्तीति स्थिते 'ह्वः शिती'तिद्वित्वे 'पृभृ' इति ( ४–१–५८ ) पूर्वस्येत्त्वे 'पूर्वस्यास्वे स्वरे' ( ४–१–३७ ) इति इयि 'इवर्णादेरस्वे स्वरे' ( ४–१–२१ ) इति रत्वे 'अन्तो नो लु'गिति न लोपे च साधु ॥ ३८ ॥

ननु साक्षात्तनुमनोनयनानन्ददायिषु स्नातधौतसुसंस्कृत कान्ताकान्तस्तनजघनवदननयनेषु दृश्यमानेषु केन दृष्टाऽनन्तरोक्ता अमेध्यमांसास्रवसाद्यात्मकतेत्याशङ्कायामुपदिशति—

**अङ्गेषु येषु परिमुह्यसि कामिनीनां, चेतः! प्रसीद विश च क्षणमन्तरेषाम् ।**
**सम्यग् समीक्ष्य विरमाशुचिपिण्डकेभ्यस्तेभ्यश्च शुच्यशुचिवस्तुविचारमिच्छत् ॥ ३९ ॥ ५ ॥**

**धनवि०**—हे **चेतः!**—हे चित्त त्वं **येषु कामिनीनां**—ललनानामङ्गेषु—स्तननितंबाद्यवयवेषु **परिमुह्यसि**—परि सामस्त्येन मोहं यासि, परं हे चेतस्त्वं **प्रसीद**—अस्वस्थतां मुक्त्वा प्रसन्नं भव, च पुनः प्रसन्नभवनानंतरं हे चेतः **एषाम्**—अङ्गानाम**न्तः**—मध्ये स्वमुपयोगद्वारा **विश**—प्रवेशं कुरु, च पुनः प्रवेशानन्तरं **सम्यक्**—समीचीनं यथा स्यात्तथा हे **शुच्यशुचिवस्तुविचारमिच्छत्** हे चेतस्त्वं

---

दुर्गतीः—निरयतिर्यग्लक्षणाः प्रति इयूति, नारीशरीराणि किंलक्षणानि ?—अमेध्यं च मांसं च अस्रं च वसा च अमेध्यमांसास्रवसाः ता एवात्मा—स्वभावो येषां तानि अमेध्यमांसास्रवसात्मकानि—अमेध्यमांसास्रवसारूपाणीत्यर्थः ॥ ३८ ॥

**रत्न०**—'**अङ्गेष्वि**'ति, व्याख्या—हे चेतः!—हे मनः कामिनीनां—स्त्रीणां येष्वङ्गेषु—शरीरेषु त्वं मुह्यसि—मोहग्रस्तं भवसि परं हे चेतस्त्वं प्रसीद—प्रसन्नं भव, प्रसन्नीभूय किं कुर्वित्याह—क्षणं तेषां कामिन्यङ्गानामन्तः—मध्ये विश—प्रविश, प्रविश्य सम्यक् स्वरूपं विचारयेत्यर्थः सम्यक्समीक्ष्य विचार्य च

समीक्ष्य—अक्षेपविशेषोल्लेखनया परामृश्याशुचिपिण्डकेभ्यो—मांसाद्यवयवसञ्चयेभ्यस्तेभ्यः—अङ्गेभ्यः विरम—निवृत्तिं कुरु; अत्र शुचि च
पवित्रमशुचि चापवित्रं वस्तु—अर्थस्तस्य विचार—इदं पवित्रमिदमपवित्रमिति विमर्शस्तं इच्छत्—वाञ्छदिति नपुंसकलिङ्गे एकवचनान्तं
सम्बोधनपदमित्यक्षरार्थो; भावार्थस्तु शुच्यशुचिवस्तुविचारकेण पुरुषेणापवित्रवस्तुभूतेभ्यो नारीशरीरेभ्यो निवृत्तिः कार्येति ॥ ३९ ॥ ५ ॥

नुन स्त्रीशरीरमध्येऽपावित्र्यं भवतु मा वा, परं "मक्षिका शकटं धारा, राजमार्गः प्रदीपनम् । स्त्रीवक्त्रं बालवक्त्रं च, पवित्राणि युगे
युगे" ॥ १ ॥ इति वचनात् स्त्रीमुखादीनि पवित्राणि रमणीयानि च कथं न कमनीयानि भवन्तीत्याशङ्कायामुपदिशति—

**विमुह्यसि स्मेरदृशः सुमुख्या, मुखेक्षणादीन्यभिवीक्षमाणः ।**
**समीक्षसे नो नरकेषु तेषु, मोहोद्भवा भाविकदर्थनास्ताः ॥ ४० ॥ ६ ॥**

धनवि०—स्मेरदृशः सुमुख्या मुखेक्षणादीनि—वदननयनादीनि, आदिपदादधरपयोधरादीन्यभिवीक्षमाणः—अभिमुखं पश्यन्
विमुह्यसि—विमूढो भवसीति, अत्र स्मेरे—विकसिते दृशौ—लोचने यस्याः सा स्मेरदृक् तस्याः, तथा सुष्ठु—शोभनं मुखं यस्याः सा सुमुखी
तस्याः, अत्र परमित्यध्याहारात् परं तेषु प्रसिद्धेषु सप्तसु नरकेषु मोहोद्भवा—मोहोत्थितास्ताः शास्त्रप्रसिद्धा दशविधा भाविकदर्थना—

---

पुनस्तेभ्यः—कामिन्यङ्गेभ्यो विरम—निवर्त्तस्व । किंलक्षणेभ्यः ?—अशुचीनाम्—अपवित्रपुद्गलानां पिण्डकेभ्यः—समूहेभ्यः, किं कुर्वत् ?—इच्छत्, कम्प्रति ?—
शुचि चाशुचि च शुच्यशुचिनी ते च ते वस्तुनी च शुच्यशुचिवस्तुनी तयोर्विचारम्—इमे शुचय इमे अशुचयः पदार्था इति विवेकं कुर्वेदित्यर्थः ॥३९॥

रत्न०—अथ ललनाङ्गनिरीक्षणललनाङ्गभोगयोः फलमाह—**विमुह्यसीति०** व्याख्या—हे आत्मन् ! त्वं स्त्रिया मुखेक्षणादीनि—वदननेत्रप्रभृत्य-
ङ्गान्यभिवीक्षमाणः—संमुखं विलोकयन् विमुह्यसि—मोहं प्राप्नोषि, आदिशब्देनाधरस्तनाद्यवयवग्रहणं, किंलक्षणायाः ?—स्मेरे—उन्निद्रे दृशौ—चक्षुषी यस्याः

भाविक-दर्थना-हेतुता

भविष्यन्नानाप्रकाराः पीडा नो समीक्षसे—नो पश्यसीति, तत्र दशविधा वेदनाश्च नरकेषु शीत १ उष्ण २ क्षुधा ३ तृषा ४ कण्डू ५—परवशता ६ भय ७ शोक ८ ज्वर ९ व्याधि १० स्वरूपा ज्ञेयाः, तत्र नानाप्रकारत्वं च "पञ्चेव य कोडीओ रोगा तह अट्ठसट्ठिल-क्खाणं । णवणउयं च सहस्सा पंचसया हुंति चुलसी उ ॥ १ ॥ इति सप्तमनरके एतावतां रोगाणां सत्त्वादिति ॥ ४० ॥ ६ ॥

अथ स्त्रीशरीरस्वरूपं स्त्रीस्वभावस्वरूपं स्त्रीभोगफलस्वरूपं च दर्शयन्नुपदिशति—

**अमेध्यभस्त्रा बहुरन्ध्रनिर्यन्मलाविलोद्यत्कृमिजालकीर्णा ।**
**चापल्यमायाऽनृतवञ्चिका स्त्री, संस्कारमोहान्नरकाय भुक्ता ॥ ४१ ॥ ७ ॥**

**धनवि०**—**अमेध्यस्य**—विष्ठाया जुगुप्सनीयवस्तुनो वा **भस्त्रा**—चर्मप्रसेविका, चर्मकोथलिकेत्यर्थः, **बहुभिः**—अनेकैरेकादशभिर्वैद्यक-शास्त्रानुसारेण द्वादशभिर्वा **रन्ध्रैः**—छिद्रैर्**निर्यन्**—निर्गच्छन्**मलो**—भुक्ताहारकिट्टं तेना**विला**—मलिना **उद्यंत**—उत्पद्यमानाः **कृमयो**—द्वीन्द्रिया जीवास्तेषां **जालं**—समूहस्तेन **कीर्णा**—व्याप्ता, **चापल्यं** च—चपलता **माया** च—शठता **अनृतं** च—असत्यं तैर्**वञ्चिका**—वञ्चनपरा, **संस्कार-**

---

सा तस्याः, पुनः किंलक्षणायाः ?—सुष्ठु मुखं यस्याः सा तस्याः, स्व्यङ्गेषु नेत्रमुखयोरेव प्राधान्यख्यापनार्थं विशेषणद्वयमुक्ता, परमेतेषु निरयावलिको-पाङ्गप्रज्ञप्तस्वरूपेषु नरकेषु ता निरयावलिकोपाङ्गप्रज्ञप्तास्तप्तायःपुत्रिकालिङ्गनदापनादिकाः भाविन्यश्च ताः कदर्थनाश्च भाविकदर्थनाः—भाविन्यो वेदनाः प्रति नो समीक्षसे—नो पश्यसि, किंलक्षणाः ?— मोहात् स्त्र्याद्यङ्गनिरीक्षणजनितादुद्भवन्तीति मोहोद्भवाः ॥ ४० ॥

**रत्न०**—**अमेध्यभस्त्रेति०** व्याख्या—स्त्री भुक्ता सती नरकाय, नरकगतये इत्यर्थः, स्यात्, कस्मात् ?—संस्कारेण—परिकर्मणा मोहो—रागोत्पत्तिस्तस्मात् पूर्वभवाभ्यासजनितसंस्कारेण स्मृतिबीजेन वा यो मोहस्तस्मात्, स्मृतिबीजं संस्कार इति वचनात् । स्त्री कथम्भूता ? अमेध्यस्य—

मोहात्—संस्कारश्च—अनादिभवानुभूतविपयाविस्मृतिस्तेन मोहो—मौढ्यं तस्माद्भुक्ता—चतुरशीत्यासनकरणादिनाऽतिगृद्ध्या सेविता, एवं-विधा स्त्री नरकाय—नरकदुर्गतये भवति । अमेध्यभस्त्रात्वं "यकृत्छकृन्मलश्लेष्ममज्जास्थिपरिपूरिताः । स्नायुस्यूता वहीरम्याः, स्त्रियश्चर्म-प्रसेविकाः ॥ १ ॥ इत्यादिना स्पष्टं, वहुरन्ध्रनिर्यन्मलाविलत्वं च प्रत्यक्षं, उद्यत्क्रमिजालकीर्णत्वं च "रक्तजाः कृमयः सूक्ष्मा, मृदुमध्याधिशक्तयः । जन्मवर्त्मसु कंडूतिं, जनयन्ति तथाविधाम् ॥ १ ॥ इत्यादि **वात्स्यायन**शास्त्रप्रसिद्धं, चापल्यमायाऽनृतादयो दोषा जगद्विदिता एवेति । संस्कारमोहाद्भुक्ता नरकाय भवतीति "संयसहस्सनारीणं, पोट्टं फाडेइ निग्घिणो । सत्तट्ठमासिए गब्भे, तडप्फडन्ते निकन्तइ ॥ १ ॥ ता तस्स जत्तियं पावं, तत्तिअव्वेव चउगुणं । इक्कइत्थीपसङ्गेणं, साहू वन्धइ मेहुणे ॥ २ ॥ साहुणीए सहस्सगुणं मेहुणेणंसि सेविए । कोडीगुणं विइज्जेणं, तइए वोही विणस्सइ ॥ ३ ॥ आजम्मेणं तु जं पावं, वन्धिज्जा मच्छवन्धओ । वयभङ्गं काउमणस्स, तं चेवऽट्ठगुणं भवे" ॥ ४ ॥ इत्याद्यागमेन स्पष्टमेवेति स्त्री परिहरणीयैवेति ॥ ४१ ॥ ७ ॥

---

अपवित्रवस्तुनो विष्ठादेर्भस्त्रेव—चर्मप्रसेविकेवामेध्यभस्त्रा, पुनः किंलक्षणा ?—वहूनि यानि रंध्राणि—छिद्राणि तेभ्यो निर्यन्तो ये मलास्तैराविला । पुनः ? किं०—उद्यत्—प्रकटीभवद्यत् क्रमीणां—योन्युत्थसूक्ष्मजन्तूनां जालं—समूहस्तेनाकीर्णा—व्याप्ता, पुन० किंल० ?—चापल्यं—चपलता माया—शाठ्यं अनृतं—मिथ्यावचस्तैर्वञ्चिका—वञ्चनकर्त्री ॥ ४१ ॥

---

१ शतसहस्रनारीणां उदरं स्फाटयति निर्घृणः । सप्ताष्टमासान् गर्भान् स्फुरतो निकृन्तति ॥ १ ॥ ततस्तस्य यावत् पापं तावदेव चतुर्गुणं । एकस्त्रीप्रसंगेन साधुर्वध्नाति मैथुने ॥ २ ॥ साध्व्या सहस्रगुणं मैथुन एकशः सेविते । कोटीगुणं द्वितीयेन (द्वितीयवारा) तृतीयवारेण बोधिर्विनश्यति ॥ ३ ॥ आजन्म तु यत् पाप, वध्नीयात् मत्स्यवन्धकः । व्रतभंगं कर्तुमनसः तदेवाष्टगुणं भवेत् ॥ ४ ॥

अथ ललनाममतामोचनद्वारोपसंहाराय ललनानां हीनवस्तूपमेयतां दर्शयन्नुपदिशति—

**निर्भूमिर्विषकन्दली गतदरी व्याघ्री निराह्वो महाव्याधिर्मृत्युरकारणश्च ललनाऽनभ्रा च वज्राशनिः ।**
**बन्धुस्नेहविघातसाहसमृषावादादिसन्तापभूः, प्रत्यक्षाऽपि च राक्षसीतिविरुदैः ख्याताऽऽगमे त्यज्यताम् ॥** ॥ २५ ॥



धनवि०—निर्भूमिः—भूमिरहिता विषकन्दली—विषवल्लरी, च पुनर्गतदरी—गुहारहिता व्याघ्री—सिंही, च पुनर्निराह्वो—निर्नामा महाव्याधिः—महारोगः, च पुनरकारणो—निष्कारणो मृत्युः—मरणं, च पुनः अनभ्रा—वार्दलरहिता आकाशरहिता वा वज्राशनिः—वज्रमयी विद्युत्, च पुनर्बन्धुस्नेहविघातसाहसमृषावादादिसन्तापभूः—बन्धूनां—स्वजनानां स्नेहः—प्रेम तस्य विघातश्च—विनाशः साहसं च—अविमृश्यकारिता मृषावादश्च—असत्यभाषणं ते आदौ येषान्ते बन्धुस्नेहविघातसाहसमृषावादादयस्ते च ते सन्तापाश्च तेषां भूः—भूमिरुत्पत्तिस्थानम्,

---

रत्न०—निर्भूमी विषकंदलीति० व्याख्या—आगमे—सर्वज्ञप्रणीतशास्त्रे इति विरुदैः ख्याता—प्रसिद्धा एवंविधा ललना—स्त्री त्यज्यतां—हीयतां, कर्मोक्तौ युष्माभिरितिकर्तृपदं योज्यं, तानि विरुदान्याह—इयं ललना विषस्य कन्दली—नवाङ्कुरः, कन्दलशब्दस्त्रिलिङ्गः, किंलक्षणा ?—निर्गता भूमिः—उत्पत्तिस्थानक्षितिरस्याः सा निर्भूमिः, अपरा विषकन्दली भूमावुत्पद्यते इयं भूमिरहितेत्यर्थः । पुनरियं व्याघ्री वर्त्तते, किं० ?—गता दरी—गुहा यस्याः सा, अन्या व्याघ्री दर्यां शेते इयं ललना व्याघ्री दरीरहितेति । इयं ललना महाव्याधिः—महान् रोगः, किं० ?—निर्गता आह्वा—नाम यस्य सः, निर्नामको व्याधिरित्यर्थः । ललना मृत्युः—मरणं, किं० ?—न विद्यते कारणम्—अपथ्यासेवनादि यस्य सः, अपरो मृत्युः सकारणो भवति, अयं ललनारूपो मृत्युरकारण एव, च पुनरदृश्यपातत्वात्स्फुलिङ्गवर्षित्वाद्वज्रमिव या अशनिः—विद्युत्, किंलक्षणा ?—न विद्यते अभ्रं—मेघो यस्यां सा अनभ्रा, मेघरहितेत्यर्थः, अपरा अशनिर्मेघसहितेति, अथवा न विद्यते अभ्रम्—आकाशमुत्पत्तिस्थानं यस्याः सा अनभ्रा, अपरा अशनिराकाशे उत्पद्यते इयन्तु आकाशरहितेति, तथा

विषकंद-ल्याद्युपमा

अपि च पुनः प्रत्यक्षा—दृष्टिग्राह्या राक्षसीत्येवंप्रकारैर्विरुदैः—निजगुणतः संप्राप्तनानाभिधानैरागमे—धर्मशास्त्रे ख्याता—प्रसिद्धा ललना—स्त्री हे साधो! त्वया त्यज्यतां—दूरतो मुच्यतामिति; एतेषामुपमानानां ललनाया उपमेयतायां हेतुर्बन्धुस्नेहविघातसाहसमृषावादादिसन्तापभूत्वम्, अत एवंविधोपमानोपमेया ललना त्याज्येति ॥ ४२ ॥ ८ ॥

इति श्रीतपागच्छनायकश्रीमुनिसुन्दरसूरिनिर्मितस्य तत्पट्टपरम्पराप्रभावकपातसाहिश्रीअकब्बरप्रतिबोधकभट्टारकश्रीहीरविजयसूरिश्रीविजयसेनसूरिप्रमुखपट्टपरंपरापरिशीलितस्य षोडशशाखस्याध्यात्मकल्पद्रुमस्याधिरोहणीटीकायां सकलशास्त्रारविन्दप्रद्योतनमहोपाध्यायश्रीकल्याणविजयगणिशिष्योपाध्यायश्रीधनविजयगणिविरचितायां ललनाममतामोचननाम्नी द्वितीया पदपद्धतिः ॥२५॥

---

बन्धवः—स्वजनास्तेषु स्नेहः—प्रेम तस्य विघातो—नाशः साहसम्—अविमृश्यप्रवृत्तिर्मृषावादः—असत्यवचनं ततो द्वन्द्वसमासः, बन्धुस्नेहविघातसाहसमृषावादा आदौ येषां ते च ते सन्तापाश्च तेषां भूः—उत्पत्तिस्थानम्, आदिशब्देनादत्तमैथुनसेवनपरिग्रहमेलनग्रहणं। च पुनर्ललना राक्षसी, किंलक्षणा?—प्रत्यक्षा, अपरा राक्षसी देवरूपत्वाददृश्या भवति इयं च साक्षाद्दृश्यमानेत्यन्वयः ॥ ४२ ॥ ८ ॥ इति ललनाममत्वमोचनाख्यो द्वितीयोऽधिकारः।

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धुलब्धप्रतिष्ठवरवाचकरत्नचन्द्रः। अध्यात्मकल्पफलदस्य चकार वृत्तिं, तत्रागमच्च किल नेत्रमितोऽधिकारः ॥१॥

## ३ अपत्यममतामोचनाधिकारः ॥



अनन्तरद्वारे स्त्रीममतामोचनमुद्दिष्टं, परं स्त्रीममतामोचनेऽपत्यानि कुतो भवन्तीत्याशंकायामपत्यममतामोचनद्वारमप्युपदिशन्नाह—

**अथापत्याधिकारः ।**

अथापत्याधिकार इत्यथापत्यममतामोचनाधिकार उपदेशविषयः क्रियते इत्यर्थः । तत्र प्रथममपत्यानां बन्धनरूपतां दर्शयन्नुपदिशति—

**मा भूरपत्यान्यवलोकमानो, मुदाऽऽकुलो मोहनृपारिणा यत् ।**
**चिक्षिप्सया नारकचारकेऽसि, दृढं निबद्धो निगडैरमीभिः ॥ ४३ ॥**

धनवि०—तदित्यध्याहारात् तत्—तस्माद्धे आत्मन्! त्वमपत्यानि—पुत्रपुत्र्यादीन्यवलोकमानः—पश्यन् मुदाकुलो—हर्षाकुलो मा भूः—मा भव, यद्—यस्मान्मोहनृपारिणा—मोहनामनृपलक्षणेन वैरिणा नारकचारके—नरकरूपकारागृहे चिक्षिप्सया—क्षेप्तुमिच्छया निगडैः—लोहशृङ्खलाप्रायैरमीभिरपत्यैर्दृढं—गाढं निबद्धो—नियन्त्रितोऽसि, निगडनियन्त्रितस्यानन्दितत्वमार्द्रकुमारादिनिदर्शनेन युक्तियुक्तमिति॥४३॥१॥

---

रत्न०—अथापत्यममत्वमोचनाख्यस्तृतीयोऽधिकारो व्याख्यायते । प्रथममपत्योपरि मोहं मा कुर्वित्याह—मा भूरिति, व्याख्या—हे आत्मन्! त्वमपत्यानि—पुत्रीपुत्रान् विलोकमानो मुदा—प्रेम्णा आकुलो मा भूः—भव यत्कारणात्त्वं मोहनामा नृपः स एवारिस्तेन नारकाणां चारके प्रक्षेप्तुमिच्छया अमीभिरपत्यैर्निगडैः—हिञ्जीरैर्दृढं बद्धोऽसि । अपरो राजादिः कंचन जनं चारके प्रक्षेप्तुमिच्छुः प्रथमं पादपाशेन नियन्त्रयति पश्चाद्वन्दिगृहे प्रतिक्षिपतीति, नारका यत्र प्रक्षिप्यन्ते स नारकचारक इत्युच्यते इति ॥ ४३ ॥ १ ॥

अपत्यानां शल्यता

अथेह लोके परलोके च पुनरपत्यानां शल्यरूपतां दर्शयन्नुपदिशति—

**आजीवितं जीव! भवान्तरेऽपि वा, शल्यान्यपत्यानि न वेत्सि किं हृदि ?।**
**चलाचलैर्यैर्विविधार्त्तिदानतोऽनिशं निहन्येत समाधिरात्मनः ॥ ४४ ॥ २ ॥**

धनवि०—हे जीव! आजीवितं—जीवितपर्यन्तं वा—अथवा भवान्तरे—परभवेऽपि तान्यपत्यानि—पुत्रपुत्र्यादीनि हृदि—हृदये शल्यानि लोहकील्कादिप्रायाणि किं न वेत्सि?—किं न जानासि, यैरपत्यैश्चलाचलैः सद्भिर्विविधार्त्तिदानतो—नानाप्रकारचित्तपीडाप्रदानतः आत्मनः—स्वस्य समाधिः—चेतःस्वास्थ्यमनिशं—निरन्तरं निहन्येत—विनाशविपयीक्रियेतेति; अत्र चलानि च—स्वल्पायूंपि अचलानि—वह्वायूंपि चलाचलानि तैः, अथवा चलाचलैः—चपलैरिति, भावार्थस्तु स्वल्पायुष्कैरप्यपत्यैः शोकरूपार्त्तिर्दीयते, वह्वायुष्कैरपि पाणिग्रहणाद्यनेकप्रकरणेषु वित्तव्ययाद्यनेकार्त्तिर्दीयते; यद्वा चपलान्यपत्यानि प्रायः कुकर्मकराणीहलोके पित्रोश्चेतःस्वास्थ्याभावापादकानि भवन्ति, तत्रापि विशेषतः पुत्री, यतः—[1]जम्मंतीए सोगो वड्ढन्तीए पवड्ढए चिन्ता। परिणीयाए दण्डो दुहियपिया निच्चदुहियव ॥१॥ (किंच) नियगिहसोसणि परगेहमण्डणी कलिकलंककुलभवणं। जेण न जाया धूया ते सुहिया जीवलोगम्मि ॥२॥ इहलोके च चेतःस्वास्थ्या(भावा)पादकत्वे परलोके चेतःस्वास्थ्याभावापादकत्वं सुतरां सिद्धम्, अंते या मतिः सा गतिरितिन्यायादिति ॥ ४४ ॥ २ ॥

रत्न०—अथापत्यानामुपमानान्तरेण जीवं प्रतिवोधयन्नाह—आजीवितमिति० व्याख्या—हे जीव! जीवितं मर्यादीकृत्याजीवितं वा—अथवा भवान्तरेऽपि—प्रेत्यभवेऽपि हृदि—हृदये अपत्यानि शल्यानि किं न वेत्सि?, अपितु शल्यान्येव विद्धीत्यर्थः। अथवा शल्यधर्मं निरूपयन्नाह—यैरपत्यलक्षणैः

[1] जायमानायां शोको वर्धमानायां प्रवर्धते चिन्ता। परिणीतायां दण्डो दुहितृपिता नित्यं दुःखित एव ॥ १ ॥ निजगृहशोषणा परगृहमण्डना कलिकलंककुलभुवनं। येन न प्रसूता दुहिता स सुखितो जीवलोके ॥ २ ॥

नन्तु स्वोदरोत्पन्नेष्वपत्येषु ममतामोचनं कथं क्रियते इत्याशङ्कायां स्वोदरोत्पन्नाः कीटकादयोऽपि भवन्तीति कृमिसाम्यं दर्शयन्नपत्यममतामोचनमुपदिशन्नाह—

**कुक्षौ युवत्याः कृमयो विचित्रा, अप्यस्रशुक्रप्रभवा भवन्ति।**
**न तेषु तस्या नहि तत्पतेश्च, रागस्ततोऽयं किमपत्यकेषु ? ॥ ४५ ॥ ३ ॥**

**धनवि०—युवत्याः**—स्त्रियाः **कुक्षौ**—गर्भाशयेऽस्रशुक्रप्रभवा—रजोरेतःसम्भवा **विचित्रा**—नानाप्रकाराः **कृमयो**—द्वीन्द्रियादयः कीटा अपि **भवन्ति**—जायन्ते, हि यतः कारणात्तेषु—कृमिषु **तस्या**—युवत्यास्तत्पतेश्च—भर्तुर्न **रागो** भवतीति, ततः कारणादपत्यकेषु—कुत्सितसन्तानेषु तात्त्विकोपकारकर्तृत्वाभावेन कुत्सितकृमिसमानसन्तानेषु किं रागः क्रियते इति ? ॥ ४५ ॥ ३ ॥

---

शल्यैर्विविधार्त्तिदानतो—नानाचिन्ताप्रदानतः आत्मनो—जीवस्य समाधिः—स्वास्थ्यं निहन्येत, यतः कि० ?—चलाचलैः—अतिचपलैः, अन्यान्यपि शल्यान्यतिचपलानि दुःखदायीनि भवन्ति। अत्र पालनाशनवस्त्रप्रदानविवाहवधूसीमन्तकरणपौत्रप्रपौत्रीतत्पालनादिका अर्त्तयो ग्राह्या इति ॥४४॥२॥

**रत्न०**—अथापत्यानां कृम्युपमादानेन रागापनयनमाह—**कुक्षौ युवत्या०** इति, व्याख्या—युवत्याः कुक्षौ—गर्भे कृमयोऽपि विचित्रा भवन्ति, किंलक्षणाः ?—अस्रं—रुधिरं स्त्रिया योनिसम्बन्धि शुक्रं—रेतः कामुकपुंसः सम्बन्धि ताभ्यां प्रभवा—उत्पत्तिमन्तः, यत उक्तं—"[1]इत्थीण जोणिमज्झे हवन्ति बेइन्दिया उ जे जीवा। इक्को व दो व तिन्नि व लक्खपुहुत्तं च उक्कोसा" ॥ १ ॥ गर्भजाः संमूर्च्छजाश्च पञ्चेन्द्रियास्त्वन्ये इति। तेषु कृमिषु तस्या युवतेस्तत्पतेश्च रागो न भवति, ततोऽयं रागः अपत्यकेषु किं भवति ?, काक्वा प्रश्नः, यदि रागो युक्तस्तदा कुक्षिजत्वात्तेष्वपि युक्तः, यदि न करणीयस्तदाऽपत्येष्वपि न करणीयः, तेनैकत्र न जायते, तत्रार्थे काकूक्त्या प्रश्नः ॥ ४५ ॥ ३ ॥

---

१ स्त्रीणां योनिमध्ये भवन्ति द्वीन्द्रिया ये जीवाः। एको वा द्वौ वा त्रयो वा लक्षपृथक्त्वं चोत्कर्षात् ॥ १ ॥

अनन्तसंब-
न्धादि

अथापत्यममतामोचनद्वारोपसंहारायापत्यममताऽसाधारणकारणस्नेहनिरासकरणकारणानि त्रीणि दर्शयन्नुपदिशति—

**त्राणाशक्तेरापदि सम्बन्धानंत्यतो मिथोऽङ्गवताम् । सन्देहाच्चोपकृतेर्माऽपत्येषु स्निहो जीव ! ॥ ४६ ॥ ४ ॥**

**त्राणाशक्तेरापदि सम्बन्धानंत्यतो मिथोऽङ्गवताम्** । आपदि—आपदायामापतितायां सत्यां त्राणाशक्तेः—पालनासामर्थ्यात्, च पुनः अङ्गवतां—देहिनां मिथः—परस्परं

धनवि०—हे जीव ! आपदि—आपदायामापतितायां सत्यां त्राणाशक्तेः—पालनासामर्थ्यात्, च पुनः उपकृतेः—वार्द्धक्ये पालनलक्षणस्योपकारस्य सन्दे-

सम्बन्धानन्त्यतः—अनन्तभवभावित्वेन पितृत्वपुत्रत्वादिसम्बन्धस्यानन्त्यात्, अपत्येषु—पुत्रपुत्र्यादिषु मा

हात्—कः पूर्वं मरिष्यति ? कश्च पश्चान्मरिष्यतीत्यादिना अग्रे सुपुत्रः कुपुत्रो वा भविष्यतीत्यादिना वा संशयात्, 'पीयं थणयच्छीरं सायरसलिलाउ

स्निहः—स्नेहं मा कुर्या इत्यक्षरार्थः । भावार्थस्तु कर्मजनितायामापत्तावापतितायां सत्यामत्रायकत्वेन वृद्धावस्थायामुपकारकत्वस्य संशयेनापत्येषु

हुज्ज बहुययरं । संसारम्मि अणंते माऊणं अन्नमन्नाणं[1] ॥ १ ॥ इत्यादिना सम्बन्धस्यानन्त्येन

ममतां त्यज समतां च भजेति ॥ ४६ ॥ ४ ॥

इति श्रीतपागच्छनायकश्रीमुनिसुन्दरसूरिनिर्म्मितस्याध्यात्मकल्पद्रुमस्याधिरोहणीटीकायां सकल०

उ० श्रीधनविजयगणिविरचितायामपत्यममतामोचननाम्नी तृतीया पदपद्धतिः ॥ ३ ॥

व्याख्या—हे जीव ! त्वमपत्येषु मा स्निहः—स्नेहं

रत्न०—अथापत्यतः स्वार्थपूर्तिरेव रागकारणं भविष्यतीति निरूपयन्नाह—**त्राणाशक्तेरापदीति**, आपदि—मरणलक्षणायां विपदि अन्यस्यां वा रोगादिकायां आपदि अपत्यानि

मा कृथाः, कस्याः ?—त्राणाय—रक्षणायाशक्तेः—असामर्थ्यात्, कस्याम् ?—आपदि—मरणलक्षणायां विपदि अन्यस्यां वा रोगादिकायां आपदि अपत्यानि

1 अनन्ते संसारे अन्यान्यासां मातृणां (यत्) स्तनजक्षीरं पीतं (तत्) समुद्र (स्वयंभूरमण) सलिलाद् भवेद् बहुतरम् ॥१॥ (उपदेशमाला २०१)

## ४ धनममतामोचनाधिकारः ।

नन्वनन्तरमपत्यममतामोचनद्वारमुक्तं, परमपत्यममतामोचने धनं विद्यमानं कस्याधीनं क्रियते ? इत्याशङ्कायां द्रव्यममतामोचनद्वारमुपदिशन्नाह—

**अथ धनाधिकारः ॥ अथ धनाधिकार** इति अथापत्यममतामोचनाधिकारमुपदिश्य द्रव्यममतामोचनाधिकार उपदिश्यत इत्यर्थः । तत्र द्रव्यस्य प्रथमं पापाधिकरणत्वं दर्शयन् तस्य ममतात्यागमुपदिशति—

**याः सुखोपकृतिकृत्त्वधिया त्वं, मेलयन्नसि रमा ममताभाग् ।**
**पाप्मनोऽधिकरणत्वत एता, हेतवो ददति संसृतिपादम् ॥ ४७ ॥ १ ॥**

**धनवि०—सुखोपकृतिकृत्त्वधिया** सुखं च—अहं लक्ष्मीवान् इत्यादि मानसं सौख्यमुपकृतिश्च—स्वजनपोषणादिलक्षण उपकारस्तयोः

---

मातरौ पितरौ प्रति रक्षितुं न शक्तानि भवन्तीति, च पुनरुपकृतेः—उपकारस्य सन्देहात्, कुतो?—मिथः—परस्परमङ्गवतां—देहभाजां सम्बन्धानां मातृपितृपुत्रभ्रातृलक्षणानामानन्त्यतः—अनन्तत्वतो न जाने कः कस्योपकारं करिष्यतीति सन्देहस्तस्माद्, यश्च पिता स एवानन्तशः पुत्रो जातः, य एव पुत्रः स एवानन्तशः पिता जात इति, सर्वेषां सम्बन्धानामानन्त्यमागमवचनाद्व्यवहारमात्रतोऽवसेयं । इह भवे पितापुत्रयोर्वैरिसम्बन्धेनोत्पन्नयोरुपकारं प्रति सन्देह एव यथा श्रेणिकाशोकचन्द्रयोरिति स्नेहं मा कृथा इत्युपदेशः ॥ ४६ ॥ ४ ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धुलब्धप्रतिष्ठवरवाचकरत्नचन्द्रः। अध्यात्मकल्पफलदस्य चकार टीकां, तत्राधिकार इति पूर्त्तिमगात्तृतीयः ॥३॥

द्विडुपकारिं तादि

कर्तृत्वबुद्ध्या, यद्वा सुखस्योपकारकत्वबुद्ध्या, **ममताभाग्**—ममेदमिति ममत्ववान् सन्, **या रमाः**—कमलास्त्वं **मेलयन्**—स्वकीयत्वकरणा-
दिना सञ्चयीकुर्वन्नसि—वर्तसे, **परम(परं पाप्मनोऽ)धिकरणत्वतः**—अधिक्रियते आत्मा नरकादिषु याभिरित्यधिकरणं तस्य भावस्तत्त्वं
तस्मात्, तथा पापोपकरणत्वत इत्यर्थः, **पाप्मनः**—पापस्य परस्त्रीगमनादिलक्षणस्य महारम्भमहापरिग्रहादिलक्षणस्य वा दुष्कृतस्य, **हेतवो**—
निमित्तभूताः कमलाः **संसृतिपातं**—संसारे पतनं मम्मणस्येव **ददति**—प्रयच्छन्तीत्यर्थः ॥ ४७ ॥ १ ॥

ननु 'धनैर्दुष्कुलीनाः कुलीनाः क्रियन्ते, धनैरेव पापात्पुनर्निस्तरन्ति । धनेभ्यो विशिष्टो न लोकेऽस्ति कश्चिद्धनान्यर्जयध्वं धनान्यर्ज्ज-
यध्वम् ॥ १ ॥ इति वचनात्कथं ममतामोचनं क्रियते इत्याशङ्कायां द्रव्यस्यासारतां दर्शयन्नुपदिशति—

**यानि द्विषामप्युपकारकाणि, सर्पोन्दुरादिष्वपि यैर्गतिश्च ।**
**शक्या च नापन्मरणामयाद्या, हन्तुं धनेष्वेषु क एव मोहः ? ॥ ४८ ॥ २ ॥**

---

**रत्न०**—अथ तुर्यो धनममत्वमोचनाधिकारो व्याख्यायते । तत्र प्रथमं धनात्सुखोपकृती भवत इति मा चिन्तयेत्युपदिशति—**याः सुखोप-
कृतीति०**, व्याख्या—हे जीव! त्वं या रमा—लक्ष्मीः प्रति मेलयन्नसि—सञ्चयन्नसि, त्वं कीदृशः ?—ममतां—ममत्वं भजसीति ममताभाक्, कया !—
सुखं चोपकृतिश्च सुखोपकृती ते कुर्वन्तीति सुखोपकृतिकृतः सुखोपकृतिकृतां भावः सुखोपकृतिकृत्त्वं तस्य धीः—बुद्धिस्तया, रमाः स्वस्य
कुटुम्बस्य च सुखकृतो भवन्ति परेषां दीनानाथानां चोपकृतिकृतो भवन्तीतिबुद्ध्येत्यर्थः, परमेता रमाः संसृतौ—संसारे पातं—पतनं ददति । एतेषां
संसृतिपाते कुतः शक्तिरित्याह—एताः किं० ?—हेतवः—कारणानि, कस्य ?—पाप्मनः—पापस्य, कुतः ?—अधिकरणत्वतः, प्रायो लक्ष्म्यः पापाधिकरणमेव
भवंति तरवारिप्रभृतिशस्त्रवत्, केषाचिद्धन्यानामेव पुण्याधिकारिण्यो भवन्ति, तस्माद्बहुसावद्यकर्मभिर्लक्ष्मीमेलनं न युक्तिमदिति ॥ ४७ ॥ १ ॥

**धनवि०**—यानि धनानि **द्विषामपि**—वैरिणामप्युपकारकाणि—उपकारकर्तॄणि परशुरामादिधनानि सुभूमादीनामिव भवन्ति, च पुनर्यैर्धनैः **सर्पोन्दुरादिष्वपि**—भुजगमूषकादिष्वपि सुरप्रियस्येव **गतिस्तिर्यग्**लक्षणा भवतीति, च पुनर्यैर्धनै**र्मरणामयाद्या**—मृतिरोगादिका **आपद्**—आपदा हन्तुं—निराकर्तुं **न शक्या**—न शक्यते तेषु—एष्वनन्तरोक्तेषु **धनेषु एव**—निश्चये **को मोहो**—ममतालक्षणः कर्त्तव्य इति ?, अत्र किंशब्दः कुत्सावाची वाच्यः ॥ ४८ ॥ २ ॥

ननु धनस्य द्विपदुपकारकत्वादिदोषोऽस्तु, परं ममत्वबुद्ध्या मनःप्रसादसुखं तु भवतीत्याशङ्कायामाह—

**ममत्वमात्रेण मनःप्रसादसुखं धनैरल्पकमल्पकालम् ।**
**आरम्भपापैः सुचिरं तु दुःखं, स्याद्दुर्गतौ दारुणमित्यवेहि ॥ ४९ ॥ ३ ॥**

**धनवि०**—**ममत्वमात्रेण**—ममेदं धनं ममेदं गृहमित्यादिममतामात्रेण **धनैः**—द्रव्यैरल्पकं—कुत्सितमल्पमल्पकं—ईषत्तरमात्रं **अल्पका-**

---

**रत्न०**—अथ धनेभ्योऽनर्थपरम्परामाह—**यानि द्विषामपीति०**, व्याख्या—यानि धनान्यर्जितानि—सञ्चितानि द्विषां—वैरिणामप्युपकारकाणि भवन्ति—उपयोगानि भवन्ति, सञ्चयिनं निहत्य वैरिणो गृह्णन्तीत्यर्थः । च पुनर्यैः सर्पोन्दुरादिष्वपि गतिः—भवान्तरप्राप्तिर्भवति, सञ्चयी पुमान् धनमोहात् सर्पोन्दुरादिषु योनिषु मृत्वोत्पद्यते इति, च पुनर्यैर्धनैरापत्—मरणामयाद्या विपद्धन्तुं—निवारयितुं न शक्या, अवश्यंभाविनो मरणरोगादयो भावा भवन्त्येवेति भावः, ब्रह्मदत्तचक्रिण इव, तत एवंविधेषु धनेषु हे आत्मन् ! क एव मोहः ?, अपितु न कोऽपि, निरर्थ एवेति भावः ॥४८॥२॥

**रत्न०**—अथ धनेभ्यः सुखस्याल्पत्वं दुःखस्य भूयस्त्वमाह—**ममत्वमात्रेण मनःप्रसाद०**, व्याख्या—धनैर्हेतुभिर्ममत्वमात्रेण मनसः—चेतसः

लमू–अल्पः कालः–समयो यस्य तदल्पकालम्–अल्पकालीनं **मनःप्रसादसुखं**–चित्तप्रसन्नतालक्षणं सौख्यं स्याद्–भवति, तु पुनरारंभपापैः–द्रव्यार्जनार्थं षट्कायाद्युपमर्दजनितदुष्कृतैर्**दुर्गतौ**–नरकादिगतौ **सुचिरम्**–अतिचिरकालं **दारुणम्**–अतिभयंकरं **दुःखं स्याद्**–भवति, इति–अमुना प्रकारेणोक्तं सम्यग्–**अवेहि** जानीहीत्यर्थः, भावार्थस्तु द्रव्यममतामात्रेणोत्कृष्टं शतवर्षमात्रं सुखं भवति, द्रव्यार्ज्जनाजन्यपापैस्तूत्कृष्टं त्रयस्त्रिंशत्सागरोपमाणि यावन्नरकगतौ दुःखं भवतीति सम्यक्प्रकारेण ज्ञात्वा द्रव्यममतां मुंचेति ॥ ४९ ॥ ३ ॥

ननु द्रव्यस्तवसाधनं धनं कथं दुर्गत्यै इत्याशङ्कायामाह—

**द्रव्यस्तवात्मा धनसाधनो न, धर्मोऽपि सारंभतयाऽतिशुद्धः।**
**निस्संगतात्मा त्वतिशुद्धियोगान्मुक्तिश्रियं यच्छति तद्भवेऽपि ॥ ५० ॥ ४ ॥**

**धनवि०—द्रव्यस्तवात्मा**–द्रव्यस्तवः पूजाप्रासादप्रतिमाप्रतिष्ठादिको "भावकारणं द्रव्य"मितिवचनात् स एवात्मा–स्वरूपं यस्य स तथा, **धनसाधनो**–धनं–स्वर्णादिकमेव साधनं–निमित्तं यस्य स तथा, सहारंभेन–षट्कायाद्युपमर्द्देन वर्त्तते यः स तथा तस्य भावस्तत्ता

---

प्रसादः–प्रसत्तिः स्यात्, परं धनैः सुखमल्पकं–स्तोकं, तदप्यल्पकालं भवति, अथवा मनःप्रसादलक्षणं सुखमल्पकमल्पकालं भवति, दुःखं तुरिति विशेषे, आरम्भेभ्यः पापैरारम्भपापैः–षट्कायोपमर्दादिजनितैः सुचिरं–चिरकालं दुर्गतौ–तिर्यग्नरकादौ दुःखं स्यात्, किंलक्षणं?–दारुणं–भयावहं हे आत्मन्! इति त्वमवेहि–जानीहि, यथा नवानामपि नंदराजानाम् ॥ ४९ ॥ ३ ॥

**रत्न०—**अथ द्रव्यस्तवात्मा धर्मो धनैरेव भवतीति धनसञ्चयः कर्त्तव्य इति विचारोऽपि न सम्यगित्याह–**द्रव्यस्तवात्मेति०**, व्याख्या—

तया सारंभतयेति, एतावता धनप्रभवः पूजादिधर्मोऽपि किंचिदारंभकलंकितत्वान्निष्कलंको न भवतीति; तु पुनर्निःसंगतात्मा धर्मोऽतिशुद्धियोगात्तद्भवेऽपि मुक्तिश्रियं—मोक्षलक्ष्मीं यच्छति—ददातीति; अत्र निस्संगतात्मा निर्गतः संगो—धनधान्यादिर्नवविधः परिग्रहो यस्मात्स तथा तस्य भावस्तत्ता सैवात्मा—स्वरूपं यस्य स तथा, अतिशुद्धियोगाद्—अतिशयेन शुद्धिः—निष्कलंकता तस्या योगात्—संबंधात्तद्भवेऽपि—स एव भवो—जन्म तद्भवस्तस्मिन्, अत्रापिशब्दो वैलक्षण्यद्योतको, वैलक्षण्यं चेदं—द्रव्यस्तवात्मा धनसाधनो धर्मो भवान्तरे मुक्तिप्रापको भवति, निस्संगतात्मा तु धर्मस्तपःसंयमरूपो भवान्तरे तद्भवे वा मुक्तिप्रापको भवतीति ॥ ५० ॥ ४ ॥

अनंतरं यतीनुपदिश्य गृहस्थोद्देशेन ममतात्यागमुपदिशति—

**क्षेत्रवास्तुधनधान्यगवाश्वैर्मेलितैः सनिधिभिस्तनुभाजाम् ।**
**क्लेशपापनरकाभ्यधिकः स्यात्को गुणो न यदि धर्मनियोगः ? ॥ ५१ ॥ ५ ॥**

धनवि०—क्षेत्राणि च—शालीक्षुप्रमुखकेदाराः वास्तूनि च—गृहाट्टहट्टप्रभृतीनि धनानि च—स्वर्णरूप्यादीनि धान्यानि च—व्रीह्यादीनि

---

जिनप्रासादकारणजिनबिंबप्रतिष्ठाजिनविम्बार्चनादिर्द्रव्यस्तवः स एवात्मा—स्वरूपं यस्य स द्रव्यस्तवात्मा धर्मोऽपि सारम्भतया—आरम्भसहितत्वेन नातिशुद्धो—नातिनिर्मलो वर्त्तते, तज्जनितशुभकर्मणां स्वर्गादौ भोग्यत्वात्, सर्वस्यापि संसारसुखस्य दुःखत्वेनोक्तत्वादिति । किल० ?—धनान्येव साधनं—कारणं यस्य स धनसाधनः, धनैरेव साध्य इत्यर्थः, तुरिति विशेषे, निस्सङ्गता—निरीहता एवात्मा—स्वरूपं यस्य स निस्सङ्गतात्मा धर्मोऽतिशुद्धः, आरम्भरहितत्वेन पापमलाभावान्निर्मलताया योगात्, निस्सङ्गतात्मना धर्मेण केवलं कर्मनिर्जरणमेव भवतीति विशुद्धत्वमेवेत्यर्थः, तेन स एव भवो—वर्त्तमानो भवस्तस्मिन्नपि मुक्तिश्रियं यच्छति—ददातीति ॥ ५० ॥ ४ ॥

गावश्च—धेनुवेनुपतयः अश्वाश्च—तुरंगमा उपलक्षणाद् गजरथपदात्यादयस्तैस्तथा, किंभूतैः ?—सनिधिभिः—निधानसहितैर्मेलितैः—संचितैस्तनुभाजां—देहिनां क्लेशश्च—शरीरश्रमः पापानि च—पंचाश्रवसेवनादीनि नरकाश्च प्रसिद्धास्तेभ्योऽधिकः—अतिरिक्तस्तदेत्यध्याहारात् को गुणः ?—को विशेपलाभो भवतीत्यक्षरार्थः यदि—चेद्धर्मनियोगो—धर्मस्थाने व्यापारो न भवेदिति ॥ ५१ ॥ ५ ॥

अथ परिग्रहपरिमाणव्रतांगीकारेण ममतात्यागमुपदिशन्नाह—

**आरंभैर्भरितो निमज्जति यतः प्राणी भवांभोनिधावीहंते कुनृपादयश्च पुरुषं येन च्छलाद्बाधितुम् ।**
**चिंताव्याकुलताकृतेश्च हरते यो धर्मकर्मस्मृतिं, विज्ञा! भूरिपरिग्रहं त्यजत तं भोग्यं परैः प्रायशः ॥ ५२ ॥ ६ ॥**

रत्न०—अथ भूरिपरिग्रहः पापायैवेति द्रढयन्नाह—क्षेत्रवास्त्विति०, व्याख्या—तनुभाजां—प्राणिनां क्षेत्रवास्तुधनधान्यगवाश्वैः परिग्रहैः कृत्वा क्लेश १ पाप २ नरके ३ भ्योऽधिकः को गुणः स्याद् ?, अपितु न कोऽपि गुणः स्यादित्यन्वयः, पूर्वं क्लेशः १ पश्चात्पापं २ तदनु नरक ३ इति त्रयो गुणाः परिग्रहस्येति सूचितम्, अत्र गुणशब्दो लक्षणया ग्राह्य इति । अथ पदव्याख्या—क्षेत्रं—सेतुकेतूभयात्मकं वास्तु—गृहाट्टादि धनं—श्रीफलपूगादि गणिमधरिममेदाद्धान्यं—गोधूमादि चतुर्विंशतिधा गवाश्वैरिति गावोऽश्वाश्च ततो द्वन्द्वसमासस्तैः क्षेत्रवास्तुधनधान्यगवाश्वैः, उपलक्षणान्महिष्युष्ट्राजोरभ्रादीनामपि ग्रहणं, किंलक्षणैः ?—मेलितैः—स्थाने २ वृन्दतामापादितैः, पुनः किल० ?—सनिधिभिः—निधानसहितैरिति कथनेन रूप्यस्वर्णमण्यादयो गृहीताः, निधयस्तु तैरेव भवन्तीति, यदि परं धर्मे नियोगो—नियोजनं व्यापारणं, धर्मे नियोगो न, तस्य परिग्रहस्य यदि धर्मे चैत्योपाश्रयसाधर्मिकपोषज्ञानभाण्डागारकरणादिलक्षणे नियोगो—व्यापारणं स्यात्तदा कश्चिद्गुणोऽप्यस्तीति भावः । अत्र स्वर्गादिसुखप्राप्तिलक्षणो गुणः सूचित इति ॥ ५१ ॥ ५ ॥

**धनवि०**—**यतः** परिग्रहात् **प्राणी**—जीवः **आरंभैः**—षट्कायाद्युपमर्दै**र्भरितो**—व्याप्तो **भवांभोनिधौ**—संसारसमुद्रे **निमज्जति**—त्रुडति, च पुन**र्येन** परिग्रहेण **कुनृपादयः** आदिपदाच्चौरनटविटादयः पुरुषाः परिग्रहवंतं **पुरुषं च्छलाद्**—आज्ञाभंगादिच्छलं प्राप्य **बाधितुं**—बाधां कर्तुमीहंते, वांछंतीत्यर्थः, च पुन**र्यः** परिग्रह**श्चिंताव्याकुलताकृतेः**—चिंता—परिग्रहस्याप्राप्तस्यार्जनोपायपरिचिंतनं प्राप्तस्य परिरक्षणोपायपरिचिंतनं च तेन व्याकुलता—अस्वास्थ्यं तस्य कृतेः—करणा**द्धर्मकर्मस्मृतिं**—धर्मस्य कर्माणि—कार्याणि देवगुरुवंदनादीनि तेषां कर्तुमुद्दिष्टानां स्मृतिं—स्मरणं हरते—अपनयतीत्यर्थः, **भो विज्ञा!**—भोः पण्डितास्तस्मात्तं यच्छन्दप्रदर्शितस्वरूपं **प्रायशो**—बाहुल्येन **परैरा**त्मव्यतिरिक्तै**र्भोग्यं**—परिभोगयोग्यं **भूरिपरिग्रहं**—मूर्च्छया बहुधनधान्यादिसंग्रहं **त्यजत**—परिहरतेत्यर्थः ॥ ५२ ॥ ६ ॥

---

**रत्न०**—यतो—यस्मात्कारणादारम्भैः—सावद्यव्यापारेण जीवोपमर्दादिजातैर्भरितः—पूर्णः प्राणी भवाम्भोनिधौ—संसारसमुद्रे निमज्जति, अन्योऽपि गाढं भारवान् पदार्थः समुद्रे निमज्जतीति, च पुनर्येन परिग्रहेण कुनृपादयो—दुष्टराजाद्याः, आदिशब्देन दुष्टमन्त्र्यारक्षकान्यनियोगिनां ग्रहणं, पुरुषं प्रति छलाद्—अन्यायाभावेऽपि च्छलग्रहणेन बाधितुं—पीडितुमीहन्ते—वाञ्छन्ति, च पुनर्यः परिग्रहश्चिन्ताभिः—धनार्जनरक्षणादिजनितचिन्ताभिर्व्याकुलता—व्यग्रत्वं तस्याः कृतेः—करणतो धर्मकर्मणोः स्मृतिं हरते, चिन्ताव्याकुलचित्तस्य धर्मकर्मा(र्मणी अ)पि न स्मरतीति, अथवा धर्मस्य कर्मण इति तत्पुरुषसमासः कार्यः । हे विज्ञा!—हे दक्षाः यूयं तं भूरिपरिग्रहं त्यजत, कीदृशं?—भोग्यं—भोगार्हं, कैः?—परैरर्जकादित्यर्थः, कथं?—प्रायशः—प्रायेण, द्रव्यस्यार्जको भिन्नो भोक्तारस्त्वन्ये भवन्तीत्यर्थः, यतः—"कीटिकासञ्चितं धान्यं, मक्षिकासञ्चितं मधु । कृपणैः सञ्चितं वित्तं, परैरेवोपभुज्यते ॥ १ ॥ इति, यथा सोढताद्दक्कष्टपरम्परयोगिगृहीतसिद्धरसभोक्ता वलभीवासी रंकः श्रेष्ठी जात इति ॥ ५२ ॥ ६ ॥

अथ द्रव्यममतामोचनद्वारमुपसंहरन् तर्करीत्या धर्मस्थानेऽव्यापृतस्य द्रव्यस्य दोपान् दर्शयितुमुपदिशति—

**क्षेत्रेषु नो वपसि यत् सदपि स्वमेतद्याताऽसि तत् परभवे किमिदं गृहीत्वा ? ।**
**तस्यार्जनादिजनिताघचयार्जितात्ते, भावी कथं नरकदुःखभराच्च मोक्षः ? ॥ ५३ ॥ ७ ॥**

धनवि०—यदेतत्प्रत्यक्षेण दृश्यमानं सदपि–विद्यमानमपि स्वं–द्रव्यं क्षेत्रेषु–जिनभवनबिंबपुस्तकसाधुसाध्वीश्रावकश्राविकारूपेषु सप्तसु प्रतिष्ठातीर्थयात्रासहितेषु नवसु वा नो वपसि–नो बीजसंततिं कुरुषे तर्हि तदिदं दृश्यमानं धनं गृहीत्वा–लात्वा परभवे–अग्रेतने जन्मनि किं याताऽसि ?–गंताऽसीत्यर्थः; च पुनस्तस्य धनस्यार्जनम्–उपार्जनमादौ येषां तेऽर्जनादयः, आदिपदात्क्रयाणकक्रयविक्रयादयस्तैर्जनितानि–उत्पादितानि अघानि–पापानि तेषां चयः–समूहस्तेनार्जित–उत्पादितस्तस्मान्नरकदुःखभरात्–नरकगतिसंबंधिदुःखसमूहान्मुक्तिस्तव कथं–केन प्रकारेण भावी–भवितेति ? । अत्र यदि तर्हीति पदे अध्याहार्ये ॥ ५३ ॥ ७ ॥

इति श्रीतपोगच्छ...अध्यात्मकल्पद्रुमस्याधिरोहणीटीकायां...उ० श्रीधनविजयगणिविरचितायां द्रव्यममतामोचननाम्नी चतुर्थी पदपद्धतिः ॥ ४ ॥

---

रत्न०—अथार्थान्तरकथनेन सप्तक्षेत्र्यां धनवपनोपदेशमाह–क्षेत्रेष्विति०, व्याख्या—क्षेत्रेषु–जिनभवनादिषु सप्तसु प्रवचनप्रतीतेषु सद्–विद्यमानमपि स्वं–धनं नो वपसि, अत्र वपनक्रियाया लक्षणया प्रयोगः, क्षेत्रशब्दोऽपि लक्षणया एव, यथा क्षेत्रे उप्तं व्रीह्यादिधान्यं शतगुणं भवति

# ५ देहममतामोचनाधिकारः ।

ननु धनममतामोचने शरीरसत्यापना कथं भवतीत्याशंकायां शरीरममतामोचनद्वारमुपदिशन्नाह—

अथ देहाधिकारः ।

अथ देहाधिकार इति, अथ देहममतामोचनोऽधिकार उपदिश्यत इत्यर्थः । तत्र प्रथमं देहस्यानुपकारकत्वं धूर्त्ततां च दर्शयन् देहपोषणादौ दोषमुपदिशति—

**पुष्णासि यं देहमघान्यचिंतयंस्तवोपकारं कमयं विधास्यति ? ।**
**कर्माणि कुर्वन्निति चिंतयायतिं, जगत्ययं वंचयते हि धूर्तराट् ॥ ५४ ॥ १ ॥**

---

तथाऽत्रापि सप्तक्षेत्र्यां दत्तमनन्तगुणं भवतीत्युपचारात्क्षेत्रशब्दस्य वापक्रियायाश्च निर्देश इति । इदं स्वं किं गृहीत्वा—सार्थे लात्वा परभवे त्वं याताऽसि ?—गन्ताऽसि, काक्वा प्रश्नः । सार्थे गृहीत्वा यातुं न शक्यमिति सूचाऽपि । वेति पक्षान्तरे । हे धनिन्! ते—तव नरकस्य—निरयस्य दुःखं तस्य भरः—प्रचयस्तस्मान्मोक्षो—मोचनं कथं भावि ?, अत्रापि काक्वा प्रश्नः, अपितु न भावीति सूचाऽपि । किलक्षणात् ?—तस्य—स्वस्यार्जनादिना जनितम्—उत्पादितं यदघं पापं तस्य चयः—समूहस्तेनार्जितात्—उपार्जितादितिहेतोः, क्षेत्रेषु स्वं वपसि तदपि सुन्दरमितीत्यर्थः ॥ ५३ ॥ ७ ॥

॥ इत्यध्यात्मकल्पद्रुमे धनममत्वमोचनाख्यस्तुर्योऽधिकारः ॥ ५३ ॥ ७ ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धुलब्धप्रतिष्ठवरवाचकरत्नचन्द्रः। शिष्यार्थितां सफलयन् कुरुते स्म टीकां, तत्राधिकार इति पूर्त्तिमवाप तुर्यः ॥४॥

देहस्य कारागृहत्वं

धनवि०—हे आत्मन्! अघानि–जीवघातादिजनितानि पापान्यचिंतयन्–अविचारयन् त्वं यं देहं–शरीरं पुष्णासि–पुष्टिविषयीकरोषीत्यर्थः सोऽयं देहस्तव कं–किंनामकमुपकारं–हितकार्यकरणलक्षणं विधास्यति–करिष्यति ?, ततः कर्माणि–देहपोषणार्थं जीवहिंसादिकार्याणि कुर्वन्–सृजन् इत्यनंतरोक्तामायतिम्–उत्तरकालं चिंतय–विमृशेति, हि निश्चितं जगति–विश्वेऽथवा जगंति–जगज्जंतूनयं–कायाह्वयो धूर्तराट्–वंचकपतिर्वंचयते विप्रतारयतीत्यर्थः; भावार्थस्तु त्वं यं देहं पुष्णासि स देहस्त्वां कर्मभारभारितं दुर्गतियोग्यं च कृत्वा नंक्ष्वा यास्यतीति धूर्तराजत्वं देहस्येति ॥ ५४ ॥ १ ॥

अथ सावद्योपधाहारादिना देहदार्ढ्यकरणे दोषमुपदिशति—

**कारागृहाद्बहुविधाशुचितादिदुःखान्निर्गंतुमिच्छति जडोऽपि हि तद्विभिद्य ।**
**क्षिप्तस्ततोऽधिकतरे वपुषि स्वकर्मव्रातेन तद् दृढयितुं यतसे ? किमात्मन् ! ॥ ५५ ॥ २ ॥**

धनवि०—हे आत्मन्! हि यतः कारणात् कारागृहाद्–गुप्तिगृहाद्बहुविधं–नानाप्रकारमशुचितादि–अपावित्र्यादि दुःखं(यस्मिन्

---

रत्न०—अथ देहममत्वमोचनाधिकारः पञ्चमो व्याख्यायते । तत्र पापं कुर्वन् वपुःपोषं मा कुर्वित्युपदिशति–पुष्णासि यं देहमिति० व्याख्या–हे शरीरिन् ! त्वं यं देहं पुष्णासि–पुष्टं करोषि, किं कुर्वन् ?–अचिन्तयन्–अविचारयन्, कानि ?–अघानि–पापानि प्रति, देहं पुष्णन् पापानि चिन्तयस्येव नेत्यर्थः, परमयं देहः पोषितः सन् तव कमुपकारं विधास्यति–करिष्यति ?, त्वं जीवोपघातलक्षणानि पापानि अतिसावद्यानि कर्माणि प्रति कुर्वन् सन् इत्यायतिं–उत्तरकालं विचिन्तय–विचारय, हि–निश्चितमयं देहो धूर्तराट्–वञ्चकानां राजा जगन्ति प्रति, आश्रयेषु आश्रयिणामुपचाराद् जगद्वासिनो जगत्, तद् वञ्चयते, तेन बहुजीवघातादिनाऽस्य पोषणं न तवायतिहिताय भावीत्यर्थः, वञ्चकत्वोपचाराद्धूर्तराडुपमानमस्येति ॥५४॥१॥

ततः), अत्रादिपदात् क्षुत्पिपासापारवश्यादिपरिग्रहः, तथा तस्माज्जडोऽपि—मूर्खोऽपि तत्कारागृहं विभिद्य—विदार्य निर्गंतुं—निर्गमनक्रियां कर्तुमिच्छति—वांछतीत्यर्थः, ततस्तस्मात्कारणाद्धे आत्मन्! स्वकर्मव्रातेन—स्वकीयप्राक्कृतकर्मसमूहेन ततः कारागृहादधिकतरे—अतिशयेनाधिके वीभत्से वपुषि—शरीरे क्षिप्तः—प्रवेशितः सन् तद्वपुर्द्रढयितुं—सावद्याहारादिना दढीकर्तुं त्वं किं यतसे?—किं यत्नं कुरुषे इत्यर्थः ॥ ५५ ॥ २ ॥

विद्यमानशरीरापगमे परलोके दुःखं भविष्यतीति पुष्टिदार्ढ्यकरणादिना एतच्छरीरयत्नो विधीयते इत्याशयानां संशयनिरासायोपदिशति—

**चेद्वांछसीदमवितुं परलोकदुःखभीत्या ततो न कुरुषे किमु पुण्यमेव?।**
**शक्यं न रक्षितुमिदं हि न दुःखभीतिः, पुण्यं विना क्षयमुपैति न वज्रिणोऽपि ॥ ५६ ॥ ३ ॥**

धनवि०—हे आत्मन्! चेद्—यदि त्वं परलोकदुःखभीत्या—शरीरममतामोचने एतच्छरीरापगमे च परलोके गतस्य मम दुःखं भवि-

---

रत्न०—अथ शरीरं कारागृहादप्यधिकत्वेन चिन्तयन्नाह—कारागृहादिति० व्याख्या—हे आत्मन्! जडोऽपि—मूर्खोऽपि जनः कारागृहाद्—गुप्तिगृहान्निर्गन्तुमिच्छति। किं कृत्वा?—तत्कारागृहं विभिद्य, खात्रं दत्त्वेत्यर्थः, किंलक्षणाद्?—बहुविधं—नानाप्रकारमशुचितादि—अपावित्र्यादि दुःखं यस्मिन् तस्माद्, आदिशब्देन क्षुत्तृड्दुःखग्रहणं, ततः कारागृहादधिकतरे वपुषि—शरीरे स्वस्य कर्मणो व्रातेन—समूहेन क्षिप्तः सन् तद्वपुः प्रति द्रढयितुं—दृढं कर्तुं किं यतसे?—किं यत्नं करोषि, अत्रापि काकूक्त्या व्याख्यानं, अपि तु मा यतस्वेत्युपदेशोऽपि, ततोऽधिकरत्वं चास्य जीवनावधिसद्भावाद् भवे भवे प्राप्यत्वाच्चेति ॥ ५५ ॥ २ ॥

प्यतीतिभयेनेदं शरीरमवितुं—रक्षितुं वांछसि, ततः परलोकदुःखभीत्या पुण्यमेव—सुकृतमेव शरीररक्षणादियत्नत्यागेन किमु नो कुरुषे ?—किं न करोषीत्यन्वयः; हि यतः कारणादिदं शरीरमतिशक्तिमता केनापि रक्षितुं—त्रातुं न शक्यं—न—शक्तिविषयीकार्यं भवतीत्यर्थः, दुःखभीतिश्च—परभवदुःखभयं पुण्यं विना—तथाविधसुकृतमंतरेण क्षयं—विनाशं वज्रिणोऽपि—इंद्रस्यापि नोपैति—न गच्छतीत्यर्थः ॥५६॥३॥

कायस्य दुःखहेतुता

अनंतरोक्तयुक्त्या परलोकदुःखभीत्या शरीरयत्नो माऽस्तु, परं शरीरपोषणादिना सुखं तु भवत्येवेति शरीरयत्नो विधीयते इत्याशयानां पुंसामुपदेशमुपदिशति—

**देहे विमुह्य कुरुषे किमघं ? न वेत्सि, देहस्थ एव भजसे भवदुःखजालम् ।**
**लोहाश्रितो हि सहते घनघातमग्निर्बाधा न तेऽस्य च नभोवदनाश्रयत्वे ॥ ५७ ॥ ४ ॥**

---

रत्न०—अथ वपुषि पुष्टीकृते सति बहुजीवनात्परलोकदुःखं नायातीति वरं वपुःपोष इति कश्चिद्वक्ष्यतीत्याशङ्क्याह—**चेद्वाञ्छसीदमवितु**मिति० व्याख्या—हे आत्मन् ! त्वं चेद्—यदि परलोकदुःखानां भीत्या—भयेनेदं वपुः प्रति अवितुं—रक्षितुं वाञ्छसि, पुष्टीकृते वपुषि बहुवर्षजीवनात् परलोकदुःखानि नायांतीति वरं पुष्टीकृतं वपुरित्यर्थः, ततस्तर्हि पुण्यमेव किमु ?—किं न कुरुषे, हि यस्मात् कारणात् इदं वपुर्दुःखभीतेः—दुःखानां भयाद्रक्षितुं—रक्षणाय न शक्यं—न शकनीयं इति न, 'द्वौ नञौ प्रकृतमर्थं गमयत' इति न्यायादपितु शक्यम्, अर्थात्पुण्येनैवेति, च पुनरिदं वपुर्वज्रिणोऽपि—इन्द्रस्यापि पुण्यं विना क्षयं—नाशमुपैति—प्राप्नोति । तस्माद् त्वं यदि परलोकदुःखभीतस्तदा पुण्यं कुरुष्वेत्युपदेशः ॥ ५६ ॥ ३ ॥

**धनवि०**—हे आत्मन्! **देहे**—शरीरे **विमुह्य**—विशेषेण मोहं प्राप्याघं—पापं **किं कुरुषे ?**, इति—अग्रे वक्ष्यमाणं स्वरूपं **किं न वेत्सि ?**—न जानासीत्यर्थः, **देहस्थ एव**—शरीरस्थित एव त्वं **भवदुःखजालं**—सांसारिकदुःखसमूहं **भजसे**—प्राप्नोपीत्यर्थः, हि यतः कारणाल्लो**हाश्रितो**—लोहसंश्रितोऽग्निः—वह्निर्**घनघातं**—लोहमयघनप्रहारं **सहते**—क्षमते, **गगनवदनाश्रयत्वे**—निरालम्बनत्वे **ते**—तव **च** पुनरस्य—वह्नेर्**बाधा**—पीडा न भवतीति, नभसो वति प्रत्यये 'मनुर्नभोऽङ्गिरो वती'ति (१–१–२४)सूत्रेण पदत्वाभावान्नभोवदिति चिंत्यम्, अन्यथा वा यथाज्ञातं समर्थनीयमिति, स्थानांगटीकायां प्रथमाधिकारे नभोवदिति प्रयोगस्य विद्यमानत्वात्सुस्थमिति वा (नभस्वदित्युपदेशरत्नाकरे, न वदन्तं नामेदं, अव्ययमिदं वेदिक्यां च सूत्रमिदं, अग्नेः सम्बंध्यपि नभस्वान्—वायुः अनाश्रयत्वात् न घातमाप्नोतीत्यर्थे तु नभस्वदित्येव) ॥५७॥४॥

---

**रत्न०**—अथ यं देहं त्वं पुष्णासि तत्रस्थस्यैव तव दुःखं वर्त्तत इति वक्तुमाह—**देहे विमुह्येति०** व्याख्या—हे आत्मन्! त्वं देहे विमुह्य—मोहं प्राप्य किमघं कुरुषे ?। अपितु मा कुर्वित्युपदेशः। त्वं किं न वेत्सि ? इत्यपि काकूक्त्या व्याख्यानम्, अपितु वेत्सि—जानीषे इति सूचाऽपि, कि न वेत्सीत्याह—त्वं देहस्थ एव भवस्य—संसारस्य जन्मजरामरणलक्षणस्य दुःखानां जालं—समूहं भजसे, देहाश्रितस्यैव नरकदुःखाद्यनुभवनं, नतु देहमुक्तस्य, एतद् दृष्टान्तेन दृढयति—हि निश्चितं अग्निर्लोहाश्रितो घनस्य—लोहमयशस्त्रविशेषस्य घातं—प्रहारं सहते—क्षमते, नाग्निः केवलो घनघातविषयीकर्तुं शक्यत इत्यर्थः। हे आत्मन्! ते—तव च पुनरस्य—अग्नेरनाश्रयत्वे बाधा—पीडा न भवति, किंवत् ?—नभस्वद्—आकाशवद्, यथा नभसः अनाश्रयत्वे लत्ताप्रहारादिका परकृता बाधा न भवति तथा तवापि देहस्यानाश्रयत्वे मुक्तिं गतस्य बाधा न भवतीत्यर्थः। 'मनुर्नभोऽङ्गिरो वतीति'सूत्रेण पदत्वाभावान्नभोवदिति न स्यात्। यथा आकाशस्यानाश्रयत्वे बाधा न भवति तथा तवापीत्यर्थः ॥ ५७ ॥ ४ ॥

अथ शरीरस्य वंचकस्वभावत्वेन दुष्टतां दर्शयन्नुपदिशति—

**दुष्टः कर्मविपाकभूपतिवशः कायाह्वयः कर्मकृद्, बद्ध्वा कर्मगुणैर्हृषीकचषकैः पीतप्रमादासवम्।**
**कृत्वा नारकचारकापदुचितं त्वां प्राप्य चाशु च्छलं, गंतेति स्वहिताय संयमभरं तं वाहयाल्पं ददत् ॥५८॥५॥**

धनवि०—कर्मणामष्टविधानां नामकर्मणो वा विपाकः स एव भूपतिस्तस्य वश—आयत्तः दुष्टः—अपावित्र्यादिदोपदूषितः आहाराद्यर्थं हिंसाकारित्वादिदोषदूषितो वा कायाह्वयः कर्मकृद्—दासस्त्वां कर्मगुणैः—कर्मलक्षणरज्जुभिर्बद्ध्वा—नियंत्र्य, च पुनस्त्वां हृषीकचषकैः—हृषीकाणि—इंद्रियाणि तद्रूपाश्चषकाः—मद्यपानपात्राणि तैर्हृषीकचषकैः पीतः—अत्यादरेण सेवितः प्रमादः—पंचप्रमादलक्षण आसवो—मद्यं येन स तथा तं पीतप्रमादासवं कृत्वा, नारको—नरकः स एव चारकः—कारागृहं तस्यापद्—विपत्तिस्तस्या उचितो—योग्यः स तथा तं नारकचारकापदुचितं कृत्वा, च पुनः छलम्—आयुःपूर्त्तिलक्षणं मिषं प्राप्य—लब्ध्वा गंता—याताऽस्तीत्यर्थः; इतिहेतोस्तं बलीवर्दसदृशं कायाह्वयं

---

रत्न०—अथ कायं कर्मकरत्वेनोपमयति—दुष्टः कर्मविपाकेति०, व्याख्या—हे आत्मन्! काय इत्याह्वयो—नाम यस्य सः कायाह्वयः कर्मकृत्—कर्मकरस्त्वां नारकचारकापदुचितं कृत्वा—निरयगुप्तिगृहविपद्योग्यं कृत्वा च पुनराशु—शीघ्रं छलं प्राप्य गन्ता—गमिष्यतीत्यन्वयः, कर्मकृत् किंलक्षणः ?—दुष्टो-निर्दयः, पुनः कीदृक् ?—कर्मणा ज्ञानावरणीयादीनां विपाको—विपचनं स एव भूपतिस्तस्य वशः—अधीनः, स्वयं दुष्टः अथ च कर्मविपाकराजप्रेरित इत्यर्थः। किं कृत्वा ?—बद्ध्वा, कैः ?—कर्माण्येव गुणाः—रज्जवस्तैः, अपरोऽपि अपराधी रज्जुभिर्बध्यत इति, त्वां किम्भूतं ?—पीतः प्रमाद एवासवः—सीधुर्मदिराविशेषो येन स तं, कैः ?—हृषीकाणि—इन्द्रियाण्येव चषकाः—पानपात्राणि, यैः कृत्वा मद्यं पीयते ते चषका इति, अनेन पीतमद्यत्वाद्बद्धुं सुकर इति

कायस्य दुष्टकर्मकरत्वं

कर्मकरमल्पं—द्विचत्वारिंशदाहारदोषादूषितं लघु कायभाटकप्रायमाहारादि ददत्—प्रयच्छन् स्वहिताय—परभवे आत्मनो मोक्षलक्षणसुखाय संयमभरं—सप्तदशसंयमलक्षणं भारं त्वं वाहय—जीवितांते पारं प्रापयेति, वाहयेत्यत्र वहधातुः स्वभावतो ण्यंतत्वाद्वा द्विकर्मकः ॥ ५८ ॥ ५ ॥



अथ शरीरस्यासारतां दर्शयन्नुपदिशति—

**यतः शुचीन्यप्यशुचीभवंति, कृम्याकुलात् काकशुनादिभक्ष्यात् ।**
**द्राग्भाविनो भस्मतया ततोऽगान्, मांसादिपिंडात् स्वहितं गृहाण ॥ ५९ ॥ ६ ॥**

**धनवि०**—**यतः** शरीरादाहारांशुकादीनि वस्तूनि **शुचीन्यपि**—पवित्राण्यप्य**शुचीभवंति**—अपवित्रीभवंति सजीवनावस्थायां, **कृम्याकुलात्**—कृमिगंडोलकसंकुलान्निर्जीवनावस्थायां च **काकशुनादिभक्ष्याद्**—वायससारमेयादिभिर्भक्ष्याद्—भक्षणीयाद्, आदिपदात्कंकगृध्रादि-

---

सूचितं, अपरोऽपि नृपादिष्टः सेवकोऽपराधिनं बद्ध्वा गुप्तौ प्रक्षिप्य यातीति तथा कायः कर्मकृदपि । इतिहेतोः स्वकायकर्मकृतं वाहय—वञ्चय, किं कुर्वन् ?—ददद्—ददानः, कं ?—संयमभरं, किंभूतम्—अल्पं—स्तोकं, बहोर्दाने असमर्थस्त्वं, अत एव स्तोकमपीत्यर्थः । कस्मै ?—स्वहिताय, अपरोऽपि नृपसेवको लञ्चाप्रदानेन वंच्यते तथा त्वमपि चास्य संयमभररूपलञ्चाप्रदानेन वञ्चय यथाऽसौ त्वामबद्ध्वा नारकचारकापदुचितं चाकृत्वैव यातीति ॥५८॥५॥

**रत्न०**—अथाशुचिदेहादन्येऽपि पदार्था अशुचीभवन्तीत्यादिदेहदोषानाह—**यतः शुचीन्यप्यशुचीभवन्तीति**०, व्याख्या—यतः अङ्गात् शुचीनि—पवित्राण्यपि वस्तूनि—पायसादीनि अशुचीभवन्ति—अपवित्राणि भवन्ति, यथा घृतशर्कराचूर्णयुक्तस्य भक्षितस्य पायसस्य तत्समय एव वमनदशायां दूरूपदुर्गन्धितया सर्वजनजुगुप्सनीयत्वेन त्याज्यत्वं दृश्यत इति । यतः किम्भूतात् ?—कृमिभिराकुलाद्—व्याप्तात्, पुनः किंलक्षणात् ?—काकशुनादीनां भक्ष्यात्,

भक्ष्याद्द्राग्—शीघ्रं भस्मतया—रक्षारूपतया भाविनो—भविष्यतो मांसादिपिंडाद्, आदिपदाद्रसासृग्मांसमेदादिपिंडसमूहात्ततोऽंगात्—तस्माच्छरीरात्स्वहितं—परभवसुखसाधनं तपःसंयमादिपुण्यं गृहाण—स्वायत्तीकुर्वित्यर्थः ॥ ५९ ॥ ६ ॥

देहस्य भाटकगृहता

नन्वनंतरं 'स्वहितं गृहाणे'त्युक्तम्, अथ च यः शरीरं प्राप्य स्वहितं न गृह्णाति तस्य किं स्यादित्याशंकायामुपदिशति—

**परोपकारोऽस्ति तपो जपो वा, विनश्वराद्यस्य फलं न देहात् ।**
**स भाटकादल्पदिनासगेहमृत्पिंडमूढः फलमश्नुते किम्? ॥ ६० ॥ ७ ॥**

धनवि०—यस्य पुरुषस्य विनश्वराद्—विनाशस्वभावाद्देहात्—शरीरात्परोपकारः—परहितकरणं, वाऽथवा तपो द्वादशप्रकारं, वाऽथवा जपः—पंचपरमेष्ठिनमस्कारादिस्मरणं फलं—साध्यार्थो नास्ति; स पुरुषो भाटकात्—निष्क्रयादल्पदिनावधिप्राप्तश्चासौ गेहमेव—गृहमेव मृत्पिंडो—मृत्तिकास्कंधस्तत्र मूढो—ममेदं गृहं मा विनश्यत्वितिधिया मोहं प्राप्तः किं फलं?—किंनामकं फलमश्नुते—प्राप्नोतीत्यर्थो; भावार्थस्तु यथा कश्चिदल्पदिनमर्यादया भाटकेन गृहीते गृहे ममेदं गृहं मा विनश्यत्वितिबुद्ध्या मूढमतिस्तद्गृहं न व्यापारयति स संपूर्णावधौ

---

शोषे भक्ष्य न स्यात्, पुनः किं० ?—भवितेति भावि तस्माद्भाविनः, कया?—भस्मतया—रक्षात्वेन, कथं?—द्राक्—शीघ्रं, मृतानन्तरमित्यर्थः। हे आत्मन्! ततोऽङ्गात्—तस्माच्छरीरात्त्वं स्वस्य हितं तपःप्रभृति गृहाण, किं० ?—मांसादीनां पिण्डः—समुदायस्तस्माद्, आदिशब्देनास्रवसास्थिमेदसां ग्रहणं ॥५९॥ ६॥

रत्न०—अथ देहात्तपोजपादिफलमाह—परोपकारोऽस्तीति०, व्याख्या—यस्य पुंसो देहात्परोपकारः फलं नास्ति वा पुनस्तपः फलं जपश्च फलं नास्ति, देहस्य त्रीण्येव फलानि सन्तीति सूचितं, यतः किं० ?—विनश्वराद्—विनाशशीलात् स पुमान् देहात् किं फलमश्नुते ?, अपितु न किमपि ।

च परकीये गृहे जाते सति तद्गृहस्य प्राप्तिफलरहितो भवति तथा यः परिमितायुपि शरीरे प्राप्ते ममेदं शरीरं परोपकारतपःकरणादिना दुर्बलं माऽस्त्विवतिबुद्ध्या मूढमतिस्तं शरीरं न व्यापारयति सोऽप्यायुःपूर्त्तौ शरीरनाशे मानुष्यशरीरप्राप्तिफलरहितो भवतीति ॥ ६० ॥ ७ ॥

अथ देहममतामोचनद्वारोपसंहाराय देहस्यासारतां देहजन्यसुकृताचरणफलस्य च सारतां दर्शयन्नुपदिशति—

**मृत्पिण्डरूपेण विनश्वरेण, जुगुप्सनीयेन गदालयेन ।**
**देहेन चेदात्महितं सुसाधं, धर्मान्न किं तद्यतसेऽत्र ? मूढ ! ॥ ६१ ॥ ८ ॥**

**धनवि०**—हे अज्ञानिन्! **चेद्**—यदि **मृत्पिण्डरूपेण**—मृत्तिकास्कंधस्वभावेन **विनश्वरेण**—विनाशशीलेन **जुगुप्सनीयेन**—अतिनिंदास्पदेन **गदालयेन**—रोगगृहेण **देहेन**—शरीरेण कारणभूतेनात्महितं—स्वस्य पारभविकसुखसाधनं **सुसाधं**—सुखसाध्यं **धर्मात्**—तपश्चरणसंयमपा-

---

स किं० ?—भाटकाद्—भाटकोक्तद्रव्यप्रदानादल्पदिनान् यावदाप्तं गेहं तदेव मृत्पिण्डः—शरीरं तत्र मूढो—मोहग्रस्तः, भाटकगृहं यथा यथा व्यापार्यते तथैव भव्यं, अन्यथा भाटकद्रव्यमुपविशति अर्थः कश्चिन्न सिद्ध्यतीति । देहस्याशनपानवस्त्रादिदानं भाटकं, तस्य परोपकारादि फलं न गृह्यते तदा वृथैव भाटकदानमिति दृष्टान्तसाम्यं, गेहमपि मृत्पिण्डमयं भवतीति ॥ ६० ॥ ७ ॥

**रत्न०**—पुनस्तदेव द्रढयति—**मृत्पिण्डरूपेणेति०**, व्याख्या—हे आत्मन्! चेद्—यदि देहेन निमित्तभूतेन धर्मात्—सुखकारणादात्महितं सुसाधं—सुखसाध्यं वर्त्तते, देहेन कीदृशेन ?—मृत्पिण्डरूपेण—मृत्पिण्डसदृशेन, अत एव विनाशशीलेन, पुनः किंलक्षणेन ?—जुगुप्सनीयेन—जुगुप्सायोग्येन, पुनः कि० ?—गदानां—रोगाणामालयो—गृहं तेन तत्—तर्हि अत्र—आत्महिते हे मूढ ! कि न यतसे ?—यत्नं न करोपि, अपितु यत्नं कुरुष्वेति,

किं मुह्यसि ?–किं मूढो भवसीत्यर्थः; यतः कारणादेते इंद्रियार्थाः जंतून्–प्राणिनो गहने–दुःखावगाहे भवभीमकक्षे–संसाररूपभयंकर-कांतारे क्षिपंति–बलात्कारेण प्रवेशयंतीत्यर्थः, यत्र भवभीमकक्षे शिवमार्गदृष्टिः–मोक्षमार्गदर्शनं सुलभा–सुप्रापा नास्तीति ॥ ६२ ॥ १ ॥

नन्वमृतलवकल्पमपि वैषयिकसुखमनंतरोपदेशानुसारेण कथं हेयमित्याशंकायामुपदिशति—

**आपातरम्ये परिणामदुःखे, सुखे कथं वैषयिके रतोऽसि ? ।**
**जडोऽपि कार्यं रचयन् हितार्थी, करोति विद्वन् ! यदुदर्कतर्कम् ॥ ६३ ॥ २ ॥**

धनवि०—हे विद्वन्! आपातरम्ये–दर्शनमात्ररमणीये परिणामदुःखे–परिणत्या दुःखदायके वैषयिके–विषयजनिते सुखे कथं–केन प्रकारेण त्वं रतः–आसक्तोऽसि ?, यद्–यस्मात् कारणाज्जडोऽपि–मूर्खोऽपि हितं–सुखोपायस्तस्यार्थः–प्रयोजनं यस्य स हितार्थी सन् कार्यं–व्यापारादिकं घटादिकं वा रचयन्–कुर्वन् घटयन् उदर्कतर्कं 'उदर्कस्तद्भवं फल'मिति वचनादुदर्कः–कार्यकरणोत्तरकाले

---

पदस्य सत्त्वात्, यत्र शिवस्य–मोक्षस्य मार्गदृष्टिः–मार्गदर्शनं न सुलभा–न सुप्रापा । अपरस्मिन्नपि गहने कक्षे शिवस्य–निरुपद्रवस्य मार्गदृष्टिः सुलभा न भवतीति ॥ ६२ ॥ १ ॥

रत्न०—अथैहिकसुखस्याऽऽपातरम्यत्वपरिणामदुःखत्वे दर्शयन्नाह–**आपातरम्ये०** इति, व्याख्या—हे विद्वन् !–हे आत्मन् विषयसम्बन्धिनि वैषयिके सुखे किं रतोऽसि ?–रागी जातोऽसि, अपितु मा रज्य । किंलक्षणे ?–आपातः–तत्कालस्तस्मिन् रम्ये, दृश्यमानमनोहरे इत्यर्थः, पुन किं० ?–परिणामे–परिपाके दुःखदायी(यती)ति दुःखं तस्मिन्, यद्–यस्मात् कारणाज्जडोऽपि–मूर्खोऽपि कार्यं स्वयं कुर्वन्नुत्तरकालफलं उदर्कस्तस्य तर्को–विचारस्तं

"मज्जं विसय कसाया निद्दा विकहा य पंचमी भणिया । एए पंच पमाया जीवं पाडंति संसारे[1] ॥१॥" इत्यादिना भावनीया, अष्टप्रकारता च "पमाओ य मुणिंदेहिं, भणिओ अट्ठभेयओ । अन्नाणं संसओ चेव, मिच्छानाणं तहेवय ॥ १ ॥ रागो दोसो मइब्भंसो, धम्मंमि य अणायरो । जोगाणं दुप्पणिहाणं, अट्ठहा वज्जियव्वओ[2]" ॥ २ ॥ इत्यादिना भावनीया ॥ ननु विषयसेवने को दोष इत्याशंकायामाह—

**अत्यल्पकल्पितसुखाय किमिंद्रियार्थैस्त्वं मुह्यसि प्रतिपदं प्रचुरप्रमादः? ।**
**एते क्षिपंति गहने भवभीमकक्षे, जंतून्न यत्र सुलभा शिवमार्गदृष्टिः ॥ ६२ ॥ १ ॥**

**धनवि०**—हे आत्मन्! त्वं **प्रचुरप्रमादः** सन्—बहुप्रमादसहितः सन्नत्यल्पकल्पित**सुखाय**—अतिशयेनाल्पमत्यल्पं अत्यल्पं च तत्कल्पितं च—सुखं सुखमितिबुद्ध्यारोपितं तच्च सांसारिकं स्त्रीसंभोगादिलक्षणं सुखं तत्तथा तस्मै **प्रतिपदं**—स्थाने स्थाने **इंद्रियार्थैः**—शब्दादिविषयैः

---

**रत्न०**—अथ षष्ठोऽधिकारो विवरीतुं प्रारभ्यते । तत्र विषयाः प्रमादाश्च, तत्र प्रथममिन्द्रियार्थेषु मोहत्यागविषये उपदिशति—**अत्यल्पकल्पितसुखायेति०**, व्याख्या—हे आत्मन्! त्वमिन्द्रियार्थैः—शब्दरूपगन्धरसस्पर्शैः किं मुह्यसि ?, काकूक्त्या व्याख्यानं, अपितु मा मुह्य इत्युपदेशोऽपि, कस्मै ?—अत्यल्पं कल्पितम्—औपचारिकं नतु तात्त्विकं यत्सुखं तस्मै, कथं ?—प्रतिपदं—स्थानं स्थानं प्रति अथवा वस्तु वस्तु प्रति, 'पदं स्थाने विभक्त्यंते, शब्दे वाक्यैकवस्तुनोः । त्राणे पादे पादचिन्हे' इत्यनेकार्थकोषवचनात्, किंलक्षणस्त्वं ?—प्रचुरः प्रमादो यस्य सः, एते इन्द्रियार्थाः भवः—संसारः स एव भीमो—भयावहः कक्षः—शुष्कवनं तस्मिन् क्षिपन्ति । किंलक्षणे गहने ?—दुष्प्रवेशार्हे । कान् ?—जन्तून्—प्राणिनः, कुत्र ?—तत्र, तत्रेत्यध्याहार्यं, यत्रेति

---

१ मद्यं विषयकषाया निद्रा विकथा च पंचमी भणिता । एते पंच प्रमादा जीवं पातयन्ति संसारे ॥ १ ॥ प्रमादश्च मुनीन्द्रैर्भणितोऽष्टभेदः । अज्ञानं संशयश्चैव मिथ्याज्ञानं तथैव च ॥ १ ॥ २ रागो द्वेषो मतिभ्रंशो धर्मे च अनादरः । योगानां दुष्प्रणिधानं अष्टधा वर्जितव्यः ॥ २ ॥

धर्गगतशर्मविशेषणं, तयोः—सांसारिकसुखस्वर्गापवर्गसुखयोर्मिथः—परस्परं सप्रतिपक्षता—एकस्य सत्त्वेऽपरस्यासत्त्वमितिरूपा वैरिताऽस्तीत्यन्वयः; हे कृतिन्!—हे पण्डित त्वं विशेषदृष्ट्या—इदमस्मात्समीचीनमिदमस्मादसमीचीनमिति विवेकदृशाऽन्यतरद्—ऐहिकपारलौकिकसुखयोर्मध्ये एकं यत्सुंदरं तद्गृहाण—स्वायत्तं कुर्वित्यर्थः ॥ ६४ ॥ ३ ॥

तृष्णापापनिवृत्तिः

अथ विषयतृष्णानिवृत्त्यर्थं शास्त्रश्रवणैरवहितो भवेत्युपदिशति—

**भुंक्ते कथं नारकतिर्यगादिदुःखानि देहीत्यवधेहि शास्त्रैः ।**
**निवर्त्तते ते विषयेषु तृष्णा, विभेषि पापप्रचयाच्च येन ॥ ६५ ॥ ४ ॥**

धनवि०—देही—प्राणी नारकतिर्यगादिदुःखानि—नरकगतितिर्यग्गतिप्रमुखदुःखानि, आदिपदान्मनुष्यगतिदेवगतिदुःखानि, कथं?—येन प्रकारेण केन प्राकृतकर्मणा वा भुंक्ते—अनुभवति, अत्र चतुर्गतिदुःखस्वरूपप्रतिपादिका इमा गाथाः—कक्खडदाहंसामलिअसिवणवेयरणिपहरणसएहिं । जा जायणा उ पावंति नारया तं अहम्मफलं ॥ १ ॥ तिरिया कसंकुसारानिवायवहबंधमारणसयाइं । नवि इहयं पावंता

---

प्रतिपक्षत्वं रिपुत्वमस्ति, यदैहिकं सुखं तदा पारत्रिकं न, यदा पारत्रिकं तदा चैहिकं नेति प्रतिपक्षता । हे कृतिन्!—हे पण्डित तत्कारणात्तयोर्मध्ये विशेषदृष्ट्या—विशेषदर्शनेन विशेषज्ञानेन वा विशेषं दृष्ट्वा ज्ञात्वा चेत्यर्थः अन्यतरद्—एकं वरीयः सुखं गृहाणेति ॥ ६४ ॥ ३ ॥

लर०—अथ विशेषदर्शनमेवाह—भुङ्क्ते कथमिति०, व्याख्या—हे आत्मन्! त्वं शास्त्रैः—शास्त्राध्ययनैरित्यर्थ इत्यवधेहि—अवधानं कुरु, सावधानो

---

१ कर्कशदाहशाल्मलिअसिवनवैतरणीप्रहरणशतैः । या यातनास्तु प्राप्नुवंति नारकास्तदधर्मफलं ॥ १ ॥ तिर्यंचः कशांकुशारानिपातवधबंधनमारणशतानि ।

तत्कार्यजन्यफलं तस्य तर्क–एतत्कार्यकरणान् ममोत्तरकाले किं फलं भविष्यतीति विचारस्तं **करोति**–विदधातीत्यर्थो, भावार्थस्तु मूर्खोऽपि कार्यं कुर्वन् चेतसा चिंतयति–इदं मया क्रियमाणं कार्यममे सुंदरपरिणाममसुंदरपरिणामं वेति, त्वं तु पंडितः सन् भुक्तिकालसुंदरे परिणतिकालासुंदरे किंपाकफलोपमे वैषयिके सुखे कथं रतोऽसीति ? ॥ ६३ ॥ २ ॥

नन्वनंतरोक्तप्रकारेण यदि वैषयिकसुखस्यापातरमणीयता भविष्यति तदा सुखत्वेन समानधर्मस्य स्वर्गापवर्गसुखस्यापि तथैव रमणीयता भविष्यतीत्याशंकायामुपदिशति—

**यदिंद्रियार्थैरिह शर्म बिंदवद्, यदर्णवत् स्वःशिवगं परत्र च ।**
**तयोर्मिथः सप्रतिपक्षता कृतिन्!, विशेषदृष्ट्याऽन्यतरद्गृहाण तत् ॥ ६४ ॥ ३ ॥**

**धनवि०**—इह लोके **यच्छर्म**–यद्वैषयिकं सुखं **बिंदुवद्**वर्त्तते, बिंदुः–जलकणस्तद्वदाचरतीति बिंदवत् इति सांसारिकशर्मविशेषणं, च पुनः **परत्र**–परलोके यत् **स्वःशिवगं**–स्वर्गापवर्गगतमिंद्रियजानिंद्रियजं शर्म **अर्णव**द्वर्तते, अर्णवः–समुद्रस्तद्वदाचरतीत्यर्णवदिति स्वर्गाप-

---

करोति, ममेदं कार्यं कुर्वतः सतोऽग्रे किम्फलं भविष्यतीति विचारयतीत्यर्थः । विद्वन्निति साभिप्रायं सम्बोधनं, तेन त्वं विद्वानसि, वैषयिकं सुखं भुञ्जान उदर्कतर्कं किं न करोषीति भावः ॥ ६३॥ २ ॥

**रत्न०**—अथैहिकसुखस्य तुच्छत्वेन(त्वं) दर्शयन्नाह–**यदिन्द्रियार्थैरिति०**, व्याख्या—हे आत्मन्! इह लोके स्वः–स्वर्गः शिवं–मोक्षस्तयोर्गच्छतीति स्वःशिवगं यच्छर्म तदर्णव इव–समुद्र इवाचरतीति अर्णवति अर्णववद्वर्त्तते, आचारार्थे शतृप्रत्यये शर्मविशेषणं, तयोः शर्मणोर्मिथः–परस्परं

प्रतिपक्ष-सुखता

वर्गगतशर्मविशेषणं, तयोः—सांसारिकसुखस्वर्गापवर्गसुखयोर्मिथः—परस्परं सप्रतिपक्षता—एकस्य सत्त्वेऽपरस्यासत्त्वमितिरूपा वैरिताऽस्ती-त्यन्वयः; हे कृतिन्!—हे पण्डित त्वं विशेषदृश्या—इदमस्मात्समीचीनमिदमस्मादसमीचीनमिति विवेकदृशाऽन्यतरद्—ऐहिकपारलौकिक-सुखयोर्मध्ये एकं यत्सुंदरं तद्गृहाण—स्वायत्तं कुर्वित्यर्थः ॥ ६४ ॥ ३ ॥

तृष्णापाप-निवृत्तिः

अथ विषयतृष्णानिवृत्त्यर्थं शास्त्रश्रवणैरवहितो भवेत्युपदिशति—

भुंक्ते कथं नारकतिर्यगादिदुःखानि देहीत्यवधेहि शास्त्रैः।
निवर्त्तते ते विषयेषु तृष्णा, बिभेषि पापप्रचयाच्च येन ॥ ६५ ॥ ४ ॥

धनवि०—देही—प्राणी नारकतिर्यगादिदुःखानि—नरकगतितिर्यग्गतिप्रमुखदुःखानि, आदिपदान्मनुष्यगतिदेवगतिदुःखानि, कथं?—केन प्रकारेण केन प्राकृतकर्मणा वा भुंक्ते—अनुभवति, अत्र चतुर्गतिदुःखस्वरूपप्रतिपादिका इमा गाथाः—कक्खडदाहंसामलिअसिवणवेय-रणिपहरणसएहिं। जा जायणा उ पावंति नारया तं अहम्मफलं ॥ १ ॥ तिरिया कसंकुसारानिवायवहबंधमारणसयाइं। नवि इहयं पावंता

---

प्रतिपक्षत्वं रिपुत्वमस्ति, यदैहिकं सुखं तदा पारत्रिकं न, यदा पारत्रिकं तदा चैहिकं नेति प्रतिपक्षता। हे कृतिन्!—हे पण्डित तत्कारणात्तयोर्मध्ये विशेषदृश्या—विशेषदर्शनेन विशेषज्ञानेन वा विशेषं दृष्ट्वा ज्ञात्वा चेत्यर्थः अन्यतरद्—एकं वरीयः सुखं गृहाणेति ॥ ६४ ॥ ३ ॥

धर०—अथ विशेषदर्शनमेवाह—भुंक्ते कथमिति०, व्याख्या—हे आत्मन्! त्वं शास्त्रैः—शास्त्राध्ययनैरित्यर्थ इत्यवधेहि—अवधानं कुरु, सावधानो

---

१ कर्कशदाहशाल्मलिअसिवनवैतरणीप्रहरणशतैः। या यातनास्तु प्राप्नुवंति नारकास्तदधर्मफलं ॥ १ ॥ तिर्यंचः कशाकुशारानिपातवधबंधनमारणशतानि।

परत्थ जइ नियमिआ हुंता ॥२॥ चारगनिरोहवहबंधरोगधणहरणमरणवसणाइं । मणसंतावो अजसो विग्गोवणया य माणुस्से ॥३॥ तं सुरविमाणविभवं चिंतिय चवणं च देवलोगाओ । अइबलियं चिय जं नवि फुट्टइ सयसक्करं हिययं ॥४॥ ईसाविसायमयकोहमाण(माय)लोभेहिं एवमाईहिं । देवावि समभिभूया तेसिं कत्तो सुहं नाम ? ॥५॥[1] इत्युपदेशमालायाम्, इत्यमुना प्रकारेणानंतरोक्तं शास्त्रैः—लक्षणया शास्त्रवचनैः शास्त्रश्रवणैर्वाऽवधेहि—सम्यग्जानीहीत्यर्थः, येन नारकतिर्यगादिदुःखानुभवकारणसम्यग्ज्ञानेन ते—तव विषयेषु—दुर्गतिकारणेषु शब्दादिषु तृष्णा—गार्ध्यं निवर्त्तते—विरमतीत्यर्थः, च पुनर्येन सम्यग्ज्ञानेन पापप्रचयात्—पापपुष्टिकरणाद्बिभेषि—त्वं भयमधिगच्छसीति ॥६५॥४॥

अनन्तरोक्तमेवार्थं प्रकारान्तरेण दर्शयन्नुपदिशति—

**गर्भवासनरकादिवेदनाः, पश्यतोऽनवरतं श्रुतेक्षणैः ।**
**नो कषायविषयेषु मानसं, श्लिष्यते बुध ! विचिंतयेति ताः ॥ ६६ ॥ ५ ॥**

---

भवेत्यर्थः । इतीति किं ?—देही—देहवान् नारकतिर्यगादिदुःखानि कथं भुङ्क्ते ?—महता कष्टेन भुङ्क्ते इत्यर्थः, आदिशब्देनातिपापप्रकृत्युदयवन्मनुष्यदुःखानामपि ग्रहणं, येन—शास्त्रैः कृत्वा अवधानेन विषयेषु पञ्चसु तृष्णा—लौल्यं निवर्त्तते, च पुनर्येन पापस्य प्रचयात्—समूहाद्बिभेषि—भयं प्राप्नोषीति ॥६५॥४॥

---

नैव इह प्राप्स्यन् परत्र यदि नियमिता अभविष्यन् ॥ २ ॥ चारकनिरोधवधबंधरोगधनहरणमरणव्यसनानि । मनःसंतापान् अयशो विगोपनतां च मानुष्ये ॥ ३ ॥ तं सुरविमानविभवं चिंतयित्वा च्यवनं च देवलोकतः । अतिबलिष्ठं चैव यन्नैव स्फुटति शतखंडं हृदयं ॥ ४ ॥ ईर्ष्याविषादमदक्रोधमान(माया)लोभैः एवमादिभिः । देवा अपि समभिभूताः तेषां कुतः सुखं नाम ? ॥ ५ ॥ उपदेशमाला गा० २८०, २८१, २८२, २८६ तथा २८७.

धनवि०—अनवरतं-निरंतरं श्रुतेक्षणैः—शास्त्ररूपलोचनैर्गर्भवासनरकादिवेदनाः पश्यतो—विलोकयतस्तव मानसं—चित्तं कषाय-
विषयेषु नो श्लिष्यते—नैवालिंपतीत्यर्थः । अत्र गर्भवासवेदनास्वरूपसूचिके इमे गाथे—सूईहिं अग्गिवण्णाहिं, संभिन्नस्स निरंतरं । जारिसं
गोयमा ! दुक्खं, गब्भे अट्ठगुणं भवे ॥१॥ गब्भाओ नीहरंतस्स, जोणिजंतंमि पीलणा । सयसाहस्सिअं दुक्खं, कोडाकोडिगुणंपि वा ॥२॥
इति । नरकवेदनाश्च दशविधाः पूर्वोक्ताः, तिर्यगादिवेदनाश्च "तिरिया कसंकुसारा" इत्यादिनाऽनंतरोक्ता ज्ञेया इति; नन्वत्र विषयाधिकारे
कषायग्रहणं किमर्थमिति चेन्न, कषायाणामपि विषयाणामिव प्रमादत्वसूचनार्थं विषयकषाययोः समानफलत्वदर्शनार्थं वा ग्रहणादिति;
हे बुध !—हे पंडित इति कारणात्ता गर्भवासनरकादिवेदनाः त्वं चिंतय—सम्यक्परिभावनेन स्मरणविषयीकुर्वित्यर्थः ॥ ६६ ॥ ५ ॥

---

रत्न०—पुनरपि विशेषदर्शनमेव द्रढयति—गर्भवासनरकादीति०, व्याख्या—हे आत्मन् ! श्रुतानि—शास्त्राण्येवेक्षणानि—लोचनानि अथवा श्रुतानामीक्षणानि—विलोकनानि तैर्गर्भवासनरकादिवेदनाः प्रति पश्यतस्तव कषायाः—क्रोधमानमायालोभाश्चत्वारो विषयाः—शब्दादयः पञ्च च तेषु मानसं—मनो न श्लिष्यते—न श्लेषं प्राप्नोति, न लगतीत्यर्थः, ताश्च श्रुतेक्षणैरेव दृश्याः, न चर्मचक्षुषा, तेन श्रुतेक्षणैरिति । हे बुध !—हे विद्वन् ततस्ता गर्भवासनरकादिवेदनाः प्रति विचिन्तय—विचारय, आदिशब्देनातीव पापप्रचयवन्मनुष्यतिर्यक्संमूर्छनजमनुजतिर्यग्वेदनानामपि ग्रहणं ॥ ६६ ॥ ५ ॥

---

१ सूचीभिरग्निवर्णाभिः संभिन्नस्य निरन्तरम् । यादृशं गौतम ! दुःखं गर्भे अष्टगुणं भवेत् ॥ १ ॥ गर्भात् निस्सरतः योनियन्त्रे पीडनात् । शतसाहस्रिकं दुःखं कोटीकोटीगुणमपि वा ॥ ॥ २ ॥

गर्भवासादिचिन्ता

अथ मरणभयं दर्शयन् प्रमादपरिहारमुपदिशति—

**वध्यस्य चौरस्य यथा पशोर्वा, संप्राप्यमाणस्य पदं वधस्य ।**
**शनैः शनैरेति मृतिः समीपं, तथाऽखिलस्येति कथं प्रमादः ? ॥ ६७ ॥ ६ ॥**

**धनवि०**—**यथा**—यद्वद्**वध्यस्य**—वधयोग्यस्य **चौरस्य वा**ऽथवा **पशोः**—अजस्य **वधस्य**—हिंसायाः **पदं**—स्थानं **संप्राप्यमाणस्य**—नीयमानस्य **शनैः शनैः**—मंदं मंदं **मृतिः**—मरणं **समीपम्**—आसन्नमेति—आगच्छति **तथा**—तद्वदखिलस्य—सकललोकस्य मृतिः समीपमेतीति हेतोः **कथं ?**—केन प्रकारेण **प्रमादो**—विषयसेवाभिलाषलक्षणस्तवास्तीति ॥ ६७ ॥ ६ ॥

अथ सुखसिपाधयिपया सेवितेपु विषयेषु दुःखकारणत्वं दर्शयन्नुपदिशति—

**बिभेषि जंतो ! यदि दुःखराशेस्तदिंद्रियार्थेषु रतिं कृथा मा ।**
**तदुद्भवं नश्यति शर्म यद्द्राग्, नाशे च तस्य ध्रुवमेव दुःखम् ॥ ६८ ॥ ७ ॥**

**धनवि०**—**हे जंतो !**—हे प्राणिन् **यदि**—चेत् त्वं **दुःखराशेः**—दुःखसमूहाद्**बिभेषि**—भयमाप्नोषि **तत्**—तदा **इंद्रियार्थेषु**—विपयेषु **रतिम्**—

---

**रत्न०**—अथ मृत्योर्भयदर्शनेन प्रमादपरित्यागे प्रतिबोधयन्नाह—**वध्यस्य चौरस्ये**ति०, व्याख्या—यथेति दृष्टान्तोपन्यासे वध्यस्य—वधार्हस्य चौरस्य वा—अथवा पशोः—तिरश्चोऽजस्य वा शनैः शनैर्मृतिः—मरणं समीपमेति—आगच्छति । किं क्रियमाणस्य ?—सम्प्राप्यमाणस्य, किं प्रति ?—पदं—स्थानं प्रति, (वधस्य), तथेति दृष्टान्तोपनये अखिलस्य देहिनो मृतिः शनैः शनैः समीपमेति । यो वर्षमासपक्षदिनप्रहरमुहूर्त्तघटिकादिकः कालो याति सा आयुषस्त्रुटिरेव भवतीत्यर्थः । इतिहेतोर्हे आत्मन् ! त्वया प्रमादो—मद्यादिकः पञ्चधा कथं क्रियते ?, अपितु न कार्य एवेति ॥ ६७ ॥ ६ ॥

अगृद्धसुखं

अतद्वति तत्प्रकारकं ज्ञानं भ्रम इति वचनात्; अत्र भ्रमता च "जह कच्छुल्लो कच्छुं कंडुअमाणो दुहं मुणइ सुक्खं। मोहाउरा मणुस्सा तह कामदुहं सुहं बिंति" ॥१॥[1] इत्याद्युपदेशमालागाथया भावनीयेति, हि यतः कारणात्तद्गर्धमुक्तस्य—विषयप्रमादसुखाभिलाषरहितस्य यत्सुखं भवति तत्सुखं गतोपमं—निरुपमं, चः पुनरायतिमुक्तिदम्—उत्तरकाले मोक्षसुखदायकं भवतीति। अत्र निरुपमता "नैवास्ति राजराजस्य तत् सुखं नैव देवराजस्य। यत् सुखमिहैव साधोर्लोकव्यापाररहितस्य ॥ १ ॥" इत्यादिप्रशमरतिप्रकरणादिभावनाद्भावनीयेति ॥ ७० ॥ ९ ॥

इति तपागच्छ० षोडशशास्त्रस्याध्यात्मकल्पद्रुमस्याधिरोहिणीटीकायां श्रीधनविजयगणिविनिर्मितायां विषयनिग्रहनाम्नी षष्ठी पदपद्धतिः॥६॥

अतद्वति तत्प्रकारकं ज्ञानं भ्रमः, तेन वैषयिकं सुखं सर्वमपि दुःखं वर्त्तते, तत्र सुखज्ञानं भ्रमस्तस्मादिति, तत्—तस्मात्कारणात् गर्द्धेन—तृष्णया मुक्तस्य हि निश्चितं यत् सुखं वर्त्तते तद् गता उपमा यस्य तद्गतोपमं वर्त्तते, च पुनरायतौ—उत्तरकाले मुक्ति—सिद्धिं ददातीति मुक्तिदं वर्त्तते, पूर्वसुखवदायतौ दुःखस्वरूपं नास्तीत्यर्थः, अथवा तस्य सुखस्य गर्द्धो—लौल्यं तेन मुक्तस्येति व्याख्येयं, विषयैः प्रमादैरिति वा पाठः ॥ ७० ॥ ९ ॥ इति विषया-वशतोपदेशाख्यः षष्ठोऽधिकारः ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धुलब्धप्रतिष्ठवरवाचकरत्नचन्द्रः। अध्यात्मकल्पफलदस्य चकार वृत्तिं, षष्ठोऽधिकार इति तत्र गतः सदर्थः॥१॥

१ यथा कच्छुरः कच्छूं कंडूयमानो दुःखं मन्यते सुखं। मोहातुरा मनुष्यास्तथा कामदुःखं सुखं ब्रुवते ॥ उपदेशमाला गा. ॥ १२ ॥ २ श्लो. १२८

विनाशं गताः ?, च पुनर्नरकाः सप्तापि किं प्रश्ने मुद्रिता–राजमुद्रया पिहिताः ?, अत्र किंशब्दो देहलीप्रदीपन्यायेन डमरुकमणिन्यायेन वोभयत्रापि योज्यः, च पुनरायुर्धनदेहबंधवो–जीवितद्रव्यशरीरस्वजनाः किं प्रश्ने ध्रुवाः–शाश्वताः ?, यद्–यस्मात्कारणात्सकौतुकः–अदृष्टकल्याण इव साश्चर्यो विषयैः–इंद्रियार्थैर्विमुह्यसि–विशेषेण मोहं यासीति ॥ ६९ ॥ ८ ॥

अथ विषयनिग्रहोपदेशमुपसंहरन् विषयसुखस्यायतिदुःखकारणत्वमुपदिशति—

**विमोह्यसे किं विषयप्रमादैर्भ्रमात् सुखस्यायतिदुःखराशेः ?।**
**तद्गर्धमुक्तस्य हि यत् सुखं तद्, गतोपमं चायतिमुक्तिदं वा ॥ ७० ॥ ९ ॥**

**धनवि०**—हे आत्मन्नायतिदुःखानां यो राशिस्तत्स्वरूपस्य सुखस्य भ्रमाद्–दुःखत्ववति सुखत्वप्रकारकज्ञानाद्विषयप्रमादैः कर्तृभिस्त्वं किं विमोह्यसे ?–विशेषेण मोहविषयीक्रियसे ?, भावार्थस्त्वायतिदुःखराशिस्वरूपस्य विषयप्रमादसेवनजनितसुखस्य सुखतया ज्ञानं भ्रमः,

---

छच्च सया चेव पणयाला ॥ २ ॥ खासे १ सासे २ जरे ३ दाहे ४, कुच्छिसूले ५ भगन्दरे ६ । अरसा ७ अजीरए ८ दिट्ठी ९, मुहसूले १० अरोयए ११ ॥ ३ ॥ अच्छिवेयण १२ कण्डू य १३, कण्णबाधा १४ जलोयरे १५ । कुट्ठे १६ एमाइया रोगा, पीलयन्ति सरीरिण ॥४॥ मिति, तेषामपि क्षयं मा विचिन्तयेति । च पुनर्नरकाः सप्तसंख्याकाः किं मुद्रिता ?–दत्तद्वारकाः कृताः ?, तेषामपि मुद्रितुमशक्यत्वात्तानुद्घाटितानेव चिन्तयेति, तथा आयुर्धनदेहबन्धवो ध्रुवा–नित्याः सन्ति ?, तेऽपि कदाचिन्नित्या न भवन्तीत्यर्थः ॥ ६९ ॥ ८ ॥

**रत्न०**—अथ सुखस्यायतौ दुःखत्वेन निरूपयन् जीवं प्रतिबोधयितुमाह–**विमोह्यसे किमिति०**, व्याख्या—हे आत्मन् ! सुखस्य भ्रमाद्–भ्रान्तेः विषयाश्च प्रमादाश्च विषयप्रमादास्तैस्त्वं किं विमोह्यसे ?–विमोहं प्राप्यसे इति ?, काक्वाख्यानं, यतः किंलक्षणस्य ?–आयतौ–उत्तरकाले दुःखानां राशिस्तस्य

अगृद्धसुखं

अतद्वति तत्प्रकारकं ज्ञानं भ्रम इति वचनात्; अत्र भ्रमता च "जह कच्छुल्लो कच्छुं कंडुअमाणो दुहं मुणइ सुक्खं। मोहाउरा मणुस्सा तह कामदुहं सुहं बिंति" ॥१॥[1] इत्याद्युपदेशमालागाथया भावनीयेति, हि यतः कारणात्तद्गर्धमुक्तस्य—विषयप्रमादसुखाभिलाषरहितस्य यत्सुखं भवति तत्सुखं गतोपमं—निरुपमं, चः पुनरायतिमुक्तिदम्—उत्तरकाले मोक्षसुखदायकं भवतीति । अत्र निरुपमता "नैवास्ति राजराजस्य तत् सुखं नैव देवराजस्य । यत् सुखमिहैव साधोर्लोकव्यापाररहितस्य ॥ १ ॥" इत्यादिप्रशमरतिप्रकरणादिभावनाद्भावनीयेति ॥ ७० ॥ ९ ॥

इति तपागच्छ० षोडशशास्त्रस्याध्यात्मकल्पद्रुमस्याधिरोहिणीटीकायां श्रीधनविजयगणिविनिर्मितायां विषयनिग्रहनाम्नी षष्ठी पदपद्धतिः॥६॥

अतद्वति तत्प्रकारकं ज्ञानं भ्रमः, तेन वैषयिकं सुखं सर्वमपि दुःखं वर्त्तते, तत्र सुखज्ञानं भ्रमस्तस्मादिति, तत्—तस्मात्कारणात् गर्द्धेन—तृष्णया मुक्तस्य हि निश्चितं यत् सुखं वर्त्तते तद् गता उपमा यस्य तद्गतोपमं वर्त्तते, च पुनरायतौ—उत्तरकाले मुक्ति—सिद्धिं ददातीति मुक्तिदं वर्त्तते, पूर्वसुखवदायतौ दुःखस्वरूपं नास्तीत्यर्थः, अथवा तस्य सुखस्य गर्द्धो—लौल्यं तेन मुक्तस्येति व्याख्येयं, विषयैः प्रमादैरिति वा पाठः ॥ ७० ॥ ९ ॥ इति विषयाप्रशतोपदेशाख्यः षष्ठोऽधिकारः ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धुलब्धप्रतिष्ठवरवाचकरत्नचन्द्रः । अध्यात्मकल्पफलदस्य चकार वृत्तिं, षष्ठोऽधिकार इति तत्र गतः सदर्थः ॥१॥

---

१ यथा कच्छुरः कच्छूं कंडूयमानो दुःखं मन्यते सुखं। मोहातुरा मनुष्यास्तथा कामदुःखं सुखं ब्रुवते ॥ उपदेशमाला गा. ॥ १२ ॥ २ श्लो. १२८

## ७ कषायनिग्रहाधिकारः ।



अनंतरद्वारे विषयनिग्रहणमुक्तं, तच्च कषायनिग्रहे एव भवतीति कषायनिग्रहद्वारमभिधित्सुराह—

अथ कषायाः ।

अथ कषाया इति, अथ कषाया निग्रहविषयीकार्याः प्रतिपाद्यंते इत्यर्थः । ते च कषाया मूलतः क्रोधमानमायालोभाख्याश्चत्वारो भवंति, ते च प्रत्येकं संज्वलनप्रत्याख्यानावरणाप्रत्याख्यानानंतानुबंधिभेदात् षोडश भवंति, ते च हास्यरत्यरतिभयशोकजुगुप्सास्त्रीवेदपुरुषवेदनपुंसकवेदाख्यनवनोकषायसहिताः पंचविंशतिसंख्या भवंतीति । तत्र कषायेषु मुख्यः स्वपरोपघातकत्वाच्च दुष्टः क्रोधो भवतीति पूर्वं क्रोधनिग्रहमुपदिशति—

**रे जीव! सेहिथ सहिष्यसि च व्यथास्तास्त्वं नारकादिषु पराभवभूः कषायैः ।**
**मुग्धोदितैः कुवचनादिभिरप्यतः किं, क्रोधान्निहंसि निजपुण्यधनं दुरापम् ? ॥ ७१ ॥ १ ॥**

धनवि०—रे—तिरस्कारेण संबोधने, **रे जीव !**—रे प्राणिन् त्वं **कषायैः**—कषायसेवनैर्हेतुभूतैर्नारकादिभवेषु **पराभवभूः**—पराभवस्थानं सन् ताः प्रज्ञापनाजीवाभिगमादिशास्त्रप्रसिद्धा **व्यथा**—दशविधा वेदनाः पूर्वभवे **सेहिथ**—सहनविषयीकृतवानित्यर्थः, **च** पुनरग्रेतनभवे



---

रत्न०—अथ कषायाद्यवशतोपदेशविषये सप्तमोऽधिकारः किञ्चिद्विव्रियते । तत्र प्रथमं कषायाणां फलमाह—**रे जीव! सेहिथेति**०, व्याख्या—रे इति सम्बोधने, रे जीव ! त्वं कषायैः कारणैर्नारकादिषु आदिशब्दात्तिर्यग्मनुष्येष्वपि ता वक्तुमशक्या इत्यर्थः व्यथाः प्रति सेहिथ—सोढवान्, च पुनरागामि-

मानामान-फलं

कषायैस्त्वं ता व्यथाः सहिष्यसि; अतः कारणान्मुग्धोदितैः—निर्विवेकिजनप्रतिपादितैः कुवचनादिभी—रेकारतुङ्कारप्रभृतिगालिवाक्यैरपि क्रोधात्—प्रथमकषायोदयाद्दुरापं—दुर्लभं निजपुण्यधनं—स्वकीयसुकृतलक्षणं धनं किं—किमर्थं निहंसि—विनाशयसीत्यर्थः ? ॥ ७१ ॥ १ ॥

क्रोधानंतरमवसरप्राप्तो मानो भवतीत्यर्थतो युग्मरूपेण पद्यद्वयेन माननिग्रहमुपदिशति—

पराभिभूतौ यदि मानमुक्तिस्ततस्तपोऽखंडमतः शिवं च ।
मानाहतिर्दुर्वचनादिभिश्चेत्तपःक्षयात्तन्नरकादिदुःखम् ॥ ७२ ॥ २ ॥
वैरादि चात्रेति विचार्य लाभालाभौ कृतिन्नाभवसंभविन्याम् ।
तपोऽथवा मानमवाभिभूताविहास्ति नूनं हि गतिर्द्विधैव ॥ ७३ ॥ ३ ॥ "युग्मं"

धनवि०—यदि—चेत्पराभिभूतौ—दुर्वचनादिपराभवे जायमाने मानमुक्तिः—मानत्यागो भवति तदा ततो—मानत्यागात्तपो द्वादश-

---

भवेऽपि सहिष्यसि त्वं, कथम्भूतः ?—पराभवाना भूः—पदं स्थानं अतः—अस्मात्कारणान्मुग्धोदितैः—मुग्धजनभाषितैः कुवचनादिभिरपि निजस्य—स्वस्य पुण्यमेव धनं २ कि निहंसि ?, अपितु मा जहि, कस्मात् ?—क्रोधाद्, यतः किंलक्षणं ?—दुरापम्, अतस्त्वं क्रोधादिभिः कषायैस्तपोदानादिपुण्यं मा हार्षीरित्युपदेशः ॥ ७१ ॥ १ ॥

रत्न०—अथ मानामुक्तेर्मानमुक्तेश्च पृथक्फले आह—पराभिभूताविति, वैरादि चात्रेति च, युग्म०, व्याख्या—हे आत्मन् ! परेषाम-

भेदमखंडं—खंडरहितं भवति, च पुनरतः—अखंडतपसः **शिवं**—मोक्षो भवति; **चेद्**—यदि **दुर्वचनादिभि**र्गालितिरस्कारादिभिर्माना-दृतिः—अभिमानादरो भवति तदा **तपःक्षयात्**—तपःखंडनान्नारकादिदुःखं भवतीति ॥ ७२ ॥ २ ॥ च पुनरत्र—इहभवे **वैरादि**-विरोधप्रमुखम्, आदिपदात्परस्परं प्रहारादिकं भवतीति हे **कृतिन्** !—हे पण्डित इति—अमुना प्रकारेण **लाभालाभौ**—आयव्ययौ **विचार्य**—पौर्वापर्यालोचनया परामृश्य**भवसंभविन्यां**—भवं यावत्संभावनाविषयीकृतायाम**भिभूतौ**—पराभूतौ सत्यां **तपः**—स्वाचरितं तपःकर्म अथवा **मानं**—अहंकार**मव**—रक्षेत्यर्थः; **हि** यतः कारणादिह—संसारे **नूनं**—निश्चितं पराभिभूतौ जायमानायां **गतिः**—मार्गः प्रकारो वा **द्विधैव**—द्विप्रकारैव तपोरक्षणं मानरक्षणं वाऽस्तीति, भावार्थस्तु मानत्यागे आभवसंभविवचनमात्रपराभवो भवति, मानादरे च परभव-संभविनरकादिपराभवो भविष्यतीति लाभालाभरूपं मार्गद्वयं विचार्य यदिष्टं तद्गृहाणेति ॥ ७३ ॥ ३ ॥

---

भिभूतौ सत्यां यदि मानस्य—अहंकारस्य मुक्तिः—मोचनं वर्त्तते ततो मानमुक्तेस्तपः अखण्डं वर्त्तते, अतोऽखण्डात्तपसः शिवं—मोक्षो भविष्यति, चेति विशेषे पक्षान्तरे वा, दुर्वचनादिभिर्हेतुभिर्मानादरणात्—मानाङ्गीकारजनितात्तपःक्षयात्तन्निरयावलिकोपाङ्गोक्तं नरकादिदुःखं भविष्यति, च पुनरत्र भवे वैरादिर्वर्धते, आदिशब्दाद्वैरजन्यद्रव्यनाशमरणदुःखयोर्ग्रहणं, हे कृतिन् !—हे पण्डित त्वं लाभालाभौ विचार्य मानमुक्तेर्लाभं मानादृतेश्चालाभं विचार्या-भिभूतौ क्रियमाणायां तपः प्रति अव—रक्ष अथवा मानमव, अभिभूतौ किंभूतायां ?—भवं मर्यादीकृत्याभवमाभवं सम्भवो अस्त्यस्याः सा आभव-सम्भविनी तस्यां, परभवे अनुगामिनी नास्तीति सूचनं नरकादिदुःखं अनेकभवानुबन्धीति सूचनं च, इह पक्षे गतिरूपायो, नूनं—निश्चितं हि यस्मात् कारणाद्द्विधैवास्ति, एवकारः अन्यव्यवच्छेदार्थस्तेन तृतीया गतिर्नास्तीति सूचितं ॥ ७२ ॥ ७३ ॥ अर्थतो युग्मं ॥

दुर्वचनादिपराभवसहने शिवं भवतीत्युपदिशति—

**श्रुत्वाऽऽक्रोशान् यो मुदा पूरितः स्याल्लोष्टाद्यैर्यश्चाहतो रोमहर्षी ।**
**यः प्राणांतेऽप्यन्यदोषं न पश्यत्येष श्रेयो द्रागलभेतैव योगी ॥ ७४ ॥ ४ ॥**

धनवि०—यः पुमानाक्रोशान्—निष्ठुरवचनानि श्रुत्वा—आकर्ण्य मुदा—हर्षेण पूरितो—व्याप्तः स्यात्, च पुनर्यो लोष्टाद्यैः—पाषाणखंडप्रभृतिभिराहतः—आहननविषयीकृतो रोमहर्षी—रोमांचितः स्यात्, च पुनर्यः प्राणांतेऽपि—जीवितनाशेऽप्यन्यदोषं—परापवादं न पश्यति—न विलोकयति, उपलक्षणत्वान्न वक्ति च, स एष योगी—मुनिः श्रेयो—मोक्षं द्राक् लभेतैव—निश्चयेन प्राप्नुयादित्यर्थः; अत्रैव-कारोऽत्यंतायोगं व्यवच्छिनत्तीति ॥ ७४ ॥ ४ ॥

---

रत्न०—कषायपरित्यागे मुक्तिफलमाह—श्रुत्वाऽऽक्रोशानिति०, व्याख्या—यो देही आक्रोशान् मुग्धानार्यजनकृतान् श्रुत्वा मुदा—हर्षेण पूरितो—व्याप्तः स्यात्, यैः शब्दैरेष मामाक्रोशति तच्छब्दानां प्रवृत्तिनिमित्तमहमनन्तशो बभूव तर्हि कः कषाय इति ?, च पुनर्यो लोष्टाद्यैराद्यशब्दा-द्यष्टिलगुडादिग्रहणं आहतः—ताडितः सन् लोमहर्षो—रोमोत्कम्पो अस्यास्तीति लोमहर्षी स्याद्, वरं मम कर्मक्षये सहायी मिलित इति गजसुकुमालाद्य-पिवद्, यः प्राणान्तेऽप्यन्येषां दोषं न पश्यति, अहं चेद्दोषवान् दोषतदा(तदा दोषवत्ताया अ)न्येषां दर्शने का ईहेति विमृश्य । एष इति—एतद्गुणवान् योगी—मनोवचनकाययोगवान् द्राक्—शीघ्रमेवेति—निश्चये श्रेयो—मोक्षं लभेत्—प्राप्नुयात् ॥ ७४ ॥ ४ ॥

अथ सामान्येन कषायाणां निग्रहमुपदिशति—

**को गुणस्तव कदा च कषायैर्निर्ममे? भजसि नित्यमिमान् यत् ।**
**किं न पश्यसि च दोषममीषां, तापमत्र नरकं च परत्र? ॥ ७५ ॥ ५ ॥**

**धनवि०**—हे आत्मन्! **कषायैः**—क्रोधादिभिस्तव **कः**—किंनामा च पुनः **कदा**—कस्मिन् काले **गुणः**—उपकारो **निर्ममे**—चक्रे, **यद्**—यस्मादिमान्—कषायान् **नित्यं**—निरंतरं **भजसि**—सेवसे?, **च पुनरमीषां**—कषायाणामत्र—इह लोके **तापं**—चित्तपरितापं पश्चात्तापलक्षणं, च पुनः **परत्र**—परलोके **नरकगतिप्राप्तिलक्षणं दोषं**—वैगुण्यं **किं न पश्यसि**—न विलोकयसीत्यर्थः ? ॥ ७५ ॥ ५ ॥

---

**रत्न०**—अथ भङ्ग्या कषायेषु गुणाभावं दर्शयन्नाह—**को गुणस्तवे**ति०, व्याख्या—हे आत्मन्! च पुनरहं त्वां पृच्छामि त्वं कथयेति शेषः, तव कषायैः—क्रोधमानमायालोभैः कदा को गुणो निर्ममे—निर्मितः? यद्—यस्मात्कारणात् इमान् कषायान्नित्यं भजसि—सेवसे, नित्यं सेवा तु तेषामेव क्रियते यैः कदापि कश्चिद्गुणः कृतो भवति, अकृतगुणानां सेवाऽजागलस्तनमुखप्रक्षेप इवेति सूचनं, अथ गुणोऽपि कृतो मा भवतु यदि दोषः कृतो न स्यात्, ततो गुणेऽसत्यपि कषायदोषमाह—अत्र—इह लोके तापं—तपनं शरीरे उष्णीभवने चित्तसन्तापं वा परत्र—प्रेत्य नरकं—नरकगतिमिति ॥ ७५ ॥ ५ ॥

कषाया-
कषायफलं

अथ कषायसेवनासेवनयोः फलविशेषविभावनामाह—

यत् कषायजनितं तव सौख्यं, यत् कषायपरिहाणिभवं च ।
तद्विशेषमथवैतदुदर्कं, संविभाव्य भज धीर! विशिष्टम् ॥ ७६ ॥ ६ ॥

धनवि०—हे आत्मन्! तव कषायजनितं—स्वापराधिषु क्रोधादिकरणादिनोत्पादितं यत्सौख्यं कषायाणां परिहाणिः—क्षयस्तदुद्भूतं च यत् सौख्यं भवति तद्विशेषं—तयोः—कषायजनितसुखकषायक्षयजनितसुखयोर्विशेषं—न्यूनाधिकगुणतालक्षणमथवा एतदुदर्कं—कषायकरणकषायाकरणयोरुत्तरकालप्रादुर्भूतं कुगतिसुगतिलक्षणं फलं—साध्यं संविभाव्य—सम्यग् पर्यालोच्य हे धीर! विशिष्टं—वरिष्टमनयोर्मध्ये भज—श्रयेत्यर्थः ॥ ७६ ॥ ६ ॥

अथ सामान्यतः कषायनिग्रहमुपदिश्य पूर्वोपदिष्टं विशेषतः पुनर्माननिग्रहमुपदिशति—

सुखेन साध्या तपसां प्रवृत्तिर्यथा तथा नैव नु मानमुक्तिः ।
आद्या न दत्तेऽपि शिवं परा तु, निदर्शनाद्बाहुबलेः प्रदत्ते ॥ ७७ ॥ ७ ॥

---

रत्न०—अथ कषायकरणाकरणे सुखविचाराय प्रेरयितुमाह—यत्कषायजनितमिति०, व्याख्या—हे आत्मन्! यत्कषायैर्जनितं तव सौख्यं वर्त्तते च पुनर्यत्कषायाणा परिहाणिः—परित्यागस्तस्या भवम्—उत्पन्नं सुखं वर्त्तते तयोर्विशेपम्, अथवैतयोः—कषायकषायपरिहाण्योरुदर्कम्—उत्तरकालभावि फलं संविभाव्य—सम्यग्विचार्य तयोर्मध्ये हे धीर! विशिष्टं—वरिष्टं भज—सेवस्व ॥ ७६ ॥ ६ ॥

धनवि०—यथा—येन प्रकारेण तपसां—अनशनादीनां प्रवृत्तिः—आचरणा सुखेन—अप्रयासेन साध्या, तथा—तेन प्रकारेण मानमुक्तिः—अहंकारनिवृत्तिः सुखेन साध्या नैव भवति; यतः कारणादाद्या—तपसां प्रवृत्तिः केवला शिवं—मोक्षं न दत्तेऽपि—न ददात्यपीत्यर्थः, अत्रापिशब्देन तपसां प्रवृत्तिर्मानमुक्तिसहिता शिवं दत्ते, मानसहिता च शिवं न दत्ते इति सूच्यते, तु पुनः परा—मानमुक्तिर्बाहुबलिनिदर्शनाद्—बाहुबलिदृष्टांताच्छिवं प्रदत्ते—निश्चयेन ददातीत्यर्थः "धम्मो मएण हुंतो तो नवि सीउण्हवायविज्झडिओ। संवच्छरमणसीओ बाहुबली तह किलिस्संतो[1]" ॥ १ ॥ इति गाथार्थभावनया बाहुबलिदृष्टांतः स्पष्ट एवेति ॥ ७७ ॥ ७ ॥

अनंतरोक्तार्थमेव विशदयन्नितिकर्त्तव्यतामादिशति—

**सम्यग्विचार्येति विहाय मानं, रक्षन् दुरापाणि तपांसि यत्नात्।**
**मुदा मनीषी सहतेऽभिभूतीः, शूरः क्षमायामपि नीचजाताः ॥ ७८ ॥ ८ ॥**

रत्न०—अथ तपःप्रवृत्तेरपि मानमुक्तिः कर्तुं दुःशकेति दर्शयन्नाह—सुखेन साध्येति, सम्यग्विचार्येति च। युग्मं, व्याख्या—हे आत्मन्! यथा तपसां प्रवृत्तिः—प्रवर्त्तनं सुखेन साध्या वर्त्तते तथा मानस्य मुक्तिः—मोचनं न सुखसाध्या, आद्या—प्रथमोद्दिष्टा तपसां प्रवृत्तिः शिवं—मोक्षं न दत्तेऽपि—न ददात्यपि, मानमुक्तिं विना केवलेत्यपिशब्दार्थः, तुरिति विशेषे, परा—अन्या मानमुक्तिः शिवं प्रदत्ते, कस्माद्?—निदर्शनाद्—दृष्टान्तात्, कस्य?—बाहुबलेः—भरतानुजस्य, सत्यपि तपसि बाहुबलिना मानमुक्तिर्न कृता तावत्केवलं नोत्पन्नमेव, यदा मानमुक्तिः कृता तदा तत्समय एव केवलमुत्पन्नमिति ॥ ७७ ॥ ७ ॥

१ धर्मो मदेन अभविष्यत् तर्हि नहि शीतोष्णवातविघटितः (उपद्रुतः)। संवत्सरमनशितो बाहुबलिस्तथाऽक्लिक्ष्यत् ॥ १ ॥ उपदेशमाला श्लो० २५ ॥

धनवि०—इत्यनंतरोपदिष्टं सम्यग्—यथास्वरूपतया विचार्य मानम्—अहंकारं विहाय—त्यक्त्वा दुरापाणि—भवकोटिशतैरपि दुष्प्रापाणि तपांसि—तपःकर्माणि पूर्वमाचरितानि यत्नाद्—उद्यमाद्रक्षन्—पालयन् क्षमायां—क्षांतौ शूरो—वीरो मनीषी—पंडितः साधुर्नीचजाता अपि—अधमजनजनिता अपि अभिभूतीः—पराभवान् मुदा—मम प्राकृतकर्मनिर्जराऽवांछिता सहसा स्वत एव जायत इति हर्षेण सहते—क्षमत इत्यर्थः ॥ ७८ ॥ ८ ॥

अथ क्रोधमानयोर्द्वेषत्वेन साम्यात् मानस्य क्रोधसहचारित्वाच्च कथंचिद्भेदात् क्रमविपर्ययेऽपि क्रोधनिग्रहमुपदिशति—

**पराभिभूत्याऽल्पिकयाऽपि कुप्यस्यघैरपीमां प्रतिकर्तुमिच्छन् ।**
**न वेत्सि तिर्यग्नरकादिकेषु, तास्तैरनंतास्त्वतुला भवित्रीः ॥ ७९ ॥ ९ ॥**

धनवि०—हे आत्मन् ! त्वमल्पिकयाऽपि—अतिस्तोकयाऽपि पराभिभूत्या—परकृतदुर्वचनादिपराभवेन कुप्यसि—कोपं गच्छसि, तु

---

रत्न०—मनीषी—पण्डितः इति सम्यग्विचार्य मानं विहाय—त्यक्त्वा मुदा—हर्षेणाभिभूतीः—अभिभवान् सहते—क्षमते, किं कुर्वन् ?—रक्षन्, कानि प्रति ?—तपांसि प्रति, किंलक्षणानि ?—दुरापाणि—दुष्प्रापाणि, कस्माद् ?—यत्नात्, मनीषी किंलक्षणः ?—शूरो—वीरः, कस्यां ?—क्षमायां—क्षान्तौ, अभिभूतीः किंलक्षणाः ?—नीचेभ्यः—पामरेभ्यो जाताः, कथमपि बलवत्पुरुषेभ्यो जातास्तु सोढव्या एव, परं नीचजनकृताभिभूतिसहने केवलं क्षमैव हेतुरिति तेनात्रापिशब्दो योज्यः ॥ ७८ ॥ ८ ॥ "युग्मव्याख्या"

रत्न०—अथ पराभिभूतिसहनमेव भङ्ग्योपदिशति—**पराभिभूत्येति०**, व्याख्या—हे आत्मन् ! त्वमल्पिकयाऽपि—अतीवाल्पयाऽपि परेषामभिभूत्या—

पुनरघैरपि—वधबंधनादिपापकर्मभिरपीमां पराभिभूतिं प्रतिकर्तुं—पराभवकर्तॄन् प्रति प्रतिपराभवं कर्तुमिच्छन्—वांछन्, तैः पापैस्तिर्यग्-नरकादिषु भवेष्वनंता—दुरंता अतुला—असदृशा भवित्रीः—अग्रेभवनशीलास्ताः पराभिभूतीः परमाधार्मिकादिकृतास्त्वं न वेत्सि ?—न जानासीति; भावार्थस्तु "वहमारणअब्भक्खाणदाणपरधणविलोवणाईणं। सव्वजहण्णो उदओ दसगुणिओ इक्कसि कयाणं ॥ १ ॥ तिव्वयरे उ पओसे सयगुणिओ सहस्सकोडिगुणो। कोडाकोडिगुणो वा हुज्ज विवागो बहुतरो वा[1] ॥ २ ॥ इत्यादिना स्पष्ट एवेति ॥ ७९ ॥ ९ ॥

ननु पराभवकर्तृषु क्रोधमानौ कथं परिहरणीयौ इत्याशंकायामुपदिशति—

**धत्से कृतिन्! यद्यपकारकेषु, क्रोधं (पा० मानं) ततो धेह्यरिषट्क एव।**
**अथोपकारिष्वपि तद्भवार्त्तिकृत्कर्महन्मित्रबहिर्द्विषत्सु ॥ ८० ॥ १० ॥**

धनवि०—हे कृतिन्!—हे पण्डित यदि—चेत्त्वमपकारकेषु—अहितकारकेषु च क्रोधं—कोपं तत्सहचरितत्वात् पाठान्तरेण वा—अथवा

---

अभिभवेन कुप्यसि—कोपं करोषि, अभिभवकारकपुरुषायेति गम्यं, किं कुर्वन् ?—इच्छन्—वाञ्छन्, कि कर्तुं ?—प्रतिकर्तुं—प्रतिक्रियां कर्तुं, केषाम् ?—अघानां—पापानां नाशं वांछन्निति भावः, तुरिति विशेषे परमार्थेनाभिभूतीर्भवित्रीः—भाविनीर्न वेत्सि—न जानासि, कैः ?—तैर्नवीनकृतैरघैः, कियतीः ?—अनन्ता—अन्तरहिताः, पुनः कीदृशीः—अतुला—उपमारहिताः, केषु ?—नरकादिषु, आदिशब्दान्मनुष्यदेवदुर्गत्योरपि ग्रहणं ॥ ७९ ॥ ९ ॥

---

१ वधमारणाभ्याख्यानदानपरधनविलोपनादीनाम्। सर्वजघन्य उदयो दशगुणित एकशः कृतानाम् ॥ १ ॥ तीव्रतरे तु प्रद्वेषे शतगुणितो वा सहस्रकोटि-गुणः। कोटिकोटिगुणो वा भवति विपाको बहुतरो वा ॥ २ ॥ उपदेशमाला. श्लो० १७७-८

मानम्—अहंकारं धत्से—धरसि, ततो दुर्गतिदायकत्वेनापकारिपु क्रोधमानकरणप्राप्तेररिपट्के एव क्रोधं मानं वा धेहि—धरेत्यन्वयः, तत्रारिपट्कं कामक्रोधलोभमानमदहर्षलक्षणं, तत्र परपरिगृहीतास्वनूढासु ऊढासु वा स्त्रीपु दुरभिसंधिः कामः १, परस्यात्मनो वाऽपायमविचार्य कोपकरणं क्रोधः २, दानार्हेपु स्वधनाप्रदानं निष्कारणं परधनग्रहणं च लोभः ३, दुरभिनिवेशामोक्षो युक्तोक्ताग्रहणं वा मानः ४, कुलमदादिभिरहंकारकरणं मदः ५, निर्निमित्तं परदुःखोत्पादनेन स्वस्य द्यूतपापद्धर्याद्यनर्थसंश्रयेण वा मनःप्रमोदो हर्षः ६, एतेपामेव चतुर्गतिक्लेशकारणत्वेनापकारकत्वात्; अथेति पक्षांतरे यद्युपकारिष्वपि—हितकारकेष्वपि क्रोधमथवा मानं धत्से तत्—तदा भवः—संसारस्तस्यार्त्तिः—पीडा तां कुर्वंतीति भवार्त्तिकृंति सांसारिकदुःखदायकत्वात् तानि च तानि कर्माणि च—ज्ञानावरणादीनि तानि हरंति—अपनयंतीति भवार्त्तिकृत्कर्मह्रंति तानि च तानि परीपहोपसर्गकरणादिना कर्मक्षयलक्षणोपकारकत्वेन मित्राणि च—सुहृदो भवार्त्तिकृत्कर्महृन्मित्राणि तान्येव बहिर्द्विपदो—बाह्यवैरिणो भवार्त्तिकृत्कर्महृन्मित्रबहिर्द्विपन्तस्तेपु भवार्त्तिकृत्कर्महृन्मित्रबहिर्द्विपत्सु क्रोधं मानं वा धेहीति; भावार्थस्तु इह लोके

---

रत्न०—अथ तव यदि कोपस्तदा वैरिष्वेव युक्त इत्यात्मानमुपदिशति—धत्से कृतिन्निति०, व्याख्या—हे कृतिन्!—हे पण्डित त्वं यदि अपकारकेषु—तवापकारिषु वैरिष्वित्यर्थः क्रोधं पाठान्तरेण वा मानं धत्से—वहसि ततः—तद्वैरिणां पट्के एव—क्रोधमानमायालोभरागद्वेषलक्षणे एव धेहि—धत्स्व—वहस्व, एवकारः अन्ययोगव्यवच्छेदार्थस्तेन नान्येषु, अथेति पक्षान्तरे यदि त्वमुपकारिष्वपि—उपकारकेषु मित्रेष्वित्यर्थः क्रोधं मानं वा धत्से तद्—तर्हि भवे—ससारे अर्त्ति—पीडां कुर्वन्तीति भवार्त्तिकृंति एवंविधानि यानि कर्माणि तानि प्रहरन्तीति भवार्त्तिकृत्कर्मह्रन्ति एवंविधानि मित्राणि तान्येव बहिर्द्विपन्तो—बाह्यवैरिणस्तेषु धेहि । अथ भावार्थ उच्यते—गजसुकुमालादीनां बाह्यद्विपन्तः सोमिलादयस्ततो मित्राणि सन्ति, कर्मक्षये साहाय्य-

मित्रत्वं
द्विषतां

पुनरघैरपि—वधबंधनादिपापकर्मभिरपीमां पराभिभूतिं प्रतिकर्तुं—पराभवकर्तॄन् प्रति प्रतिपराभवं कर्तुमिच्छन्—वांछन्, तैः पापैस्तिर्यग्नरकादिषु भवेष्वनंता—दुरंता अतुला—असदृशा भवित्रीः—अग्रेभवनशीलास्ताः पराभिभूतीः परमाधार्मिकादिकृतास्त्वं न वेत्सि ?—न जानासीति; भावार्थस्तु "वहमारणअब्भक्खाणदाणपरधणविलोवणाईणं । सव्वजहण्णो उदओ दसगुणिओ इक्कसि कयाणं ॥ १ ॥ तिव्वयरे उ पओसे सयगुणिओ सहस्सकोडिगुणो । कोडाकोडिगुणो वा हुज्ज विवागो वहुतरो वा'[1] ॥ २ ॥ इत्यादिना स्पष्ट एवेति ॥ ७९ ॥ ९ ॥

ननु पराभवकर्तृषु क्रोधमानौ कथं परिहरणीयौ इत्याशंकायामुपदिशति—

धत्से कृतिन्! यद्यपकारकेषु, क्रोधं ( पा० मानं ) ततो धेह्यरिषट्क एव ।
अथोपकारिष्वपि तद्भवार्त्तिकृत्कर्महृन्मित्रबहिर्द्विषत्सु ॥ ८० ॥ १० ॥

धनवि०—हे कृतिन्!—हे पण्डित यदि—चेत्त्वमपकारकेषु—अहितकारकेषु च क्रोधं—कोपं तत्सहचरितत्वात् पाठान्तरेण वा—अथवा

अभिभवेन कुप्यसि—कोपं करोषि, अभिभवकारकपुरुषायेति गम्यं, किं कुर्वन् ?—इच्छन्—वाञ्छन्, कि कर्तुं ?—प्रतिकर्तुं—प्रतिक्रियां कर्तुं, केषाम् ?—अघानां—पापानां नाशं वांछन्निति भावः, तुरिति विशेषे परमार्थेनाभिभूतीर्भवित्रीः—भाविनीर्न वेत्सि—न जानासि, कैः ?—तैर्नवीनकृतैरघैः, कियतीः ?—अनन्ता—अन्तरहिताः, पुनः कीदृशीः—अतुला—उपमारहिताः, केषु ?—नरकादिषु, आदिशब्दान्मनुष्यदेवदुर्गत्योरपि ग्रहणं ॥ ७९ ॥ ९ ॥

[1] वधमारणाभ्याख्यानदानपरधनविलोपनादीनाम् । सर्वजघन्य उदयो दशगुणित एकशः कृतानाम् ॥ १ ॥ तीव्रतरे तु प्रद्वेषे शतगुणितो वा सहस्रकोटिगुणः । कोटिकोटिगुणो वा भवति विपाको बहुतरो वा ॥ २ ॥ उपदेशमाला. श्लो० १७७–८

मानम्–अहंकारं धत्से–धरसि, ततो दुर्गतिदायकत्वेनापकारिषु क्रोधमानकरणप्राप्तेररिषट्के एव क्रोधं मानं वा धेहि–धरेत्यन्वयः, तत्रारिषट्कं कामक्रोधलोभमानमदहर्षलक्षणं, तत्र परपरिगृहीतास्वनूढासु ऊढासु वा स्त्रीषु दुरभिसंधिः कामः १, परस्यात्मनो वाऽपायमविचार्य कोपकरणं क्रोधः २, दानार्हेषु स्वधनाप्रदानं निष्कारणं परधनग्रहणं च लोभः ३, दुरभिनिवेशामोक्षो युक्तोक्ताग्रहणं वा मानः ४, कुलमदादिभिरहंकारकरणं मदः ५, निर्निमित्तं परदुःखोत्पादनेन स्वस्य द्यूतपापर्द्ध्याद्यनर्थसंश्रयेण वा मनःप्रमोदो हर्षः ६, एतेषामेव चतुर्गतिक्लेशकारणत्वेनापकारकत्वात्; अथेति पक्षांतरे यद्युपकारिष्वपि–हितकारकेष्वपि क्रोधमथवा मानं धत्से तत्–तदा भवः–संसारस्तस्यार्त्तिः–पीडा तां कुर्वंतीति भवार्त्तिकृंति सांसारिकदुःखदायकत्वात् तानि च तानि कर्माणि च–ज्ञानावरणादीनि तानि हरंति–अपनयंतीति भवार्त्तिकृत्कर्महृंति तानि च तानि परीषहोपसर्गकरणादिना कर्मक्षयलक्षणोपकारकत्वेन मित्राणि च–सुहृदो भवार्त्तिकृत्कर्महृन्मित्राणि तान्येव बहिर्द्विषदो–बाह्यवैरिणो भवार्त्तिकृत्कर्महृन्मित्रबहिर्द्विषन्तस्तेषु भवार्त्तिकृत्कर्महृन्मित्रबहिर्द्विषत्सु क्रोधं मानं वा धेहीति; भावार्थस्तु इह लोके

---

रत्न०—अथ तत्र यदि कोपस्तदा वैरिष्वेव युक्त इत्यात्मानमुपदिशति–धत्से कृतिन्निति०, व्याख्या—हे कृतिन्!–हे पण्डित त्वं यदि अपकारकेषु–तवापकारिषु वैरिष्वित्यर्थः क्रोधं पाठान्तरेण वा मानं धत्से–वहसि ततः–तर्हि अरीणां षट्के एव–क्रोधमानमायालोभरागद्वेषलक्षणे एव धेहि–धत्स्व–वहस्व, एवकारः अन्ययोगव्यवच्छेदार्थस्तेन नान्येषु, अथेति पक्षान्तरे यदि त्वमुपकारिष्वपि–उपकारकेषु मित्रेष्वित्यर्थः क्रोधं मानं वा धत्से तत्–तर्हि भवे–संसारे अर्त्ति–पीडा कुर्वन्तीति भवार्त्तिकृंति एवंविधानि यानि कर्माणि तानि प्रहरन्तीति भवार्त्तिकृत्कर्महृन्ति एवंविधानि मित्राणि तान्येव बहिर्द्विषन्तो–बाह्यवैरिणस्तेषु धेहि। अथ भावार्थ उच्यते–गजसुकुमालादीनां बाह्यद्विषन्तः सोमिलादयस्ततो मित्राणि सन्ति, कर्मक्षये साहाय्य-

मित्रत्वं
द्विषतां

वाह्यवैरिणः खलु प्राकृतकर्मनिर्जराकारणत्वेन परलोकेऽनंतसुखप्राप्तिसाहाय्यकारकत्वादुपकारिणो भवंति यथा गजसुकुमालावंतिसुकुमालादीनां सोमिलशृगाल्यादय इति ॥ ८० ॥ १० ॥

अथ क्रमप्राप्तं च मायानिग्रहमुपदिशति—

**अधीत्यनुष्ठानतपःशमाद्यान्, धर्मान् विचित्रान् विदधत् समायान् ।**
**न लप्स्यसे तत्फलमात्मदेहक्केशाधिकं तांश्च भवान्तरेषु ॥ ८१ ॥ ११ ॥**

धनवि०—अधीतिश्च—अध्ययनमनुष्ठानं च—पडावश्यकादिक्रिया तपश्च द्वादशभेदं शमश्च—उपशमस्ते आद्या येषां ते तथा, आदिपदाद्दमदानादिपरिग्रहः तानधीत्यनुष्ठानतपःशमाद्यान् विचित्रान्—अनेकप्रकारान् समायान्—उत्कटपरवंचनात्मकपरिणामलक्षणमायया सहितान् धर्मान्—धर्मकार्याणि विदधत्—कुर्वन् आत्मदेहक्केशाधिकं—निजशरीरश्रमातिरिक्तं तत्फलं—तेषां धर्माणां फलं न लप्स्यसे—नाप्स्यसे,

---

दानात्, ततः सोमिलादय उपकारिणः, तेन यद्युपकारिषु क्रोधः कर्त्तव्यस्तदा सोमिलादिषु तत्त्वतो मित्रेषु बाह्यतो वैरिषु कर्त्तव्यः, अथापकारिषु कर्त्तव्यस्तदाऽन्तर्वैरिषु क्रोधादिषु कर्त्तव्य इत्येवं ज्ञात्वा गजसुकुमालादिभिः सोमिलादिभ्यो न कुपितमिति ॥ ८० ॥ १० ॥

रत्न०—अथ क्रोधमानमुक्तिविषये उपदिश्य मायाविषये उपदिशति—**अधीत्यनुष्ठानेष्विति०**, व्याख्या—हे आत्मन् ! त्वमधीतिः—अध्ययनं अनुष्ठानं—योगोपधानसामायिकपौषधादिकरणलक्षणं तपः—षष्ठाष्टमादि शमः—उपशमस्ते आद्या येषान्ते तान्, आद्यशब्देन वैयावृत्त्यप्रभृतिग्रहणं, धर्मान् विदधत्—कुर्वन् तेषां धर्माणां फलं तत्फलं न लप्स्यसे, फलं किंलक्षणं ?—आत्मनः—स्वस्य देहस्य क्केशस्तस्मादधिकं, देहक्केशः कृतस्तदेव फलं

च पुनर्भवान्तरेषु–परभवेषु तानध्ययनादीन् धर्मान् मायां च कुर्वन्न लप्स्यसे; नन्वेवं सति महाबलभवापेक्षया मायाकारिणा मल्लिनाथेन तीर्थकरर्द्धिः कथं प्राप्तेति चेन्न, अत्रोपदेशो उत्कटमायाकारिणः केवलं जनरंजनादिवंचनबुद्ध्या धर्मकर्मणि मायाकारिणश्च धर्मफलवैफल्यदर्शनात् ॥ ८१ ॥ ११ ॥

ज्ञानादि-लोभ-कर्त्तव्यता

अथ क्रमप्राप्तं लोभनिग्रहमुपदिशति—

**सुखाय धत्से यदि लोभमात्मनो, ज्ञानादिरत्नत्रितये विधेहि तत् ।**
**दुःखाय चेदत्र परत्र वा कृतिन्!, परिग्रहे तद्बहिरांतरेऽपि च ॥ ८२ ॥ १२ ॥**

**धनवि०**—हे आत्मन् ! **यदि**–चेदात्मनः–स्वस्य **सुखाय लोभं धत्से**–धरसि **तत्**–तदा **ज्ञानादिरत्नत्रितये**–ज्ञानदर्शनचारित्ररूपरत्नत्रये लोभं विधेहीति, अत्र "जातौ जातौ यदुत्कृष्टं, तद्रत्नमभिधीयते" इति वचनादुत्कृष्टे ज्ञानदर्शनचारित्रे यत्नं विधेहीत्यर्थः; हे अकृ-

---

नान्यत्फलमित्यर्थः, केषु ?–भवान्तरेषु–अन्यजन्मसु, च पुनस्तदधीत्यनुष्ठानतपःशमाद्यान् धर्मान् न लप्स्यते, समायया कृतत्वाद्बोधेर्दुर्लभत्वाच्च, अत्रापि भवान्तरेष्विति योज्यं ॥ ८१ ॥ ११ ॥

**रत्न०**—अथ लोभमुक्तिमाश्रित्योपदिशति–**सुखाय धत्से०** इति, व्याख्या—हे आत्मन् ! यदि त्वमात्मनः–स्वस्य सुखाय हेतवे लोभं धत्से–दधासि तत्–तर्हि ज्ञानमादौ यस्य तद् ज्ञानादि तच्च रत्नत्रितयं च ज्ञानादिरत्नत्रितयं तस्मिन् ज्ञानदर्शनचारित्रलक्षणे इत्यर्थः विधेहि–कुरु, रत्नोपमानेन निधानीकर्तुं योग्यत्वमुपदिष्टं, अन्यस्मिन्नसारे वस्तुनि लोभः कृतस्तत्र किं न कृतस्तदा, किं च यदा च लोभः क्रियते तदा रत्नवस्तुन्येव क्रियते इति सूचितं,

तिन् !—अपंडित च पुनश्चेद्—यदि अत्र—इह लोके च पुनः परत्र—परलोके स्वस्य दुःखाय लोभं धत्से तत्—तदा बहिः—बाह्यपरिग्रहे धनधान्यादिनवविधे च पुनरांतरेऽपि परिग्रहे कषायलक्षणे लोभं विधेहीति ॥ ८२ ॥ १२ ॥

अथ कषायविशेषमदमत्सरादिनिग्रहमुपदिशति—

**करोषि यत् प्रेत्यहिताय किंचित्कदाचिदल्पं सुकृतं कथंचित् ।**
**मा जीहरस्तन्मदमत्सराद्यैर्विना च तन्मा नरकातिथिर्भूः ॥ ८३ ॥ १३ ॥**

धनवि०—कदाचिद्—अनंतोत्सर्पिण्यवसर्पिण्यादिकालातिक्रमे कथंचित्कर्मणां लाघवे जाते त्रयोदशकाष्ठिकेभ्यो लब्धावकाशतया किंचिद्दानशीलाद्यन्यतरदल्पं—स्वल्पमात्रं यत्सुकृतं—पुण्यं प्रेत्यहिताय—परलोकसुखाय करोषि तत् सुकृतं मदश्च—जात्यादिभिरवलिप्तचित्तावृत्तिः मत्सरश्च—परसंपदसहनं तौ आद्यौ—प्रथमौ येषां ते तथा तैर्मदमत्सराद्यैः, आद्यपदात्स्वश्लाघापरनिंदानवनोकषायादिभिर्मा जीहरः—मा हारय इत्यर्थः, च पुनस्तत्सुकृतं विना नरकातिथिः—नरकगतिप्राघूर्णको मा भूः—मा भवेत्यर्थः; अत्र कथंचित्कष्टेन त्रयो-

---

तेन साभिप्रायमुपमानं । हे कृतिन् !—हे पण्डित चेद्—यदि अत्र—इह लोके दुःखाय—दुःखनिमित्तं लोभं धत्से तत्—तर्हि परिग्रहे लोभं विधेहि, किंलक्षणे ?—बहिर्भवे—धनधान्यादिनवविधे च पुनः कस्मिन् ?—आन्तरे—अन्तर्भवे क्रोधमानमायालोभादिके विधेहि, एवं द्विविधेऽपीत्यर्थः ॥८२॥१२॥

रत्न०—अथ जीवं प्रति सुकृतरक्षणविषये उपदिशति—करोषि यत्प्रेत्यहितायेति०, व्याख्या—हे आत्मन् ! यत् त्वं कदाचित्काले किंचिद्—दानादि तपोऽनुष्ठानादि वा अल्पं सुकृतं प्रेत्यहिताय—परभवे हितार्थं करोषि, कथं ?—कथंचित् महता कष्टेन तत् सुकृतं मदमत्सराद्यैरभिमानपरसम्प-

दृशकाष्टिकेभ्यो लब्धावकाशतयेत्युक्तं, ते च त्रयोदश काष्ठिकाः—आलस्स मोहऽवन्नार्थंभाकोहा पमायकिविणत्तं। भयसोगो अन्नाणं वक्खेवकुऊहला रमणा[1] ॥ १ ॥ तत्र आलस्यवान् साधुसमीपं न गच्छति न शृणोति वा १ मोहाद्गृहकर्त्तव्यतामूढो वा २ अवज्ञातो वा किमेते जानंतीति वा ३ स्तंभाद्वा जात्याद्यभिमानात् ४ क्रोधाद्वा साधुदर्शनादेव कुप्यति ५ प्रमादाद्वा मद्यादिलक्षणात् ६ कृपणत्वाद्दातव्यं किंचित्स्यादिति ७ भयाद्वा नरकादिभयं वर्णयन्तीति ८ शोकाद्वा इष्टवियोगजात् ९ अज्ञानाद्वा कुदृष्टिमोहितः १० व्याक्षेपाद्वा बहुकर्त्तव्यतामूढः ११ कुतूहलान्नटादिविषयात् १२ रमणाद्वा लावकादिखेट्टेनेति १३ गाथार्थः, इत्यावश्यकवृत्तौ सामायिकप्राप्त्यधिकाराद् ज्ञेया इति ॥८३॥१३॥

अथ कषायविशेषस्य केवलमत्सरस्य निग्रहमुपदिशति—

**पुराऽपि पापैः पतिता(तो)ऽसि संसृतौ, दधासि रे किं गुणिमत्सरं पुनः ? ।**
**न वेत्सि किं घोरजले निपात्यसे, नियंत्र्यसे शृंखलया च सर्वतः ? ॥ ८४ ॥ १४ ॥**

धनवि०—रे दुरात्मन् ! पुराऽपि–पूर्वमपि पापैः–पापकर्मभिः पंचाश्रवसेवनादिभिः संसृतौ–संसारे पतिताऽसि–पतनशीलोऽसि,

---

स्यसहनार्थः प्रयोजकर्मा जीहरः–मा हारय । च पुनस्तत्–सुकृतं विना सप्तानां नरकाणामतिथिः–प्राघूर्णस्त्वं मा भूः–मा भव । एते मदमत्सराद्याः कृतस्यापि सुकृतस्य हर्तार इत्युपदिष्टं, मा जीहर इत्यत्र माङ्योगे भविष्यत्काले अद्यतन्या युष्मत्पुरुषैकवचनेऽसौ हृधातोर्ण्यन्तः प्रयोगः, अल्पमपि सुकृतं मदमत्सरादिभिर्विना कुरुष्वेत्युपदेशः यथाऽक्षयं भवति ॥ ८३ ॥ १३ ॥

रत्न०—अथ मत्सरविषये किंचिदुपदिशति–पुराऽपि पापैरिति०, व्याख्या—हे आत्मन् ! त्वं पुराऽपि–पूर्वमपि पापैः संसृतौ–संसारे पतितोऽसि

---

[1] आलस्यमोहावज्ञास्तंभक्रोधप्रमादकृपणत्वम् । भयं शोकोऽज्ञान व्याक्षेपकुतूहलरमणानि ॥ १ ॥

पुनः समुच्चये रे दुरात्मन्! **गुणिमत्सरं**—ज्ञानाद्यधिकगुणवत्सु मत्सरं—स्पर्द्धां **किं दधासि**—धरसि ?; अत्रोक्तमर्थं दृष्टांतदर्शनपूर्वकं समर्थयति—किमिति प्रश्ने **न वेत्सि?**—न जानासि, काकूक्त्या, त्वं **पापैर्घोरजले**—अगाधपानीये **निपात्यसे**—नितरामधोगतिविषयः क्रियसे, च पुनः गुणिषु मत्सरधरणेन **सर्वतः**—समंताच्छृंखलया—लोहनिगडेन **नियंत्र्यसे**—बंधनविषयीक्रियसे, इति कर्मोक्त्या ॥ ८४ ॥ १४ ॥

अथ कषाये कृते सुकृताचरणं यातीत्याह—

**कष्टेन धर्मो लवशो मिलत्ययं, क्षयं कषायैर्युगपत्प्रयाति च।**
**अतिप्रयत्नार्जितमर्जुनं ततः, किमङ्ग! हि हारयसे नभखता? ॥ ८५ ॥ १५ ॥**

**धनवि०**—**अयं**—श्रुतचारित्रलक्षणो **धर्मो** दानादिजो वा धर्मः—पुण्यं **लवशो**—लवैर्लवैः कृत्वा **कष्टेन**—बहुदुःखसहनेन **मिलति**—संचयविपयीभवतीति, च पुनरयं कष्टेन मिलितो धर्मः **कषायैः**—क्रोधादिभिर्मदमत्सराद्यैर्वा **युगपत्**—समकालं **क्षयं**—विनाशं **प्रयाति**, ततस्त-

---

पुनर्गुणिषु—गुणवत्सु मत्सरम्—असूयां किं दधासि ?, काकूक्त्या व्याख्या, अपि तु मा धत्स्व, किं न वेत्सि ?—न जानासि, अत्रापि काकूक्त्या व्याख्यानं, सर्वाङ्गे त्वं गुणिमत्सरेण घोरं च तज्जलं च घोरजलं तस्मिन् संसृतिसमुद्रे इत्यर्थः निपात्यसे, तथा सर्वतः—सर्वाङ्गेषु नियन्त्र्यसे, अन्योऽपि निगडादिना नियन्त्र्य घोरजलेऽन्धकूपे निपातितः सन् कदाऽपि बहिर्निर्गन्तुं न शक्नोति तथैव क्रियसे इत्यर्थः ॥ ८४ ॥ १४ ॥

**रत्न०**—अथात्मानं कष्टार्जितधर्मरक्षणविषये उपदिशति—**कष्टेन धर्मो लवशो मिलत्ययमिति०**, व्याख्या—हे आत्मन्! अयं धर्मः कष्टेन मिलति समूहीभवतीत्यर्थः कष्टं लवशः—कणशः, बहुभिर्लवैर्लवशः, च पुनः कषायैर्हेतुभिर्युगपत्—समकालं क्षयं—नाशं प्रयाति, एतद् दृष्टान्ते विषयी-

॥ ४९ ॥

दार्ष्टांतिकयोजनतो हे अज्ञ !—मूर्ख हीतिखेदे अतिप्रयत्नार्जितम्—अग्निफूत्करणधूमपानलोकवंचनप्रमुखातिप्रयत्नेन—बहुप्रयासेनार्जितं—मीलितं अर्जुनं—सुवर्णं नभस्वता—फूत्कारवातेन प्रबलवातेन वा किं हारयसे ?—नाशयसि; अत्रोत्तरार्द्धेन ध्मातं सुवर्णं फूत्कारेण हारितमित्याभाणको दर्शितो भवति; किंच—अत्र कष्टस्यातिप्रयत्नो धर्मस्य सुवर्णं लवस्य सुवर्णलवा एव मेलनस्यार्जनं क्षयस्य हारणं कषायस्य नभस्वान् दृष्टांता इति दृष्टांतदार्ष्टांतिकयोजनेति भावः ॥ ८५ ॥ १५ ॥

कषाया लोकद्वया-हिताः

अथ भवद्वयेऽपि दुःखदायकत्वं दर्शयति—

**शत्रूभवन्ति सुहृदः कलुषीभवन्ति, धर्मा यशांसि निचितायशसीभवन्ति ।**
**स्निह्यन्ति नैव पितरोऽपि न बान्धवाश्च, लोकद्वयेऽपि विपदो भविनां कषायैः ॥ ८६ ॥ १६ ॥**

धनवि०—शत्रूभवन्तीति, कषायैः—क्रोधादिभिः सुहृदो—मित्राणि, शत्रूभवन्ति अशत्रवः शत्रवो भवन्ति इति शत्रूभवन्ति—वैरिणो भवन्ति, च पुनः कषायैः धर्माः—श्रुतचारित्रलक्षणा दानादयो वा कलुषीभवन्ति—मलिनीभवन्तीत्यर्थः, च पुनः कषायैः यशांसि

---

कृत्योपदिशति—हे अज्ञ !—हे मूर्ख ! ततः—तर्हि अतिप्रयत्नेन—अत्युद्यमेनार्जितं सुवर्णं नभस्वता—वातेनार्थान्मुखवातेन प्रयोजकेन हीति खेदे किं हारयसे ?, अपि तु मा हारयेत्यर्थः । धर्मस्य सुवर्णोपमानं कषायाणां वातोपमानमिति, "धर्म्युं सोनुं फूकइं गम्युं" इति लौकिकाभाणको ज्ञेयः ॥ ८५ ॥ १५ ॥

रत्न०—अथ कषायैः किं किमशुभं भवतीत्याह—शत्रूभवन्तीति०, व्याख्या—कषायैः करणैः सुहृदो—मित्राणि अशत्रवः शत्रवो भवन्ति शत्रूभवन्ति, कषायैरिति सर्वत्र योज्यं, धर्माः—पुण्यानि तपोदानादिसमुत्थाः कलुषीभवन्ति—मलिनीभवन्तीत्यर्थः, तथा यशांसि—कीर्त्तयः निचितानि च तानि

निचितायशसीभवन्ति—अनिचितायशांसि (निचितायशांसि) भवन्ति इति निचितायशसीभवन्ति, अतिशयेनाकीर्त्तयो भवन्तीत्यर्थः । च पुनः कषायैः पितरोऽपि बान्धवाश्च—भ्रातरः स्वजना वा नैव स्निह्यन्ति—स्नेहवन्तो भवन्ति, एवम्—उक्तप्रकारेण भविनां—संसारिजीवानां कषायैः लोकद्वयेऽपि—इहलोकपरलोकलक्षणे विपदो—विपत्तयो भवन्ति, अत्रैवमित्याध्याहार्यम् ॥ ८६ ॥ ६ ॥

अथ कषायविशेषस्य केवलमदस्य निग्रहमुपदिशति—

**रूपलाभकुलविक्रमविद्याश्रीतपोवितरणप्रभुताद्यैः ।**
**किं मदं वहसि ? वेत्सि न मूढानंतशः स्वभृशलाघवदुःखम् ? ॥ ८७ ॥ १७ ॥**

**धनवि०**—रूपं च—शरीरसौंदर्यं लाभश्च—व्यापारादिषु धनधान्यांशुकादिप्राप्तिः कुलं च—पित्रन्वयः विक्रमश्च—बलं विद्या च—तर्कविद्यादिका श्रीश्च—लक्ष्मीः तपश्च द्वादशप्रकारं वितरणं च—दानं प्रभुता च—ऐश्वर्यमेते पदार्था आद्या येषां ते तथा, आद्यपदाज्जातिरमणी-

---

अयशांसि च निचितायशांसि अनिचितायशांसि निचितायशांसि भवन्तीति निचितायशसीभवन्ति, निचयीकृतापयशसीभवन्तीत्यर्थः, तथा पितरो—मातापित्रादयः, कुलवृद्धा अपि, न स्निह्यंति—न स्नेहं—प्रेम कुर्वन्ति, न बंधवः—अन्ये स्वजना अपि, च पुनर्लोकद्वयेऽपि—इहलोके परलोकेऽपि विपदो—विपत्तयो भवन्ति, केषां ?— भविनां—संसारिणामिति सर्वत्र योज्यं ॥ ८६ ॥ १६ ॥

**रत्न०**—अथ विषयकषायाद्यवश इत्यत्रादिशब्दसंगृहीतमदविषये किंचिदुपदिशति—**रूपलाभेति०**, व्याख्या—हे आत्मन् ! त्वं मदम्—अहंकारं किं वहसि ?, काकुध्वन्या व्याख्येयं, अपितु मा वह इति सूचापि, कैः ?—रूपं च लाभश्च कुलं च विक्रमश्च विद्या च श्रीश्च तपश्च वितरणं च प्रभुता

मंदिरादिग्रहणं तै रूपलाभकुलविक्रमविद्याश्रीतपोवितरणप्रभुताद्यैर्मदम्—अभिमानं किं वहसि—धरसि ?, परं तैरेव रूपादिमदैरनंतशः—अनंतवारान् स्वस्य भृशम्—अत्यर्थं लाघवदुःखं—लघुताद्दुःखं भावि भूतं वा न वेत्सि ?—न जानासि, उक्तं च—"जातिलाभकुलैश्वर्यबलरूपतपःश्रुतैः । कुर्वन् मदं पुनस्तानि, हीनानि लभते जनः ॥ १ ॥" इति ॥ ८७ ॥

अथ सांसारिकपीडायाः कषायाणां च परस्परमन्वयव्यतिरेकाभ्यां कार्यकारणभावं दर्शयन् कषायनिग्रहमुपदिशति—

**विना कषायान्न भवार्त्तिराशिर्भवेद्भवेदेव च तेषु सत्सु ।**
**मूलं हि संसारतरोः कषायास्तत् तान् विहायैव सुखी भवात्मन् ! ॥ ८८ ॥ १८ ॥**

धनवि०—**कषायान्**—क्रोधादीन् **विना भवार्त्तिराशिः**—संसारपीडासमूहो **न भवेत्**, **च** पुनस्तेषु क्रोधादिषु **सत्सु भवार्त्तिराशिरेव**

---

च रूप० प्रभुताः ता आद्या येषां तैः, विक्रमो—बलं श्रीः—लक्ष्मीर्वितरणं—दानं प्रभुता—ऐश्वर्यं, शेषपदानामर्थः प्रतीतः, आद्यशब्देन ललितललनाहर्म्यजात्यादिग्रहः, परं हे मूढ !—हे मूर्ख त्वमनंतशः—अनंतवारान् स्वस्य भृशम्—अत्यर्थं यल्लाघवं तस्य दुःखं किं न वेत्सि ?, काकूक्त्या प्रश्नगर्भं व्याख्यानं, अपितु विद्धि, रूपलाघवस्य दुःखं कुरूपप्राप्त्या लाभलाघवस्य लाभांतरायेण कुललाघवस्य श्वपचादिकुलप्राप्त्या विक्रमलाघवस्य सर्वतो बलहीनत्वेन विद्यालाघवस्य जडत्वेन श्रीलाघवस्य दरिद्रत्वेन तपोलाघवस्य तपःकरणाशक्तत्वेन वितरणलाघवस्य दानांतरायेण प्रभुतालाघवस्य सर्वेषां दासत्वेनानादेयवचनतया त्वयैवानंतशः प्राप्तमिति जानीहीति भावः ॥ ८७ ॥ १७ ॥

रत्न०—अथ पुनः सिंहावलोकनन्यायेन कषायपरित्यागमेव द्रढयति—**विना कषायानिति०**, व्याख्या—भवे—संसारे कषायान् विना भवस्य—

निश्चयेन **भवेत्**—स्यादित्यन्वयव्यतिरेक इति । हि—यतः कारणात् **संसारतरोः**—भववृक्षस्य **कषायाः**—क्रोधादयो **मूलम्**—आदिकारणं भवंतीत्यर्थः; **तत्**—तस्मात्कारणात्तान् कषायान् **विहाय**—त्यक्त्वा हे **आत्मन्!**—जीव **सुखी**—सुखवान् **भवेति** संबंधः ॥ ८८ ॥ १८ ॥

अथ कषायाणां विषयाणां च प्रमादत्वेन परस्परं साधर्म्याद्विषयकषाययोः परस्परं साहचर्याच्च कषायद्वारे विषयनिग्रहमुपदिशति—

**समीक्ष्य तिर्यग्नरकादिवेदनाः, श्रुतेक्षणैर्धर्मदुरापतां तथा ।**
**प्रमोदसे यद्विषयैः सकौतुकैस्ततस्तवात्मन्! विफलैव चेतना ॥ ८९ ॥ १९ ॥**

**धनवि०**—हे आत्मन्! त्वं **श्रुतेक्षणैः**—शास्त्रलोचनैस्तिर्यग्नरकादिवेदनाः **तथा** च पुनरर्थे **धर्मदुरापतां**—धर्मस्य दुर्लभतां **समीक्ष्य**—निरीक्ष्य **सकौतुकैः**—कुतूहलसहितैर्विषयैर्यद्—यस्मात् त्वं **प्रमोदसे**—हृष्यसि, ततः कारणाद्धे **आत्मन्!** तव **चेतना**—ज्ञानं **विफलैव**—

---

संसारस्यार्त्तिः—पीडा तस्या राशिः समूहो न भवेदेव, यथाऽयं निश्चयः तथा च पुनस्तेषु कषायेषु सत्स्वेव भवार्त्तिराशिर्भवेद् अयमपि निश्चयः, हि यस्मात् कारणात् कषायाः संसारतरोः—संसारवृक्षस्य मूलं वर्त्तते, तत्—तस्माद्धेतोस्तान् विहायैव—त्यक्त्वैव हे आत्मन्! त्वं सुखीभव—अक्षय्यसुखवान् भवेत्यर्थः ॥ ८८ ॥ १८ ॥

**रत्न०**—अथाधीतावपि सत्यां विषयग्रस्ते चेतनावैफल्यं दर्शयति—**समीक्ष्येति०**, व्याख्या—हे आत्मन्! श्रुतान्येवेक्षणानि—लोचनानि, अथवा श्रुतानामीक्षणानि—विलोकनानि तैः करणैस्तिर्यग्नारकाणां वेदनाः प्रति—पीडाः प्रति समीक्ष्य—विलोक्य विचार्य वा तथा तैरेव धर्मस्य प्रकरणादर्हदुक्तस्य दुरापतां—दुर्लभत्वं समीक्ष्य—विलोक्य विचार्य वा यत् त्वं विषयैः—शब्दरूपगंधरसस्पर्शैः करणैः प्रमोदसे—प्रमोदं प्राप्नोषि। किं० ?—सह कौतुकेन—नर्मणा

दृष्टान्त-
दशकं

निष्फलैव जातेत्यर्थः; भावार्थस्तु तिर्यग्नरकादिवेदनाः श्रुतेक्षणैः समीक्ष्येत्युक्तं तत्रादिपदान्मनुष्यवेदनाः चारकनिरोधादिका द्रष्टव्याः, तिर्यग्वेद-
नास्तु "तिरिया कसंकुसारे"त्यादिकाः प्रसिद्धाः, नरकवेदनाश्च "इमीसे णं भंते ! रयणप्पभाए पुढवीए णेरइया केरिसयं णिरयभवं पच्चणुब्भव-
माणा विहरंति ?, गोयमा ! ते णं तत्थ णिच्चं भीया णिच्चं छुहिया णिच्चं तसिया णिच्चं उव्विग्गा णिच्चं उवद्दुया" इत्यादिका जीवाभिगमतृतीयपदप्रति-
पादिताः सविस्तराः सव्याख्याः तत एवावसेयाः, किंच—धर्मदुरापतां समीक्ष्येत्युक्तं, सा च धर्मदुरापता दशदृष्टांतैर्बोध्या, ते च दश दृष्टांताः—
विप्रः प्रार्थितवान् प्रसन्नमनसः श्रीब्रह्मदत्तात्पुरा, क्षेत्रेऽस्मिन् भरतेऽखिले प्रतिगृहं मे भोजनं दापय । इत्थं लब्धवरोऽथ तेष्वपि कदाऽ-
प्यश्नात्यदो द्विः स चेद्भ्रष्टो मर्त्त्यभवात्तथाऽप्यसुकृती भूयस्तमाप्नोति न ॥ १ ॥ स्तंभानां हि सहस्रमष्टसहितं प्रत्येकमष्टोत्तरं, कोणानां शतमेषु
तानपि जयन् द्यूतेऽथ तत्संख्यया । साम्राज्यं जनकात्सुतः स लभते स्याच्चेदिदं दुर्घटं, भ्रष्टो म० ॥२॥ वृद्धा कापि पुरा समस्तभरतक्षेत्रस्य
धान्यावलिं, पिंडीकृत्य च तत्र सर्षपकणान् क्षिप्त्वाऽऽढकेनोन्मितान् । प्रत्येकं च पृथक्करोति किल सा सर्वाणि चान्नानि चेद्भ्रष्टो० ॥ ३ ॥
सिद्धघृतकलाबलाद्धनिजनं जित्वाऽथ हेम्नां भरैश्चाणाक्येन नृपस्य कोशनिवहः पूर्णीकृतो हेलया । दैवादाढ्यजनेन तेन स पुनर्जीयेत मंत्री
क्वचिद्भ्रष्टो० ॥ ४ ॥ रत्नान्याढ्यसुतैर्वितीर्य वणिजां देशांतरादीयुषां, पश्चात्तापवशेन तानि पुनरादातुं कृतोपक्रमैः । लभ्यंते निखिलानि
दुर्घटमिदं दैवाद् घटेत्तत् क्वचिद्भ्रष्टो० ॥५॥ स्वप्ने कार्पटिकेन रात्रिविगमे श्रीमूलदेवेन च, प्रेक्ष्येंदुं सकलं कुनिर्णयवशादल्पं फलं प्राप्य च ।
स्वप्नस्तेन पुनस्स तत्र शयितेनालोक्यते कुत्रचिद्भ्रष्टो० ॥६॥ राधाया वदनादधः क्रमवशाच्चक्राणि चत्वार्यपि, भ्राम्यंतीह विपर्ययेण तदधो

मुदा कुतुकेन वा वर्त्तंते ये ते तैः, यतः "कौतुको नर्मणीच्छायामुत्सवे कुतुके मुदि । पारंपर्यागतख्यातमंगलोद्वाहसूत्रयोः ॥ १ ॥ गीतादौ भोगकाले

१ योगशास्त्र. प्र. छ. श्लो. १३.  २ उपदेशमाला. गा. २८१

धन्वी स्थितोऽवाङ्मुखः । तस्या वामकनीनिकामिपुमुखेनैवाशु विध्यत्यहो, भ्रष्टो० ॥७॥ दृष्ट्वा कोऽपि हि कच्छपो ह्रदमुखे सेवालबंधच्युते, पूर्णेंदुं मुदितः कुटुम्बमिह तद्द्रष्टुं समानीतवान् । सेवाले मिलिते कदापि स पुनश्चंद्रं समालोकते, भ्रष्टो० ॥८॥ शम्या पूर्वपयोनिधौ निपतिता भ्रष्टं युगं पश्चिमांभोधौ दुर्धरवीचिभिश्च सुचिरात् संयोजितं तद्द्वयम् । सा शम्या प्रविशेद्युगस्य विवरे तस्य स्वयं क्वापि चेद्भ्रष्टो० ॥९॥ चूर्णीकृत्य पराक्रमान् मणिमयस्तंभं सुरः क्रीडया, मेरौ सन्नलिकासमीरवशतः क्षिप्त्वा रजो दिक्षु चेत् । स्तंभं तैः परमाणुभिः सुमिलितैः कुर्यात्स चेत्पूर्ववद्भ्रष्टो० ॥१०॥ इति संक्षेपतो, विस्तरतस्तूत्तराध्ययनवृत्त्यादिभ्योऽवसेया इति ॥ ८९ ॥ १९ ॥

अथ कषायाणां साक्षात् प्रमादत्वं दर्शयन् प्रमादनिग्रहद्वारा कषायनिग्रहमुपदिशति—

**चौरैस्तथा कर्मकरैर्गृहीते, दुष्टैः स्वमात्रेऽप्युपतप्स्यसे त्वम् ।**
**पुष्टैः प्रमादैस्तनुभिश्च पुण्यधनं न किं वेत्स्यपि लुट्यमानम् ? ॥ ९० ॥ २० ॥**

धनवि०—यदि दुष्टैः—क्रूरैश्चौरैः—तस्करैस्तथेति पक्षांतरे दुष्टैः—अविनीतत्वादिदोषदूषितैः कर्मकरैः—स्वगृहसत्कदासदासीप्रभृतिभिः स्वमात्रेऽपि—सुवर्णादिद्रव्यमात्रेऽपि बलाच्छलाद्वा गृहीते—अपहृते त्वमुपतप्स्यसे—परितप्स्यसे, अत्र स्वं—धनं गणिम १ धरिम २ मेय—३ परिच्छेद्य ४ भेदाच्चतुर्द्धा, यदुक्तं—"गणिमं जाईफलफोफलाई १ धरिमं तु कुंकुमगुडाई २ । मेयं चोप्पटलोणाई ३ रयणवत्थाइ

---

चेत्यनेकार्थकोपवचनात्, ततः—तस्मात्कारणात् तव चेतना—चैतन्यं विगतं फलं तत्त्वज्ञानरूपं यस्याः सा विफला, कथं ?—एव निश्चयेन ॥८९॥१९॥

रत्न०—अथ लुट्यमानं धर्मधनं न वेत्सीति जीवं प्रति ज्ञापयन्नाह—चौरैस्तथा कर्मकरैरिति०, व्याख्या—हे आत्मन् ! त्व चौरैस्तथा कर्मकरैः—गृहदासैः केवलं स्वं—स्वमात्रं वाह्यद्रव्यमित्यर्थः तस्मिन् स्वमात्रेऽपि गृहीते सति उपतप्स्यसे—उपतापं प्राप्नोषि । किंभू० ?—दुष्टैः—दुराचारैः,

परिच्छेदं ४ ॥ १ ॥" इति, च पुनस्तदा पुष्टैः—उत्कृष्टैर्विषयकषायैः; च पुनस्तनुभिः—जघन्यैर्हास्यमदमत्सराद्यैः प्रमादैः—मद्यादिभिः पुण्यधनं—धर्मधनं लुप्यमानम्—अपह्रियमाणमपि त्वं किं न वेत्सि?—न जानासीति, काकूक्त्या; अत्र कषायदोषदर्शनाधिकारे प्रमाददोषदर्शनं कषायाणां प्रमादत्वसूचनार्थं ॥ ९० ॥ २० ॥

कारणाभावः

अथ कषायपरिहारद्वारमुपसंहरन् क्रोधादिकषायमूलमौद्धत्यं परिहर्तुमुपदिशति—

मृत्योः कोऽपि न रक्षितो न जगतो दारिद्र्यमुत्रासितं,
रोगस्तेननृपादिजा न च भियो निर्नाशिताः षोडश।
विध्वस्ता नरका न नापि सुखिता धर्मैस्त्रिलोकी सदा,
तत्को नाम गुणो? मदश्च? विभुता का ते? स्तुतीच्छा च का? ॥ ९१ ॥ २१ ॥

धनवि०—हे आत्मन्! यदि त्वया मृत्योः—मरणात्कोऽपि प्राणी न रक्षितो—न त्रातः, च पुनर्जगतो—विश्वजंतुजातस्य दारिद्र्यं—दौःस्थ्यं त्वया नोत्रासितं—न उत्—प्राबल्येन सर्वथा त्रासं प्रापितं, च पुना रोगस्तेननृपादिजाः षोडश—षोडशसंख्या भियो—भीतयो

परं प्रमादैः—मद्यादिभिः च पुनस्तनुभिः पुण्यमेव धनं—आतरं सारद्रव्यं लुप्यमानं—मुष्यमाणं किं वेत्स्यपि न?—जानास्यपि न, निराकरणं तद्विषये उपतापश्च दूरे आस्तां, परं जानीहीति काकूक्त्या व्याख्यानं, प्रमादैस्तनुभिश्च किं०?—पुष्टैः—पोषं प्राप्तैः, प्रमादैः किल०?—चौरैरिव चौरैर्बहिस्तादागतत्वाच्चौरोपमानं, तनुभिः किल०?—कर्मकरैरिव कर्मकरैरात्मस्वामिन इति ॥ ९० ॥ २० ॥

रत्न०—अथैयता कार्याणां करणासमर्थस्य तवात्मनो मदादिकरणे का वांछेति दर्शयति—मृत्योः कोऽपीति०, व्याख्या—हे आत्मन्! यदि

**न निर्नाशिताः**—त्वया न नितरां नाशं प्रापिताः, च पुनस्त्वया **नरकाः** सप्त **न विध्वस्ता**—न विनाशं प्रापिताः, च पुनस्त्वया **धर्मैः**—पुण्यैस्त्रिलोकी—लोकत्रयी **सदा**—सर्वकालं **नापि सुखिता**—सुखीकृता, सुखं जातमस्याः सा सुखिता, सुखवती कृतेत्यर्थः; **तत्**—तदा **नामेति** कोमलामंत्रणे **को गुणः** ?—किंनामा गुणः परोपकारित्वादिर्वर्त्तते ?, च पुनः **कः** ?—किंनामा **मदो**—जात्यादिर्वर्त्तते ?, च पुनस्तदा **का** ?—किंनाम्नी तव **विभुता**—प्रभुता वर्त्तते ?, च पुनस्तदा तव **स्तुतीच्छा**—स्तुतिवांछा **का** ?—किंनाम्नी वर्त्तते ?, अत्र षोडश भियो "रोगजलजलणविसहरचोरारिसइंदगयरणभयाइं" इति गाथासूचिता नव ९ 'इहं १ परलोया २ याणा ३ अकम्ह ४ आजीव ५ मरण ६ मसिलोए ७। सत्त य भयठाणाइं इमाइं सिद्धंतभणियाइं ॥ १ ॥' इति गाथासूचिताः सप्त ७, एतद्गाथाव्याख्या च—मनुष्यादेः सजातीयादन्यस्मान्मनुष्यादेरेव सकाशाद्भयमिहलोकभयं १, तिर्यग्देवादेः सकाशाद्भयं परलोकभयं २, आदीयते इत्यादानं—धनं तदर्थं चौरादिभ्यो यद्भयं तदा-

त्वया मृत्योः—मरणात्सकाशात्कोऽपि न रक्षितो—न त्रातः, तथा जगतः—आश्रये आश्रयिण उपचारात् जगद्वासिजनस्य दारिद्र्यं—दरिद्रत्वं नोत्त्रासितं—न उत्त्रासं प्रापितं, बलान्न निर्णाशितमित्यर्थः, तथा षोडश कासादयो रोगा न निर्णाशिताः, च पुनः स्तेनाः—चौरा नृपा—राजानस्ते आदौ येषां ते स्तेननृपादयस्तेभ्यो जाताः स्तेननृपादिजा भियो—भीतयो न निर्णाशिताः, आदिशब्देनामात्यारक्षकाग्निजलादीनां ग्रहणं, तथा नरकाः सप्त न विध्वस्ताः—विध्वंसं न प्रापिताः, अपि पुनरर्थे, धर्महेतुभिः सदा त्रयाणां जगतां समाहारस्त्रिलोकी सा न सुखिता—न सुखं प्रापिता तत्—तर्हि नामेति कोमलामंत्रणे ते—तव गुणः कः ?—अर्थवशाद्विभक्तिपरिणाम इति न्यायान्नामेति नाम्ना को गुणः ?, अथवा नामेति प्राकाश्येऽव्ययं, तव को गुणः

१ रोग[1]जल[2]ज्वलन[3]विषधर[4]चौरा[5]रि[6]मृगेन्द्र[7]गज[8]रण[9]भयानि ॥ नमिऊणस्तोत्र गा. १८। २ इह[10]परलोका[11]दान[12]मकस्मा[13]दाजीविका[14]मरण[15]मश्लो[16]कानिसप्तभयस्थानानि एतानि सिद्धान्ते भणितानि ॥

दानभयं ३, अकस्मादेव बाह्यनिमित्तानपेक्षं गृहादिष्वेवावस्थितस्य राज्यादौ भयमकस्माद्भयं ४, निर्धनः कथं दुर्भिक्षादावात्मानं धारयिष्या-मीत्याजीविकाभयं ५, मरणभयं प्रतीतमेव ६, अश्लोकभयम्—अयशोभयमेवं क्रियमाणे महदयशो भवतीत्यश्लोकभय ७ मित्यत्र विशेप-व्याख्यानं प्रवचनसारोद्धारवृत्त्यादिभ्योऽवसेयं, मिलिताः सर्वा अपि पोडश भियो, यद्वा श्रीमानतुंगसूरिविरचितभक्तिभरअमरपणयमि-त्यादिस्तोत्रचतुर्थगाथावचूर्णौ—'रोग १ जल २ जलण ३ विसहर ४ चोरा ५ रि ६ मृगेंद्र ७ गजेंद्र ८ सर्प ९ संग्राम १० डाकिनी ११ शाकिनी १२ राकिनी १३ लाकिनी १४ हाकिनी १५ काकिनीति १६ जलजलणाई सोलस इति पदव्याख्यानुसारेण पोडश भियः, तथाविधसंप्रदायाभावादेवं व्याख्याताः, तथाविधसंप्रदायावगमे च मनीपिभिः सम्यग्व्याख्येयाः ॥ ९१ ॥ २१ ॥

इति श्रीतपोगच्छनायकश्रीमुनिसुंदरसूरिविरचिताध्यात्मकल्पद्रुमस्याधिरोहणीटीकायां
उ० श्रीधनविजयगणिविरचितायां कषायनिग्रहनाम्नी सप्तमी पदपद्धतिः ॥ ७ ॥

---

मदकारणाभावः

प्रकटो—जगद्विख्यात ? इति काकूक्त्या व्याख्यानं, अपि तु न कश्चिदपीत्यर्थः, तादृग्दीप्तगुणाभावे मदः—अहंकारः कः ?, मदाभावे विभुता च का ?, विभुताया अभावे च पुनस्ते—तव स्तुतेः—स्तवनस्य का इच्छा ?, यदैतानि पूर्वोक्तानि कार्याणि न कृतानि तदा गुणादि सर्वमपि निरर्थक-मित्यर्थः, तेन मदमत्सरादीनां त्याग एव युक्त इति सूचनमिति ॥ ९१ ॥ २१ ॥ ॥ इति सप्तमोऽधिकारः संपूर्णः ॥

श्रीशांतिचंद्रवरवाचकदुग्धसिंधुलब्धप्रतिष्ठवरवाचकरत्नचंद्रः । अध्यात्मकल्पफलदस्य चकार टीकां, तत्रागमन्नयमितः प्रथितोऽधिकारः ॥१॥७॥

# ८ शास्त्रगुणाधिकारः ।

अथानंतरद्वारे कषायनिग्रह उपदिष्टः, स च शास्त्रश्रवणाधीन इति शास्त्राण्याश्रित्योपदेशमभिधित्सुराह—

## अथ शास्त्राण्याश्रित्योपदेशः ॥

अथ शास्त्राण्याश्रित्योपदेश इति, अथ इति कषायनिग्रहोपदेशानंतरं तन्निमित्तभूतशास्त्राण्याश्रित्योपदेश उच्यते इत्यर्थः । तत्र प्रथमं शास्त्रश्रवणेऽपि येषां प्रमादपरिहारो न भवति तानुपदिशति—

**शिलातलाभे हृदि ते वहंति, विशंति सिद्धांतरसा न चांतः ।**
**यदत्र नो जीवदयाऽऽर्द्रता ते, न भावनांकूरततिश्च लभ्या ॥ ९२ ॥ १ ॥**

**धनवि०**—हे आत्मन्! तत्–तस्मात्ते–तव **शिलातलाभे**–शिलातलसदृशे **हृदि**–हृदये **सिद्धांतरसा**–जिनागमजलानि **वहन्ति**–प्रवाहमार्गेणोपरि गच्छंतीत्यर्थः, **च पुनरंतः**–मध्ये **न** प्रविशंति, हृदयस्य कठिनत्वादागमोक्तं मया कार्यमित्यादिरूपा रसा मनसि नायांती-

---

**रत्न०**—अथ शास्त्राण्याश्रित्योपदेशाख्योऽष्टमोऽधिकारो व्याख्यायते । अथोपमानदानेन हृदयस्य काठिन्यं सूचयति–**शिलातलाभे** इति०, व्याख्या—हे आत्मन्! शिलातलस्याभं–सदृशं तस्मिन् शिलातलाभे हृदि–हृदये सिद्धांतस्य रसा भवं(वहं)ति चेति विशेषे अंतः–मध्ये न विशंति–न प्रविशंति यद्–यस्मात्कारणात् ते–तवात्र–हृदये जीवदयया–जीवानुकंपया आर्द्रता–आर्द्रत्वं सरसत्वं नो वर्त्तते, तेन कारणेन, च पुनर्भावना एवाङ्कुरा तथा भावनाया वाऽङ्कुरास्तेषां ततिः–श्रेणिर्न लभ्या–न प्राप्या, शिलातलेऽपि रसा–मेघजलान्युपर्येव वहंति, नत्वंतः प्रविशंति, तत्कालं

त्यर्थः, यद्-यस्मादत्रैव-इहभवे ते-तव जीवदयार्द्रता नो आस्ते-नास्ति, च पुनर्भावनाङ्कूरततिः-द्वादशभावनारूपांकुरश्रेणिर्लभ्या-प्रत्यक्षेण लभ्यमाना नो आस्ते-नास्ति ॥ ९२ ॥ १ ॥

प्रमादपंक-धावनं

अथ शास्त्रश्रवणेऽपि यः प्रमादं न त्यजति तं प्रत्युपदिशति—

**यस्यागमांभोदरसैर्न धौतः, प्रमादपंकः स कथं शिवेच्छुः ? ।**
**रसायनैर्यस्य गदाः क्षता नो, सुदुर्लभं जीवितमस्य नूनम् ॥ ९३ ॥ २ ॥**

**धनवि०**—यस्य पुरुषस्यागमांभोदरसैः-सिद्धांतरूपमेघपानीयैः प्रमादपंकः-प्रमाद एवाज्ञान १ संशय २ विपर्यय ३ राग ४ द्वेष-५ स्मृतिभ्रंश ६ योगदुष्प्रणिधान ७ धर्मानादर ८ भेदादष्टविधो मद्यादिः पंचविधो वा कर्दमो न धौतो-न क्षालितः स पुरुषः कथं-केन प्रकारेण शिवेच्छुः ?-मोक्षस्पृहो भवति, अत्र शिवमिच्छतीति शिवेच्छुः । उक्तमेवार्थं दृष्टांतेन दर्शयति-यस्य पुरुषस्य रसायनैः-

---

पतितस्येव शुष्कत्वादार्द्रताऽपि न भवति तेनाङ्कुरोद्गमोऽपि दुर्लभ इत्युपमानोपमेयसाम्यम्, अत्र हृच्छब्देन मन एव ग्राह्यं, नतु बाह्यहृदयं, उपदेशादिना दुर्भेद्यत्वाज्जाड्योपेतत्वाच्च शिलातलोपमानं, सिद्धांतपक्षे रस्यंते-चर्व्यंते सामाजिकैरिति रसाः-शृंगारादयः, अत्र मुख्यतयोपदेष्टव्यत्वाच्छांतरस एव ग्राह्य इति ॥ ९२ ॥ १ ॥

**रत्न०**—अथागमस्योपमादानेन माहात्म्यं दर्शयति-**यस्यागमांभोदरसैरिति०**, व्याख्या—यस्यात्मन आगमा-आप्तोक्तयः एवांभोदास्तेषां रसैः-जलैः शांतरसैर्वा करणैः प्रमादो मद्यादिः स एव पंकः-कर्दमो न धौतो-न क्षालितः स कथं शिवं-मोक्षमिच्छतीति शिवेच्छुः ?, अथवा शिवं-कल्याणमिच्छतीति शिवेच्छुर्भवति, चलन् सन् पंके निमज्जत्येव, अपितु न भवति, दृष्टांतदानेन तत्समर्थयति-रसायनैः-अनेकौषधमिश्रीकृत-

पक्वपारदसुवर्णभस्मादिभिः सिद्धरसैर्गदा—राजयक्ष्मादयो रोगा नो क्षताः—न क्षयं प्राप्तास्तदा नूनं—निश्चितमस्य रोगिणो जीवितं—प्राणधारणं सुदुर्लभं—सुष्ठु—अतिशयेन दुर्लभं—दुष्प्रापं भवतीति ॥ ९३ ॥ २ ॥

अथ जनेभ्यः पूजाप्राप्त्यर्थं शास्त्राध्ययनं फलवन्न भवतीति दर्शयन्नुपदिशति—

**अधीतिनोऽर्चादिकृते जिनागमः, प्रमादिनो दुर्गतिपापतेर्मुधा ।**
**ज्योतिर्विमूढस्य हि दीपपातिनो, गुणाय कस्मै शलभस्य चक्षुषी ? ॥ ९४ ॥ ३ ॥**

**धनवि०**—**अर्चादिकृते**—पूजाप्रतिष्ठाद्यर्थमादिपदादन्नाद्यर्थमधीतिनः—अध्ययनशीलस्य **प्रमादिनः**—प्रमादपरवशस्य जंतोर्दुर्गतिपापतेः—भृशं दुर्गतिपतनशीलस्य **जिनागमो**—भगवत्सिद्धांतो **मुधा**—निष्फलो भवति, अत्र पापतेरिति पतधातोर्यङि ङौ सासहि वावहि

---

दग्धसुवर्णादिधातुचूर्णैर्यस्य गदा—रोगा नो क्षिताः—न क्षयं नीता अस्य पुंसो नूनं—निश्चितमथवा नूनमिति संभावने जीवितं सुदुर्लभम्—अतिदुर्लभमित्यर्थः । अत्र सिद्धांतानां रसायनोपमानं प्रमादपंकस्य गदोपमानं, सिद्धांतपक्षे रस्यंते—चर्व्यंते सामाजिकैरिति रसाः—शृंगारादयो नव, सामान्यत उक्तावपि अत्र मुख्यत उपदेश्यत्वाच्छांतरस एव ग्राह्यः तेषां, सिद्धांतपक्षे प्रमादात्पंकः—पापमिति व्याख्येयं ॥ ९३ ॥ २ ॥

**रत्न०**—अथाधीतिनोऽप्यध्ययनं वृथेति दर्शयति—**अधीतिनोऽर्चादीति०**, व्याख्या—अर्चादीनां—पूजादीनां कृते—प्रयोजनायाधीतिनः—अध्ययनवतः साधोर्जिनागमो मुधा, जिनागम इत्युक्तेऽपि कारणे कार्योपचाराज्जिनागमस्याधीतिर्वृथेति । यतः किंभूतस्य ?—प्रमादवतो—निद्रादिप्रमादवतः, अत एव किंभूतस्य ?—अतिशयेन दुर्गतौ पततीति दुर्गतिपापततिस्तस्य, यङ्लुपि प्रयोगोऽयं, एतदेव निदर्शनविषयीकुरुते—शलभस्य—पतंगस्य चक्षुषी—नेत्रे कस्मै गुणाय स्याताम् ?, अपि तु न कस्मैचिद्गुणाय, प्रत्युताहितायेति । यतः किंलक्षणस्य ?—ज्योतिभिर्यादीपसंबंधिभिर्विमूढस्य—विमोहं

चाचलि पापति'रि( सि० ५।२।३८ )ति सूत्रेण षष्ठ्यां साधुः; उक्तमर्थं दृष्टांतेन द्रढयति—हि—यतो **ज्योतिर्विमूढस्य**—दीपदीप्तिमोहितस्य **दीपपातिनः**—प्रदीपांतःपतनशीलस्य **शलभस्य**—पतंगस्य **चक्षुषी**—नेत्रे **कस्मै ?**—किंनाम्ने **गुणाय**—स्वोपकाराय भवत इति, काक्वा न कस्मैचिदुपकारायेत्यर्थः ॥ ९४ ॥ ३ ॥

अथ धर्मशास्त्राध्ययनातिरिक्तं शास्त्राध्ययनं परलोकहितं न भवतीत्युपदिशति—

**मोदंते बहुतर्कतर्कणचणाः केचिज्जयाद्वादिनां,**
**काव्यैः केचन कल्पितार्थघटनैस्तुष्टाः कविख्यातितः ।**
**ज्योतिर्नाटकनीतिलक्षणधनुर्वेदादिशास्त्रैः परे,**
**ब्रूमः प्रेत्यहिते तु कर्मणि जडान् कुक्षिंभरीनेव तान् ॥ ९५ ॥ ४ ॥**

तार्किकादीनां जडत्वं

**धनवि०**—ये केचिन्नरा **वादिनां जयात्**—परवादिविजयान्**मोदंते**—हृष्यंति, कथंभूता ?—बहवो-भूयांसश्च ते तर्काश्च-अनिष्टप्रसंजनरूपाः प्रमाणादिपदार्थरूपा वा तेषां तर्कणं—विचारणं तेन प्रसिद्धा **बहुतर्कतर्कणचणाः**—'तेन वित्ते चंचुचणा'विति तद्धितसूत्रेण (७—१—१७५)

प्राप्तस्यात एव दीपे पततीत्येवंशीलो दीपपाती तस्य, अत्रार्चादिकृते अधीतिनो ज्योतिर्विमूढस्य शलभस्योपमानं दुर्गतिपतनस्य च दीपपातोपमानमित्युपमानोपमेयभावो योजनीयः ॥ ९४ ॥ ३ ॥

**रत्न०**—अथ तत्त्वज्ञानमंतरेण यदधीतं तद्वृथेति दर्शयितुकाम आह—**मोदंते** इति०, व्याख्या—केचिदात्मानं पंडितंमन्या वादिनां—प्रतिवादिनां जयाद् मोदंते—हृष्यंति, किंलक्षणाः ?—बहवस्तर्काः—षोडश पदार्थाः प्रमाणप्रमेयादयः सप्त पदार्था वा द्रव्यादयस्तेषां तर्कणं—विचारणं तत्र चणाः—

चणप्रत्यये साधुः, च पुनर्ये केचन कल्पितार्थघटनैः काव्यैः करणभूतैः कविख्यातिवो—नवनवकाव्यकर्तृत्वप्रसिद्धितस्तुष्टाः—संतोषवंतः संतो मोदंते, च पुनर्ज्योतिश्च—ज्योतिःशास्त्राणि बृहज्जातकादीनि नाटकानि च—नाटकशास्त्राणि भरतपिंगलादीनि नीतयश्च—नीतिशास्त्राणि चाणाक्यपंचाख्यानादीनि लक्षणानि च—लक्षणशास्त्राणि पाणिनीयादिव्याकरणानि सामुद्रिकशास्त्राणि वा धनुर्वेदाश्च—धनुर्वेदशास्त्राणि द्रोणाचार्यप्रभृतिकलाचार्यविरचितानि तान्यादौ येषां तानि तथा तानि च तानि शास्त्राणि च तानि तथा तैर्ज्योतिर्नाटकनीतिलक्षणधनुर्वेदादिशास्त्रैः, अत्रादिपदाद्रुद्रयामलरुद्रयामलवास्तुशास्त्रकात्यायनवात्स्यायनशकुनशास्त्रैः परे—तदितरे ये केचन नरा मोदंते, तु पुनः परं तान् प्रेत्यहिते—परलोकहिते कर्मणि—संयमलक्षणे कार्ये जडान्—तत्समाचरणपरिज्ञानविकलान् तर्कशास्त्रादिनिपुणान् नरान् वयं कुक्षिंभरीनेव—स्वोदरपूरकानेव ब्रूमः—कथयामः, नन्वत्र ब्रूम इति बहुवचनांतप्रयोगो महामुनीनामहंकारविरहितानां प्रयोगानर्हः कथमत्र प्रयुक्त इति चेन्न, अत्र ग्रन्थकृता बहुवचनप्रयोगस्य सुविहितत्वेन शुद्धप्ररूपकत्वेन समानधर्माणामेकवाक्यतासूचनार्थं प्रयुक्तत्त्वादिति ॥ ९५ ॥ ४ ॥

---

विदितास्ते बहुतर्कतर्कणचणाः, अत्र चणप्रत्यये सति चणा इति जातं, तथा केचन कविषु प्रसिद्धिस्तस्याः—कविख्यातितस्तुष्टाः—तोषं प्राप्ताः, कैर्हेतुभिः?—काव्यैः—काव्ययोजनैः, नवीनकाव्यकरणैरित्यर्थः, काव्यानि रघुकाव्यादीनि तेषां पठनपाठनादिभिर्वा, किंल० ?—कल्पिताः—स्वमत्युत्प्रेक्षिता येऽर्थास्तेषां घटना—रचना येषु तैः, परे—अन्ये केचन ज्योतिश्च नाटकं च नीतिश्च लक्षणं च धनुर्वेदश्च २ ते आदौ येषां तानि ज्योतिर्नाटकनीतिलक्षणधनुर्वेदादीनि तानि च तानि शास्त्राणि च २ तैस्तुष्टाः, ज्योतिः—ज्योतिःशास्त्रं नाटकशास्त्रं लक्षणं—सामुद्रकमश्वगजलक्षणशास्त्रं च धनुर्वेद—आयुधाभ्यासशास्त्रं, आदिशब्दाच्छकुनरुतादि गृह्यते, तान् सर्वान् वयमध्यात्मशास्त्रविदः कुक्षिंभरीनेव ब्रूमः, यतः किंलक्षणान् ?—जडान्—मूर्खान्, कस्मिन् ?—कर्मणि, किं० ?—प्रेत्य—परलोके हिते— हितकारिणि ॥ ९५ ॥ ४ ॥

भवपात-रक्षा

अथ सकलशास्त्राध्ययनापेक्षया धर्मशास्त्राध्ययनस्यैव प्राधान्यं दर्शयन्नुपदिशति—

**किं मोदसे पंडितनाममात्राच्छास्त्रेष्वधीती जनरंजकेषु ।**
**तत् किंचनाधीष्व कुरुष्व चाशु, न ते भवेयेन भवाब्धिपातः ॥ ९६ ॥ ५ ॥**

धनवि०—हे आत्मन्! जनरंजकेषु—लोकचमत्कारकारिषु ज्योतिःशकुननिमित्तादिशास्त्रेषु अधीतमनेनाधीती—अध्ययनशीलः संस्त्वं किं मोदसे—हृष्यसि ?, कुतो ?—नामैव नाममात्रं परमार्थतोऽर्थशून्यं पंडित इति नाममात्रं पंडितनाममात्रं तस्मात् पंडितनाममात्रादिति; हे आत्मन्! त्वं किंचन धर्मशास्त्रमधीष्व—अध्ययनविषयीकुरुष्व, च पुनरध्ययनानंतरं तत्किंचन तपःसंयमादिकमाशु—शीघ्रं कुरुष्व येनाध्ययनेन तपःसंयमादिना च ते—तव भवाब्धिपातः—संसारसमुद्रपतनं न स्यादिति, अत्राधीतीतिप्रयोग इष्टादेरिति (७–१–१६८) तद्धितसूत्रेण इन्प्रत्यये साधुः ॥ ९६ ॥ ५ ॥

---

रत्न०—पुनस्तदेव द्रढयति—किं मोदसे इति०, व्याख्या—हे विद्वन्! पंडितस्य नाम पंडितनाम केवलं पं० नाम पंडितनाममात्रं तस्मात् पंडितनाममात्रात्त्व किं मोदसे ?—हर्षं प्राप्नोषि ?, अपि तु मा मोदस्व, यतः किंलक्षणः ?—अधीती—अध्ययनवान्, केषु किं० ?—जनानां रंजकानि—मनआह्लादकारीणि काव्यनाटकवसतराजादीनि तेषु, परं तत्किंचन शास्त्रमधीष्व—पठ, च पुनस्तच्छास्त्रज्ञानं कुरुष्व येनाधीतेन येन च कर्मणा ते—तव भवाब्धिपातो—भवसमुद्रपतनं न भवेद्, एतेन जिनागममधीष्व तदुपदिष्टं च कुरुष्वेति सूचनमिति ॥ ९६ ॥ ५ ॥

अथागमाध्येतॄन् संयमानुद्यतान् तिरस्कारपुरस्कारेणोपदिशति—

धिगागमैर्माद्यसि रंजयन् जनान्नोद्यच्छसि प्रेत्यहिताय संयमे ।
दधासि कुक्षिंभरिमात्रतां मुने !, क ते ? क तत् ? कैष च ते भवांतरे ? ॥ ९७ ॥ ६ ॥

धनवि०—हे मुने ! त्वां धिगस्तु, अत्र यत इति गम्यं, तेन यतः कारणादागमैः—सिद्धांताध्ययनैर्जनान्—लोकान् रंजयन्—रंगमुत्पादयन् माद्यसि—मदवान् भवसि, यच्च प्रेत्यहिताय—परलोकसुखार्थं संयमे—चारित्रे नोद्यच्छसि—नोद्यमं कुरुषे, ततः कारणात्त्वं कुक्षिंभरिमात्रतां—स्वोदरपूरकतामेव दधासि—धरसि; परं भवान्तरे—परभवे ते आगमास्ते—तव क भविष्यंति ?, च पुनस्तत् प्रेत्यहितं ते—तव क भविष्यति ?, च पुनरेष संयमस्ते—तव क भविष्यतीति ?, नन्वत्र धिगिति तिरस्कारवचनं, तच्च धर्मशास्त्रे धर्मोपदेशे च न युज्यत इति चेन्न, [1]रूसउ वा परो मा वा, विसं वा परिअट्टओ । भासिअव्वा हिया भासा, सपक्खगुणकारिया ॥ १ ॥ इति वचनात् स्ववर्गस्य शिष्यवर्गस्येव पुत्रस्येव वा तिरस्कारपूर्वकं हितोपदेशस्य युक्तत्वादिति ॥ ९७ ॥ ६ ॥

रत्न०—अथ क्रियां विना केवलं जिनागमाध्ययनं वृथेति सूचयति—धिगागमैरिति०, व्याख्या—हे मुने !—हे यते त्वां धिगस्तु यतस्त्वमागमैः—जिनागमाध्ययनैरित्यर्थः जनान् रंजयन् माद्यसि—मदं प्राप्नोपि, हर्षं प्राप्नोषीत्यर्थः, यतश्च प्रेत्य—परभवे हितार्थं त्वं संयमे—चारित्रे न उद्यच्छसि—नोद्यमं करोषि ततस्त्वं कुक्षिभरिमात्रतां दधासि—धत्से, परं भवांतरे ते—तव ते जिनागमाः क ? एतज्जनरंजनं क ? एप संयमः—चारित्रं क ?, अत्र त्रयोऽपि कशब्दा अत्यंतासंगतिवाचकास्तेन भवांतरे एते त्रयोऽपि न संतीत्यर्थः ॥ ९७ ॥ ६ ॥

[1] रुष्यतु वा परो, मा वा, विषं वा पर्येतु । भाषितव्या हिता भाषा स्वपक्षगुणकारिणी ॥ १ ॥

अथ केवलशास्त्राध्ययनात् सम्यक्श्रद्धानसहितशास्त्रोक्तानुष्ठानाचरणस्याधिक्यं दर्शयन्नाह—

**धन्याः केऽप्यनधीतिनोऽपि सदनुष्ठानेषु बद्धादरा, दुस्साध्येषु परोपदेशलवतः श्रद्धानशुद्धाशयाः ।**
**केचित्त्वागमपाठिनोऽपि दधतस्तत्पुस्तकान् येऽलसाः, अत्रामुत्र हितेषु कर्मसु कथं ते भाविनः प्रेत्यहाः ? ॥९८॥७॥**

धनवि०—ते पुरुषा धन्याः—पुण्यवंतो भवंति, ये केऽपि परोपदेशलवतः—सुगुरूपदेशाच्छ्रद्धानशुद्धाशयाः—सम्यक्त्वनिर्मलचित्ताः संतोऽनधीतिनोऽपि—अपठिता अपि दुस्साध्येषु—दुर्द्धरेषु सदनुष्ठानेषु—प्रधानक्रियासु तपःसंयमादिक्रियासु बद्धादराः—सुबद्धकच्छा भवंति, तु पुनर्ये केचिदागमपाठिनोऽपि—जैनशास्त्राध्येतारोऽपि च पुनस्तत्पुस्तकान्—जैनागमपुस्तकान् दधतोऽपि—धरंतोऽप्यत्र—इह लोकेऽमुत्र—परलोके हितेषु—सुखकारिषु कर्मसु—तपःसंयमादिकार्येष्वलसाः—प्रमादिनो भवंति ते पुरुषाः प्रेत्यहाः—परलोकहितहंतारः कथं ?—केन प्रकारेण परलोके सुखिनो भविष्यंतीति ॥ ९८ ॥ ७ ॥

---

रत्न०—अथाल्पाध्ययनेऽपि क्रियाया उत्कर्षं दर्शयति—धन्याः केऽपीति०, व्याख्या—केऽप्यनधीतिनोऽपि—नञोऽल्पार्थकत्वादल्पपाठिनोऽपि धन्याः—सुकृतिनः, यतः किं० ?—बद्ध आदरो यैस्ते, केषु ?—संति—शोभनानि अनुष्ठानानि—क्रियाविशेषास्तेषु, किंलक्षणेषु ?—दुस्साध्येषु—निःसत्त्वजनैर्दुःखेन कर्त्तव्येषु, किंलक्षणाः ?—श्रद्धानं—सम्यक्त्वं तेन शुद्धो—निर्मलः कदाग्रहरहित इत्यर्थः आशयः—चित्ताभिप्रायो येषां ते, कस्मात् ?—परेभ्यः—सुविहितशुद्धप्ररूपकगीतार्थेभ्यः उपदेशस्य लवः—कणस्तस्मात्परोपदेशलवतः, परोपदेशलवं प्राप्येत्यर्थः, अत्र यब्लोपे पंचमी ज्ञेया, तुरिति विशेषे । केचिदागमपाठिनोऽपि साधवोऽत्र—इह लोकेऽमुत्र—परलोके हितेषु—हितकारिषु कर्मजपतपःक्रियासु अलसाः—शीतकाः संति, प्रमादिनः संतीत्यर्थः,

अनंतरोक्तमेवार्थं बहुवचनगर्भं पाठांतरेणैवैकवचनगर्भं दर्शयति—

**धन्यः स मुग्धमतिरप्युदितार्हदाज्ञारागेण यः सृजति पुण्यमदुर्विकल्पः ।**

**पाठेन किं व्यसनतोऽस्य तु दुर्विकल्पैर्यो दुःस्थितोऽत्र सदनुष्ठितिषु प्रमादी ? ॥९९॥८॥** इति वा पाठः ।

**धनवि०**—स पुरुषो **मुग्धमतिरपि**—शास्त्राध्ययनाद्यसंस्कृतबुद्धिरपि **धन्यः**—पुण्यवान् भवति, उदित—उत्पन्नो योऽसावर्हतां—तीर्थकृतामाज्ञा—वचनानि तेषु रागो—भक्तिविशेषः "[1]तमेव सच्चं निस्संकं जं जिणेहिं पवेइयं" इतिरूपस्तेनो**दितार्हदाज्ञारागेण यः** पुमान् **अदुर्विकल्पः**—शंकाकांक्षादिदुष्टविकल्परहितः **पुण्यं**—तपःसंयमादिकं **सृजति**—करोतीत्यर्थः, **तु** पुनरस्य पुरुषस्याग्रे यच्छब्दाभिधेयस्य

किं कुर्वतो ?—दधतः, कान् ?—तेषामागमानां पुस्तकान्, अनेन क्रियाशैथिल्येऽपि बहुपुस्तकसंग्रहित्वं सूचितमिति । हा इति खेदे, ते नामसाधवः प्रेत्य—परभवे किं भाविनः ?—किं भविष्यंति, किंशब्दस्य काकुध्वनिव्याख्यानेन महादुःखिनो भाविन इति सूचनमिति ॥ ९८ ॥ ७ ॥

**रत्न०**—पुनरर्थांतरेण तदेव द्रढयति—**धन्यः स मुग्धमतिरिति०** व्याख्या—स पुमान् मुग्धा—असदाग्रहरहिता मतिर्यस्य स मुग्धमतिरपि, अल्पाध्ययनेऽपि ऋजुमतिरित्यर्थः, धन्यः—सुकृती, सः कः ?—उदिता—कथिताऽर्हतां—तीर्थंकराणामाज्ञा तस्यां रागेण—प्रेम्णा, माऽर्हदाज्ञाभंगोऽस्त्विति प्रेम्णेत्यर्थः । पुण्यं सृजति—करोति । विशेषणेन मुग्धमतित्वं दर्शयति—यतः किं० ?—न विद्यंते दुः—दुष्टा विकल्पाः—चित्ताभिप्राया यस्य सः, तुरिति विशेषे, पुनरस्य मुग्धमतिविपरीतस्यासद्ग्रहग्रस्तस्येत्यर्थः पाठेन—अध्ययनेन किं स्याद् ?—न किमपीत्यर्थः, कस्यचिदैहिकपूजासत्कारादिस्पृहयालुत्वादध्ययने आसक्तिर्वर्त्तते तेनाध्ययनं करोति, परं तस्याध्ययनं न किंचिदित्यर्थः, एतदेव हेतुदर्शनेन द्रढयति—व्यसनतः—सप्तव्यसनेभ्यो दुर्विकल्पैः—कं



1 तदेव सत्यं निःशंकं यज्जिनैः प्ररूपितम् ॥

व्यसनतः—अत्यासक्तितः पाठेन—शास्त्राध्ययनेन किं फलं स्यादिति काकूक्त्याऽन्वयः, यः पुमानत्र—जगति दुर्विकल्पैः—दुश्चिंतनैः करणभूतैर्दुःस्थितो—दुःस्थावस्थां प्राप्तः सन् सदनुष्ठितिषु—षडावश्यकादिसदनुष्ठानेषु प्रमादी—अलसः स्यात् ? ॥ ९९ ॥ ८ ॥ उक्तस्यैव पद्यस्य पाठांतरं दर्शयति—इति वा पाठ इति स्पष्टम् । अत्र शास्त्राण्याश्रित्योपदेशमुपसंहरन् केवलस्याध्ययनस्य जन्मांतरीयसुखं प्रति कार्यकारणभावेऽन्वयव्यतिरेकाभ्यां व्यभिचारं दर्शयन्नुपदिशति—

अधीतिमात्रेण फलंति नागमाः, समीहितैर्जीव ! सुखैर्भवांतरे ।
स्वनुष्ठितैः किंतु तदीरितैः खरो, न यत्सितायाः वहनश्रमात् सुखी ॥ १०० ॥ ९ ॥

धनवि०—हे जीव !—प्राणिन् आगमाः—सिद्धांता अधीतिमात्रेण—केवलाध्ययनेन भवान्तरे—परभवे समीहितैः—वांछितैः सुखैः स्वर्गापवर्गजैर्न फलंति—न सफला भवंति, अयमन्वयव्यभिचारः अध्ययनसत्त्वे फलासत्त्वात्, अत्रापि मात्रशब्दोऽध्ययनव्यतिरिक्तक्रियादिप्रतिषेधवाचकः; किंतु तदीरितैः—आगमप्रतिपादितैः स्वनुष्ठितैः—शोभनानुष्ठानैरागमाः फलंति, अयं व्यतिरेकव्यभिचारः, अध्ययना—

केन धाव्यादिना रंजयामि ?, कस्य पार्श्वे किं गृह्णामि, कं च कां च व्यामोहयामीति चिंताभिप्रायजालैरित्यर्थः, अत्र—इह लोके दुःस्थितः—तादृगिष्टवस्त्वप्राप्त्या दुःखितो वर्त्तते, अत एव किंलक्षणः ?—प्रमादी—प्रमादवान्, कासु ?—सदनुष्ठितिषु—सदनुष्ठानेष्विति ॥ ९९ ॥ ८ ॥ इति वा पाठः—पूर्वोक्तस्यैव काव्यस्य पाठांतरमित्यर्थः ॥

रत्न०—अधीतिमात्रेणेति० व्याख्या—हे जीव ! हे—आत्मन् केवलमधीतिः—अध्ययनं अधीतिमात्रं तेन, क्रियारहिताध्ययनेनेत्यर्थः, आगमा न फलंति, कैः ?—सुखैः, कस्मिन् ?—भवांतरे, सुखैः किंलक्षणैः ?—समीहितैः—वाञ्छितैर्मोक्षसुखैरित्यर्थः, मोक्षसुखरूपफलप्रदायिनो न भवंति, किंत्विति

सत्त्वे फलसत्त्वात्; अत्र दृष्टांतमाह—यद्—यस्मात्कारणात्सितायाः—शर्कराया वहनश्रमाद्—उत्पाटनपरिश्रमात्खरो—गर्दभः सुखी—सुखवान्न स्यादिति, यदुक्तं—"जहा खरो चंदणभारवाही, भारस्स भागी नहु चंदणस्स । एवं खु नाणी चरणेण हीणो, नाणस्स भागी नहु सुग्गईए ॥ १ ॥"[1] इति ॥ १०० ॥ ९ ॥

इति शास्त्रनाम्नि षोडशपद्येऽष्टमद्वारे नवपद्यैः केवलशास्त्राण्याश्रित्योपदेशमयं प्रथमं प्रतिद्वारं व्याख्यातं ॥

---

विशेषे, तैरागमैरीरितैः—कथितैः स्वनुष्ठितैः—सदनुष्ठानैः कृतैरागमाः फलंति, यथाऽऽम्रादयो वृक्षाः आम्रादिभिः फलैः फलंति तथाऽऽगमाः सुखैरेव फलैः फलंतीत्यर्थः। तत्रार्थे दृष्टांतमाह—यद्—यस्मात् खरो—रासभः सितायाः—शर्करायाः वहनश्रमाद्—उत्पाटनश्रमान्न सुखी स्यात्, क्रियाहीनस्य केवलाधीतिनः खरोपमानं, आगमस्य सितोपमानं, यथा सिताया वहनश्रमस्तथा आगमस्य पठनपुस्तकवहनश्रम इति ॥ १०० ॥ ९ ॥ इत्यष्टमोऽधिकारः संपूर्णः ॥

श्रीशांतिचंद्रवरवाचकदुग्धसिंधुलब्धप्रतिष्ठवरवाचकरत्नचंद्रः । अध्यात्मकल्पफलदस्य चकार वृत्तिं, तत्राष्टमोऽर्थविषयत्वमितोऽधिकारः ॥ ८ ॥



---

१ यथा खरश्चंदनभारवाही भारस्य भागी न तु चंदनस्य । एवं खलु ज्ञानी चरणेन हीनो ज्ञानस्य भागी नतु सुगतेः ॥ १ ॥ उपदेशमाला गा. ४२६

अथ चतुर्गत्याश्रितोपदेशः ।

अथ शास्त्रद्वारे एव शास्त्रोपदिष्टचतुर्गत्याश्रितोपदेशाख्यं प्रतिद्वारं वक्तुकाम आह—अथेति शास्त्राण्याश्रित्योपदेशानंतरं शास्त्रोक्तचतुर्गत्याश्रितोपदेशः कथ्यत इत्यर्थः; तत्र प्रथमं पद्यद्वयेन शास्त्रोक्तं नरकगतिस्वरूपं दर्शयन्नुपदिशति—

दुर्गंधतो यदणुतोऽपि पुरस्य मृत्युरायूंषि सागरमितान्यनुपक्रमाणि ।
स्पर्शः खरः क्रकचतोऽतितमामितश्च, दुःखावनंतगुणितौ भृशशैत्यतापौ ॥ १०१ ॥
तीव्रा व्यथाः सुरकृता विविधाश्च यत्राक्रंदारवैः सततमभ्रभृतोऽप्यमुष्मात् ।
किं भाविनो न नरकात् कुमते ! बिभेषि ?, यन्मोदसे क्षणसुखैर्विषयैः कषायी ॥ १०२ ॥ २ ॥ 'युग्मं'

धनवि०—यस्य नरकस्याणुतोऽपि—परमाणुकणोपमितादपि दुर्गंधतो—दुरभिगंधतोऽहिमृतकादिस्वरूपतः पुरस्य—लक्षणया मनुष्यलोकसंबंधिसकलनगरलोकस्य मृत्युः—मरणं भवति, च पुनर्यत्र नरकेऽनुपक्रमाणि—निरुपक्रमाणि सागरमितानि—दशकोटाकोटिपल्योपमरूपसागरोपमप्रमाणानि अर्थादुत्कृष्टतस्त्रयस्त्रिंशत्सागरोपमप्रमितान्यायूंषि—जीवितानि संतीति, च पुनर्यत्र नरके स्पर्शः—स्पर्शनेंद्रियग्राह्यो

---

रत्न०—अथ चतुर्गतिमाश्रित्योपदेशाख्यो नवमोऽधिकारः प्रस्तूयते—तत्र तावत्प्रथमं नरकगतिमाश्रित्योपदिशति—दुर्गंधतो यदणुतोऽपीति०, तीव्रा व्यथा० इति च युग्मव्याख्या—यस्य नरकस्य—नैरयिकाणां वासक्षेत्रस्याणोः—परमाणोरपि दुर्गंधतो—दुर्गंधात्सकलस्य पुरस्य मृत्युर्भवति, पुरस्ये-

गुणः क्रकचतोऽपि—करपत्रस्पर्शादपि अतितमाम्—अतिशयेन खरः—कर्कशो भवतीत्यर्थः, च पुनर्यत्र नरके दुःखौ—दुःखोत्पादकावितो— मनुष्यलोकगतशैत्यतापादनंतगुणितौ—अनंतनामकगुणकारेण गुणितौ भृशम्—अत्यर्थं शैत्यतापौ स्तः, किंच—अत्र शैत्यतापस्वरूपं श्रीजीवाभिगमतृतीयपदद्वितीयोद्देशकप्रदर्शितदृष्टांतचतुष्टयेनावसेयं, तद्यथा—केनचित्समर्थेन दक्षेण लोहकारपुत्रेण पक्षं यावत् पुनः पुनः ध्माते कुट्टिते घटप्रमाणे लोहगोलके नरकशीतभूमौ मोचिते एकेनैव मेषोन्मेषान्तरेण पुनरुद्धर्तुमीप्सिते स लोहकारस्तं लोहगोलकं नरकभूमिगतशैत्येन द्रुतमेव विलीनमेव पश्यति, इतोऽपि शैत्यादधिकतरं शीतं नरके इति शैत्यदृष्टांतः १ । अथ तेनैव लोहकारेण मासं यावत्पुनः पुनर्ध्मांते कुट्टिते पुनः शीतीकृते च लोहगोलके उष्णनरकभूमौ मोचिते मेषोन्मेषान्तरेण पुनरुद्धर्तुमीप्सिते नरकभूमिगतोष्णत्वेन स तं विलीनमेव पश्यति, इतोऽप्यधिकतरमुष्णत्वं नरके इत्युष्णदृष्टांतः २ । पुनरत्रार्थे दृष्टांतद्वयं, यथा मत्तो गजस्तृषाक्रांतो दवाग्नीतस्तोयपूर्णां पुष्करिणीं प्राप्य यथा मोदते तथा शीतवेदनान्नरकादुद्धृतो नारकी मनुष्यसंबंधिनमतिशयेन शीतं हिमपुंजादिकं प्राप्य नरकगतां शीतवेदनामपाकुर्वन् मोदते, इतोऽप्यधिकतरा नरकेषु शीतवेदना, इति शैत्ये हस्तिदृष्टांतः ३ । एवमुष्णवेदनायां तथाविध एव हस्ती तथाविधां पुष्करिणीं प्राप्य यथा मोदते तथोष्णवेदनान्नरकादुद्धृतो नारकी मनुष्यलोकसंबंधिनमत्युष्णं ताम्राद्याकरं प्राप्य नरकभूमिगततापमपाकृत्य मोदते, इतोऽप्यधिकतरोष्णवेदना नरकेषु, इत्यादि विस्तरार्थिभिर्ग्रन्थान्तरतोऽवसेयं ॥ १०१ ॥ १ ॥



---

त्युक्तेऽपि आश्रये आश्रयिण उपचारात्पुरवासिनो जना गृह्यंते, एकवचनं तु जातिवाचकात्, तर्हि यस्य संबंधिनः पुद्गलस्कंधस्य दुर्गंधात् किमुच्यत इति ?, एतेन परमाणोरपि गंधोत्कटत्वं दर्शितं, तथा आयूंषि—जीवितानि सागरमितानि—सागरस्योपमानि संति, यथा रत्नप्रभायामेकं सागरोपमं सप्तम्यां त्रयस्त्रिंश-

धनवि०—च पुनर्यत्र नरके तीव्रा—दुःसहाः सुरकृताः—परमाधार्मिकदेवकृता विविधाः—छेदनभेदनपचनादिका व्यथाः—पीडाः संति, अत्र परमाधार्मिककृता इत्युपलक्षणं, तेन "सत्तसु खित्तज वेयण अन्नुन्नकयावि पहरणेण विणा । पहरणकयावि पंचसु तिसु परमाहम्मियकयावि" ॥१॥ इत्यादिग्रहणं, हे कुमते !—हे कुबुद्धे अमुष्माद्—अनंतरोदितस्वरूपात सततं—निरंतरमाक्रंदारवैः—आक्रंदशब्दैरभ्रभृतः—अभ्रं—नभोमार्गं भरति—पूरयतीत्यभ्रभृत्तस्मात्, तथा भाविनो—भविष्यतो नरकाद्—नरकगतेः किमिति प्रश्ने नो बिभेषि ?—नो भयं प्राप्नुषे इति काकूक्त्या, यद्—यस्मात्त्वं कषायी—क्रोधादिमान् क्षणसुखैः—स्तोककालसुखैर्विषयैः—शब्दादिभिर्मोदसे—हृष्यसि ॥१०२॥२॥ अनंतरोक्तपद्यद्वयस्य युग्मरूपतां साक्षाद्दर्शयन्नाह—युग्ममिति ।

---

त्सागरोपमाणीत्यादि संग्रहणीसूत्रतो ज्ञेयं, इह तु विस्तरभयान्न प्रतन्यते । तानि किल० ?—न विद्यंते उपक्रमा—अंतरायुस्त्रुटिहेतवो येषु तानि, नारका देवाश्च निरुपक्रमायुष्का भवंतीति, स्पर्शः खरः अतितमाम्—अतिशयेन, कुतः ?—क्रकचादिति—क्रकचतः करपत्रतः, च पुनरितो—मनुष्यलोकाद्भृशशैत्यतापौ—भृशम्—अत्यर्थं शैत्यं च तापश्च तौ अनंतगुणितौ, दुःखयत इति दुःखौ—दुःखकारिणावित्यर्थः भवतः । अथ क्षेत्रवेदनामुक्त्वा परमाधार्मिकदेवकृता वेदनामाह—च पुनस्तीव्रा व्यथाः—पीडाः सुरैः—परमाधार्मिकैः कृता भवंति, किंभूता ?—विविधा—नानाप्रकारास्तप्तलोहपुत्रिकालिंगनदापनतप्तत्रपुपानकरणवैतरणीनद्युत्तारणादिकाः हे आत्मन् !—हे कुमते भाविनो—भविष्यतोऽमुष्मान्नरकात्किं न बिभेषि ?—भयं न प्राप्नोषि, अपितु बिभीहि । किं० ?—सततं—निरंतरमभ्रम्—आकाशं बिभर्तीति अभ्रभृत्तस्मादाक्रंदा—वेदनयोगात् पूत्कारास्तेषां आरवाः—शब्दास्तैः, यद्—यस्मात्कारणात्त्वं विषयैः पंचभिः—शब्दरूपगंधरसस्पर्शैर्मोदसे—हृष्यसि, किंलक्षणैः ?—क्षणं यावत्सुखयंतीति क्षणसुखास्तैः, त्वं कीदृशः ?—कषायी—कषायवान् ॥१०२॥ युग्मं ॥

अथ शास्त्रोक्तं तिर्यग्गतिस्वरूपं दर्शयन्नुपदिशति—

**बन्धोऽनिशं वाहनताडनानि, क्षुत्तृड्दुरामातपशीतवाताः ।**
**निजान्यजातीयभयापमृत्यू, दुःखानि तिर्यक्ष्विति दुःसहानि ॥ १०३ ॥ ३ ॥**

धनवि०—अनिशं—निरंतरं बंधो—रज्ज्वादिभिर्नियंत्रणं दुःखं भवति, च पुनरनिशं वाहनानि च—रथजलयंत्रतैलयंत्रादिषु योजनानि ताडनानि च—कशांकुशप्राजनादिना प्रहारविपर्यीकरणानि वाहनताडनानि, दुःखानि भवंति, च पुनः क्षुच—क्षुधा तृट् च—तृषा दुरामाश्च—दुष्टरोगा मुखपाकपादपाककुष्ठादयः आतपाश्च उष्णर्तुप्रभवाः शीतानि च—शीतकालप्रभवाणि शैत्यानि वाताश्च—वर्षाऋतुप्रभवाः पवनाः क्षुत्तृड्दुरामातपशीतवाताः दुःखानि भवंति, च पुनर्यत्र निजान्यजातीयभयं च—स्वजातीयपरजातीयजंतुभ्यो भीतिरपमृत्युश्च—गलमोडनगलकर्त्तनामरणं निजान्यजातीयभयापमृत्यू दुःखे भवतः, इत्यमुना प्रकारेणोक्तानि तिर्यक्षु—तिर्य्यग्गतिगतजंतुषु दुःखानि दुःसहानि—दुःखेन सहनीयानि भवंतीत्यर्थः ॥ १०३ ॥ ३ ॥

---

रत्न०—अथ तिर्यग्गतिमाश्रित्य दुःखानि दर्शयति—वंधोऽनिशमिति० व्याख्या०—अनिशं—निरंतरं बंधो—बंधनं, अनिशमिति सर्वत्र योज्यं, भवति भवतो भवंति चेति यथार्हं योजनीयं, वाहनानि—अतिभारस्योत्पाटनानि रथादौ कृषिकर्मणि योजनानि वा ताडनानि प्राजनकादिभिस्तथा क्षुद्—बुभुक्षा तृष्णा—तर्षा आमा—रोगाः अतिभारवाहनसंजातव्रणादिकास्तथा आतपः शीतं वातो—वायुस्ते इतरेतरद्वंद्वः, तथा निजान्यजातीयेभ्यो महिषाणां

देवेष्वन्य-दास्यादि

अथ शास्त्रोक्तं देवगतिस्वरूपं दर्शयन्नुपदिशति—

**मुधाऽन्यदास्याभिभवाभ्यसूयाभियोऽन्तगर्भस्थितिदुर्गतीनाम् ।**
**एवं सुरेष्वप्यसुखानि नित्यं, किं तत्सुखैर्वा परिणामदुःखैः ? ॥ १०४ ॥ ४ ॥**

धनवि०—मुधा—उदरपूरणार्थरहितमन्येषां दास्यं—किंकरता अभिभवश्च—दैन्याः परबलवत्तरदेवैर्बलात्कारेण प्रविचारणादिरभ्यसूया च—अभि—सामस्त्येनासूया—परगुणासहनम्, असूयाऽन्यगुणदूषणमितिवचनाद् मत्सर इत्यर्थः, मुधाऽन्यदास्याभिभवाभ्यसूया भवंति, च पुनरंते—देवभवस्थितिपर्यवसाने यद्वाऽन्तश्च—देवभवायुःपर्यवसानं गर्भस्थितिश्च—मनुष्यतिर्यक्स्त्रीणामुदरेषु गर्भत्वेनावस्थानं दुर्गतयश्च—पृथिव्याद्येकेंद्रियेषु गमनान्यंतगर्भस्थितिदुर्गतयस्तासामेवम्—अमुना प्रकारेणोक्तान्यसुखानि—दुःखानि सुरेष्वपि—देवगतिगतजंतुष्वपि नित्यं—निरंतरं भवंति, अत्र सुरेष्वपीत्यत्रापिशब्दो यदि सुरेष्वपि दुःखानि तदा नारकादीनां का वार्तेति सकलसंसारस्य दुःखमयत्वद्योतकः;

---

महिषेभ्यो गजाना गजेभ्यश्चेत्यादि अन्यजातीयेभ्यो गजानां सिंहेभ्यः सिंहानां सरभेभ्यश्चेत्यादि भयं, तथाऽपमृत्युः—क्षुत्तृड्गाढवेदनाक्रांतत्वेन मरणं तौ इति—अमुना प्रकारेण दुःखानि भवंतीति योगः, किंलक्षणानि ?—दारुणानि, केषु ?—तिर्यक्षु ॥ १०३ ॥ ३ ॥

रत्न०—अथ सुरगतिमाश्रित्य दुःखानि दर्शयति—मुधाऽन्यदास्येति० व्याख्या—मुधा—वृथा मनुष्यास्तु वेतनग्रहणेनोदरभरणार्थं दास्यादिकर्म कुर्वंति देवास्तु वेतनोदरभरणे विनैव तत्कुर्वंतीति मुधाशब्दप्रयोगः, अन्येषाम्—इंद्रादीनां दास्यं—दासकर्म तेषामेवाभिभवः—पराभवो वज्रादिना ताडनादिकस्तथाऽभ्यसूया—परस्परमीर्ष्या इतरेतरद्वंद्वः ता भवंतीत्यन्वयः, अंतश्च—च्यवनं गर्भस्थितिः—गर्भः सः, तथा दुर्गतयः—श्वपचादिकुलोत्पत्तिलक्षणा

ननु देवभवेषु सुखान्यपि बहूनि भवंतीति किमल्पैरुपवर्णितैर्दुःखैरित्याकांक्षायामाह—वाऽथवा तत्सुखैः—देवभवसुखैः **परिणामदुःखैः**—परिणामेन—परिपाकेणांते प्राक्तपुण्यक्षयलक्षणेन दुःखैः—दुःखजनकैः **किं स्याद् ?**; न किमपीत्यर्थो; भावार्थस्तु "तं सुरविमाणविभवं चिंतिय चवणं च देवलोगाओ । अइबलियं चिअ जन्नवि फुट्टइ सयसक्करं हिययं[1]" ॥ १ ॥ इत्यादिगाथाभावनया, भगवतीसूत्रे प्रथमशते सप्तमोद्देशके देवाश्च्यवनकालेऽग्रेतनभवोत्पत्तिस्थानमसमंजसं दृष्ट्वा कियत्कालमनाहारका भवंतीत्यादिभावनया च स्पष्ट एवेति ॥ १०४ ॥ ४ ॥

अथ शास्त्रोक्तं मनुष्यगतिगतदुःखस्वरूपं दर्शयन्नुपदिशति—

**सप्तभीत्यभिभवेष्टविप्लवानिष्टयोगगददुःसुतादिभिः ।**
**स्याद् ध्रुवं विरसता नृजन्मनः, पुण्यतः सरसतां तदानय ॥१०५॥५॥** "दुष्कुटुंबकै"रिति वा पाठः

**धनवि०**—यद्—यस्मात्सप्त भीतयश्च—पूर्वोक्ता अभिभवश्च—पराभव इष्टविप्लवश्च—प्रियवियोगोऽनिष्टयोगश्च—अप्रियसंयोगो

---

वा इतरेतरद्वंद्वे तासां मियो—भयानि भवंतीति—एवममुना प्रकारेण सुरेष्वप्यसुखानि भवंति, कथं ?—नित्यं, वा पुनस्तेन हेतुना तेषां सुखैस्तत्सुखैः किं स्याद् ?, अपितु न किमपि । ततः किं० ?—परिणामेन—परिपाकेण दुःखयंतीति दुःखानि तैः, अत्र गर्भस्थितिभीकथनेन ग्रैवेयकानुत्तरसुराणामपि दुःखं गृहीतं, अन्यथा तेषां दास्याद्यभावात् कथं दुःखानि स्युरिति ? ॥ १०४ ॥ ४ ॥

**रत्न०**—अथ मनुष्यगतिसंबंधिदुःखान्याह—**सप्तभीति०** व्याख्या—ध्रुवं नृजन्मनो—मनुष्यभवस्य विरसता—रसराहित्यं स्यात्, निःस्वादता

---

[1] तं सुरलोकविभवं चिन्तयित्वा च्यवनं च देवलोकात् । अतिबलीयश्चैव हृदयं यन्नैव शतशर्करं स्फुटति ॥ १ ॥ उपदेशमाला.गा. २८६

दुःखततेर्भावः

गदाश्च—रोगा दुःसुताश्च—कुपुत्रा इति द्वंद्वस्ते आदिर्येषां ते तथा तैः, आदिपदात्कुमामकुनरेंद्रसेवाकुभोजनकुकलत्रनिर्धनत्वनिष्पुत्रत्वकन्याबहुत्वादिभिः, पाठांतरेण दुष्कुटुंबकैः—अपरमात्रादिभिः ध्रुवं—निश्चितं नृजन्मनः—मनुष्यावतारस्य विरसता—वैरस्यं स्याद्—भवति, तत्—तस्मात्पुण्यतो—धर्मकर्मतो नृजन्मनः सरसतां—सारस्यमानय—प्रापयेति ॥ १०५ ॥ ५ ॥

अथ शास्त्रोपदिष्टचतुर्गत्याश्रितोपदेशाख्यप्रतिद्वारमुपसंजिहीर्षुरुपदिशन्नाह—

इति चतुर्गतिदुःखततीः कृतिन्नतिभयास्त्वमनंतमनेहसम् ।
हृदि विभाव्य जिनोक्तकृतांततः, कुरु तथा न यथा स्युरिमास्तव ॥ १०६ ॥ ६ ॥

धनवि०—हे कृतिन् !—हे पंडित त्वमनंतमनेहसम्—अनंतं कालं यावदनुभूता इत्यनंतरोक्तस्वरूपा अतिशयेन भयं यासु वा अति

---

स्यादित्यर्थः, कैः ?—इहलोक १ परलोकभया २ ऽऽदाना ३ ऽऽकस्मिका ४ ऽऽजीविका ५ मरणा ६ ऽयशोभय ७ लक्षणास्सप्त भीतयः तथा राजागात्स्वजनत्ययदारादीनामभिभवः, तथेष्टाना—स्त्र्यादीनां विप्लवो—विरहः तथा अनिष्टानां—दस्युपारदारिकपिशुनानां योगः—संबंधः तथा गदा—रोगाः तथा दुः—दुष्टाः सुताः—पुत्रास्ते आदौ येषां तैर्हेतुभिः, आदिशब्दाद्दुष्टभ्रातृभार्यादीनां ग्रहणं, तथा दुष्कुटुंबकैरिति वा पाठांतरं । हे आत्मन् ! तस्य नृजन्मनः सरसता पुण्यतः—पुण्यकार्यकरणादानय, अत्र रसशब्दो लक्षणया प्रयुक्तः, यथा सरसं वस्त्वाम्रादि मनोहरं सुस्वादु सुखदं च भवति तथा नृजन्मापि कुरुष्वेत्यर्थः ॥ ५ ॥ ५ ॥

रत्न०—अथोपसंहारवाक्यमाह—इति चतुर्गतिदुःखततीरिति० व्याख्या—हे आत्मन् हे कृतिन् !— हे पंडित इति—पूर्वोक्तप्रकारेण चतु-

भयाश्चतुर्गतिदुःखततीर्जिनोक्तकृतांततो—भगवदुक्तसिद्धांततो हृदि—चित्ते विभाव्य—विचिंत्य तथा—तेन प्रकारेण धर्मं कुरु—विधेहीति, यथा—येन प्रकारेण तवेमाश्चतुर्गतिदुःखततयो न स्युः—न भवेतामि(युरि)ति ॥ १०६ ॥ ६ ॥

अथ शास्त्राख्यमूलद्वारमुपजिहीर्षुरुपदिशति—

**आत्मन्! परस्त्वमसि साहसिकः श्रुताक्षैर्यद्भाविनं चिरचतुर्गतिदुःखराशिम्।**
**पश्यन्नपीह न बिभेषि ततो न तस्य, विच्छित्तये च यतसे विपरीतकारी ॥ १०७ ॥ ७ ॥**

धनवि०—हे आत्मन्!—हे प्राणिन् तत्—तस्मात्त्वं पर—उत्कृष्टः साहसिकः—अविमृश्यकारी असि—वर्त्तसे, यद्—यस्मात्त्वमिह—संसारे भाविनं—भविष्यंतं चिरं चतुर्गतिदुःखराशिं—देवमनुष्यतिर्यग्नरकसत्कदुःखसमूहं श्रुताक्षैः—श्रुतलोचनैः पश्यन्नपि—विलोकयन्नपि ततश्चिरचतुर्गतिदुःखराशेर्न बिभेषि—न भीति प्राप्नोषि, च पुनस्तस्य चिरचतुर्गतिदुःखराशेर्विच्छित्तये—विशेषेणोच्छेदाय विपरीतकारी-

---

गतीनां—नरकतिर्यग्देवमनुष्यगतीना दुःखततीः प्रति—दुःखश्रेणीः प्रति जिनेन—अर्हता वीरेणोक्तो यः कृतांतः—सिद्धांतस्तस्माद् हृदि—मनसि विभाव्य—विचार्य त्वं तथा कुरु। कि० ?—अति—अतिशयेन भयं याभ्यस्ताः, कथं ?—यावत्, कम् ?—अनंतम्—अंतरहितमनेहसं—कालं, तथा कथं ?—यथा इमाः चतुर्गतिदुःखततयस्तव न स्युः—न भवंतीति ॥ १०६ ॥ ६ ॥

रत्न०——अथ चतुर्गतिदुःखराशिं भाविनं जानानस्याप्यात्मनोऽधर्मे प्रवृत्तिमतः साहसिकत्वं दर्शयति—**आत्मन्! परस्त्वमसीति०** व्याख्या——हे आत्मन्! त्वं परः—उत्कृष्टः साहसिकः—अविमृश्यप्रवृत्तिकार्यसि यतो हेतोर्भाविनं—भविष्यंतं चिरं—चिरकालं चतुर्गतिदुःखराशिं श्रुताक्षैः—श्रुतनेत्रैः पश्यन्नपीह—संसारे न बिभेषि—भयं नाप्नोषि, ततो हेतोरस्य—चतुर्गतिदुःखराशेर्विच्छित्तये—विच्छेदाय च पुनर्न यतसे—न यत्नं करोषि, यतस्त्वं किंलक्षणः ?—

सन्–शास्त्रोक्तार्थाद्विपरीतसमाचरणः सन्न यतसे–नोद्यमं कुरुषे ॥ १०७ ॥ ७ ॥

इति श्रीतपोगच्छनायक...महोपाध्यायश्रीकल्याणविजयगणिशिष्योपाध्याय...श्रीधनविजयगणि-
विरचितायां...शास्त्राधिकारनाम्न्यष्टमी पदपद्धतिः ॥ ८ ॥

विपरीतं–चिरचतुर्गतिदुःखराशिजनकं विषयासेवनं करोषीत्येवंशीलो विपरीतकारी ॥ १०७ ॥ ७ ॥

विपरीत-कारिता

## ९ चित्तदमनाधिकारः ॥

ननु मनोनिग्रहं विनाऽनंतरोक्तेन शास्त्रद्वारेण किं स्यादित्याशंकायां मनोनिग्रहद्वारमुपदिशन्नाह—

**अथ मनः ।**

अथ मन इति, अथ शास्त्रद्वारकथनानंतरं मनः–चित्तं निग्रहविषयीकार्यमिति मनोनिग्रहद्वारमुपदिश्यते इति । तत्र प्रथमं मनसो धीवरसादृश्यं दर्शयन्नुपदिशति—

मनसोऽविश्वासः

**कुकर्मजालैः कुविकल्पसूत्रजैर्निबध्य गाढं नरकाग्निभिश्चिरम् ।**
**विसारवत् पक्ष्यति जीव ! हे मनःकैवर्त्तकस्त्वामिति माऽस्य विश्वसीः ॥ १०८ ॥ १ ॥**

धनवि०—हे जीव!–आत्मन् मनःकैवर्त्तकः–चित्तधीवरः कुविकल्पसूत्रजैः–कुचिंतनरूपतंतुजन्यैः कुकर्मजालैः–ज्ञानावरणाद्यष्टविधदुष्कर्मलक्षणमत्स्यजालैर्गाढम्–अत्यर्थं निबध्य–नियंत्र्य विसारवद्–मत्स्यमिव त्वां नरकाग्निभिः–नरकलक्षणवैश्वानरैः चकारादन्यैर्दुःखाग्निभिश्चिरं–चिरकालं पक्ष्यति–पचनक्रियाविषयं करिष्यति, इत्यनंतराद्धेतोरस्य–मनसो मा विश्वसीः–विश्वासं मा कार्षीरित्यर्थः ॥ १०८ ॥ १ ॥

अथ दुष्टं मनोऽनुकूलयन्नाह—

**चेतोऽर्थये मयि चिरत्नसख! प्रसीद, किं दुर्विकल्पनिकरैः क्षिपसे भवे माम्?।**
**बद्धोऽञ्जलिः कुरु कृपां भज सद्विकल्पान्, मैत्रीं कृतार्थय यतो नरकाद्बिभेमि ॥ १०९ ॥ २ ॥**

धनवि०—हे चेतः! अहमर्थये–प्रार्थनां करोमि हे चिरत्नसख!–हे चिरंतनमित्र त्वं मयि–मद्विषये प्रसीद–प्रसन्नं भव, अत्रात्मनो

---

रत्न०—अथ मनःकैवर्तो मत्स्यानिव त्वां बद्ध्वा पक्ष्यतीति न विश्वासार्हं इति दर्शयति–**कुकर्मजालैः कुविकल्पसूत्रजैरिति०** व्याख्या—हे जीव! मन एव कैवर्त्तको–धीवरस्त्वां प्रति विसारं–मत्स्यमिव विसारवत् पक्ष्यति–पाकविषयीकरिष्यति, कैः?–नरका–नरकावासा अतीवोष्णत्वादग्नय इवाग्नयस्तैः, कथं?–चिरं–चिरकालं, किं कृत्वा?–निबध्य–बद्ध्वा, कथं?–गाढम्–अत्यर्थं, कैः?–कुकर्माण्येव जालानि–मत्स्यबंधनोपकरणानि तैः, किंलक्षणैः?–कुविकल्पा एव सूत्राणि–तंतवः तेभ्यो जायंत इति कुविकल्पसूत्रजानि तैः, धीवरोऽपि जालैर्मत्स्यं निबध्याग्निभिश्चिरं पचतीति युक्त उपमानोपमेयभावः, इति हेतोस्त्वमस्य मनःकैवर्त्तकस्य मा विश्वसीः–मा विश्वासं कुर्याः, यथाऽस्य जाले न पतसि तथा यतेथा इति ॥ १०८ ॥ १ ॥

अन्तःकरणवश्यता

गनसश्चिरंतनमित्रवा व्यवहारतोऽनेकभवसंबंधादेव प्रतीता, अप्रसन्नस्य प्रसत्तिप्रार्थनायोग्यता भवतीति मनसोऽप्रसत्तिस्वरूपं दर्शयति—यतो दुर्विकल्पनिकरैः—दुष्टचिंतनसमूहैस्त्वं मां भवे—संसारे किं—किमर्थं क्षिपसे ?—क्षेपणं कुरुषे, मयाऽञ्जलिः—प्रार्थनापूर्वकं करसंयोजनं वद्धो—रचितस्तव मनसः पुरस्तादितिगम्यं, प्रार्थनामेवाह—त्वं मयि कृपां—दयां कुरु—समाचर, का कृपा कर्त्तव्येत्याह—सद्विकल्पान् धर्मध्यानहेतुकार्यचिंतनलक्षणान् भज—आश्रय, चिरंतनां मैत्रीं—मित्रत्वं कृतार्थय—कृतार्थां—सफलां कुर्वित्यर्थः; एतावत्प्रार्थनाकरणे हेतुमाह—यतः कारणादहं नरकान्—नरकगतेर्बिभेमि—भयं गच्छामीति ॥ १०९ ॥ २ ॥

अथ मनसः सामर्थ्यं दर्शयन् तद्वशीकार्यमित्युपदिशति—

**स्वर्गापवर्गौ नरकं तथाऽन्तर्मुहूर्त्तमात्रेण वशावशं यत् ।**
**ददाति जंतोः सततं प्रयत्नाद्वशं तदंतःकरणं कुरुष्व ॥ ११० ॥ ३ ॥**

धनवि०—यन्मनोऽन्तर्मुहूर्त्तमात्रेण—द्विघटिकाप्रमाणकालमात्रेण वशं च—आयत्तमवशं च—अनायत्तं सज्जंतोः—प्राणिनः स्वर्गो-

---

रत्न०—अथात्मा भीतः सन् मनःसुहृदं विज्ञपयति—चेतोऽर्थये इति०, व्याख्या—जीवः कथयति—हे चेतः !—हे मनस्त्वां प्रत्यहमर्थये—याचे हे चिरसख !—हे चिरकालीनमित्र त्वं मयि विपये प्रसीद—प्रसन्नं भव, मा प्रति दुर्विकल्पानां निकराः—समूहास्तैर्हेतुमिर्भवे—संसारे किं क्षिपसे ?, प्रसादं कृत्वा मा क्षिपस्वेत्यर्थः । त्वा प्रति मयाऽञ्जलिः—प्रसृतिद्वययोजनरूपो वद्धः । किमर्थमित्याह—त्वं कृपां कुरु, कृत्वा सतः—शोभनान् विकल्पान् भज—श्रय, तथा मैत्रीं कृतार्थय—सफलय यतो हेतोरहं नरकाद्बिभेमीति ॥ १०९ ॥ २ ॥

पवर्गौ प्रसिद्धौ तथा नरकं प्रसिद्धं ददाति—दत्ते, वशं मनः स्वर्गापवर्गौ ददाति, अवशं च नरकं ददातीत्यर्थः, तदंतःकरणं—तन्मनः सततं—निरंतरं प्रयत्नाद्—उद्यमतो वशं—स्वायत्तं कुरुष्व—विधेहीत्यर्थः ॥ ११० ॥ ३ ॥

अथ मनस एवैहिकपारलौकिकसुखकारणतां दर्शयन्नुपदिशति—

**सुखाय दुःखाय च नैव देवा, न चापि कालः सुहृदोऽरयो वा ।**
**भवेत् परं मानसमेव जंतोः, संसारचक्रभ्रमणैकहेतुः ॥ १११ ॥ ४ ॥**

**धनवि०**—**जंतोः**—प्राणिनः **सुखाय च पुनर्दुःखाय देवा**—इंद्रचंद्रादयो **नैव** भवंति, **च** पुनः **कालोऽपि**—सुपमदुष्पमादिः कृतयुगादिर्वा सुखाय दुःखाय न भवति, नापि **सुहृदो**—मित्राण्यथवा **अरयः**—शत्रवः सुखाय दुःखाय भवंति, **परं**—केवलं **मानसमेव**—अंतःकरणमेव **जंतोः संसारचक्रे**—भवसमूहेऽथवोत्सर्पिण्यवसर्पिणीलक्षणद्वादशारे संसारचक्रे **भ्रमणं**—पुनः पुनः पर्यटनं तस्यैकः—अद्वितीयो

---

**रत्न०**—अथ कियद्भिः काव्यैरात्मानं मनोवशीकरणमुपदिशन्नाह—**स्वर्गापवर्गाविति०** व्याख्या—हे आत्मन्! यदंतःकरणं—मनो वशं च तदवशं च वशावशं सज्जंतोः—जीवस्य स्वर्गश्च अपवर्गश्च स्वर्गापवर्गौ—त्रिदिवमोक्षौ अंतर्मुहूर्तमात्रेण जीर्णश्रेष्ठिप्रसन्नचंद्रराजर्ष्योरिव ददाति, वशं सदिति ज्ञेयं, तथा—अंतर्मुहूर्तमात्रेण नरकं तंदुलमत्स्यस्येव ददाति, अवशं सदिति ज्ञेयं, तत्—तस्माद्धेतोर्हे आत्मन्! तदंतःकरणं वशम्—आयत्तं कुरुष्वेति ॥ ११० ॥ ३ ॥

**रत्न०**—**सुखाय दुःखाय चेति०** व्याख्या—हे आत्मन्! देवाः सुखाय—सुखहेतवे दुःखाय—दुःखहेतवे च न भवंति, तथा कालः—प्रावृडा-

हेतुः—कारणं भवेत्, अत्र हेतुशब्दोऽजहल्लिंगः । भावार्थस्तु आराधिता देवाः सुखाय न भवंति, विराधिताश्च देवा दुःखाय न भवंति, न पुनः सुषमकालः सुखाय न भवति, दुष्षमकालश्च दुःखाय न भवति, च पुनः सुहृदः सुखाय न भवंति, वैरिणश्च दुःखाय न भवंति, पर—केवलं मानसमेव वशीकृतं सुखाय भवति अवशीकृतं च दुःखाय भवतीति ॥ १११ ॥ ४ ॥

वशहत-मनःफलं

अथ मनोनिग्रहमंतरेण यमनियमादीनां वैयर्थ्यं दर्शयन्मनोनिग्रहमेवोपदिशति—

**वशं मनो यस्य समाहितं स्यात्, किं तस्य कार्यं नियमैर्यमैश्च ? ।**
**हृतं मनो यस्य च दुर्विकल्पैः, किं तस्य कार्यं नियमैर्यमैश्च ? ॥ ११२ ॥ ५ ॥**

धनवि०—यस्य पुरुषस्य मनः—चित्तं वशं—स्वायत्तं तत्समाहितं—समाधियुक्तं रागद्वेषरहितं स्याद्—भवेत्तस्य पुरुषस्य नियमैः—शौचादिभिः पंचभिः च पुनर्यमैः—अहिंसादिभिः किं स्याद् ?, अपि तु न किंचिदित्यर्थः; अत्र यमनियमयोः स्वरूपं चेदं, नियम्यते चित्तमेभिरिति नियमास्ते च "नियमाः शौचं संतोषः, स्वाध्यायतपसी अपि । देवताप्रणिधानं च"ति, ( अभिधानचिंतामणिः १ कांडं ) शुचे-

---

दिरपि न, सुहृदो—मित्राण्यपि न वा, पुनररयोऽपि न सुखाय न दुःखाय चेति यथार्हं योजनीयं, परं—केवलमेकं जंतोः—जीवस्य मानसं—मन एव सुखाय दुःखाय च भवेयतः । किंलक्षणं ?—संसारचक्रे—संसारसमूहे अथवोत्सर्पिण्यवसर्पिणीलक्षणे द्वादशारसंसारचक्रे भ्रमणं तस्यैकः—अद्वितीयो हेतुः—कारणमत्रैवकारोऽन्ययोगव्यवच्छेदार्थः, इदं वचनं सज्ञिन आश्रित्य ज्ञेयं; असंज्ञिनां मनसः अभावेऽप्यनंतसंसारचक्रभ्रमो दृश्यते तेनेत्यर्थः ॥ १११ ॥ ४ ॥

रत्न०—**वशं मनो यस्ये**ति० व्याख्या—मनो वशं—स्वायत्तं सत् समानतालक्षणैः हितं—सुस्थं समाधिसत्त्वात्तस्यात्मनो नियमैः—शौचसंतोषस्वाध्यायतपोदेवताप्रणिधानलक्षणैः पचभिर्यमैः—अहिंसासूनृतास्तेयब्रह्माकिंचन्यैः पंचभिश्च किं कार्यं ?—किं प्रयोजनं, ते तु मनोवशीकरणायैव संति,

भावः कर्म वा शौचं—कायमनसोः शुद्धिः १, संतोषः—सन्निहितसाधनादधिकस्यानुपादित्सा २ स्वकीयमध्ययनं स्वाध्यायो, मोक्षशास्त्राध्ययनं प्रणवजपो वा ३ तप्यते तदिति तपः—चांद्रायणादि ४ देवतायाः—वीतरागस्य प्रणिधानम्—आत्मना सर्वतः संभेदः ५ इति पंचविधाः; यम्यते—उपरम्यते दुर्गतिभ्य आत्मा एभिरिति यमाः, ते चाहिंसासूनृतास्तेयब्रह्माकिंचनाः, तत्र हिंसा—प्राणव्यपरोपणं तदभावोऽहिंसा १, सूनृतं— सत्यं प्रियं वा वचः २, स्तेयम्—अदत्तादानं तदभावोऽस्तेयं ३, ब्रह्मचर्यं—मैथुनत्यागः ४, अकिंचनता—परिग्रहत्यागः ५, इति पंचविधाः, च पुनः **यस्य मनो विकल्पैः**—दुश्चिंतितैर्हतम्—उपहतं व्याप्तं स्यात्तस्य पुरुषस्य **यमैर्नियमैश्च किं कार्यं** स्याद् ?, अपि तु न किंचिदिति, मनसो वशत्वेऽवशत्वे च यमनियमयोर्वैयर्थ्यमिति भावः, यदुक्तं—"रागद्वेषौ यदि स्यातां, तपसा किं प्रयोजनम् ? । तावेव यदि न स्यातां, तपसा किं प्रयोजनम् ? ॥ १ ॥" ॥ ११२ ॥ ५ ॥

अथ मनोनिग्रहमंतरेण दानादिधर्मव्यर्थतां दर्शयन्नुपदिशति—

**दानश्रुतध्यानतपोऽर्चनादि, वृथा मनोनिग्रहमंतरेण ।**
**कषायचिंताऽऽकुलतोज्झितस्य, परो हि योगो मनसो वशत्वम् ॥ ११३ ॥ ६ ॥**

**धनवि०—मनोनिग्रहमंतरेण**—मनसो वशीकरणं विना **दानश्रुतध्यानतपोऽर्चनादि** धर्मकर्मेति गम्यं, **वृथा**—मिथ्या स्यादिति, तत्र

---

तत्तु स्वत एव वशेऽस्ति ततस्तैः किमिति भावः । च पुनर्यस्य मनो दुर्विकल्पैर्हतं—पीडितं तस्यात्मनोऽपि यमैर्नियमैश्च पूर्वोक्तैः किं कार्यं ?—न किंचिदिति, नियमा यमाश्च मनोवशीकरणप्रयोजनाः तत्तु दुर्विकल्पैर्व्युदस्तं ततोऽजागलस्तनमुखप्रक्षेपप्रायैः किं प्रयोजनं तैः ?, चकारस्तुल्ययोगितायां पक्षांतरे वेति ॥ ११२ ॥ ५ ॥

दानं च–अभयदानसुपात्रदानअनुकंपादानउचितदानकीर्त्तिदानभेदात्पंचधा, यदुक्तं–"अभयं सुपत्तदाणं अणुकंपा उचियकित्तिदाणं च। तिन्निहिं मोक्खो भणिओ दुन्नि य भोगाइयं दिंति ॥ १ ॥" इति, श्रुतं च–श्रुतज्ञानं शास्त्राध्ययनमित्यर्थः, ध्यानं च–धर्मध्यानादि, तपश्च द्वादशभेदम्, अर्चनं च–अष्टप्रकारादिपूजा, ततो द्वंद्वस्तान्यादौ–प्रथमं यस्य तत्तथा, आदिपदात्तीर्थयात्राप्रतिष्ठादिधर्मकर्मपरिग्रहः; अत्रोक्तार्थे हेतुमाह–हि–यतः कारणात्कषायेभ्यः–क्रोधादिभ्यश्चिंता–आर्त्तध्यानरौद्रध्यानात्मिका तयाऽऽकुलता–व्याकुलता तयोज्झितस्य–रहितस्य पुरुषस्य मनोवशत्वं–मनसः स्वायत्तत्वं परः–प्रकृष्टो योगो–मुक्त्यंगं भवतीत्यर्थः, ननु पूर्ववृत्ते नियमवैयर्थ्यकथनेन तदंतःपातितपोवैयर्थ्यं प्रतिपादितमेव, पुनरत्र तपोवैयर्थ्यप्रतिपादने पौनरुक्त्यं स्यादिति चेन्न, पूर्वकाव्ये नियमांतःपातित्वेन तपोवैयर्थ्ये प्रतिपादितेऽपि साक्षात्तस्याप्रतिपादनादिति ॥ ११३ ॥ ६ ॥

अथ केवलस्य मनोनिग्रहस्य साक्षान्मुक्त्यंगतां दर्शयन्नुपदिशति—

**जपो न मुक्त्यै न तपो द्विभेदं, न संयमो नापि दमो न मौनम्।**
**न साधनाद्यं पवनादिकस्य, किं त्वेकमंतःकरणं सुदांतम् ॥ ११४ ॥ ७ ॥**

---

रत्न०—दानश्रुतध्यानतपोऽर्चनादीति०, व्याख्या—मनसो निग्रहो–नियंत्रणं तमंतरेण जीवस्य दानं च श्रुतं च ध्यानं च तपश्च अर्चनं च दानतपोऽर्चनानि० तानि आदौ यस्य तत्, तपो द्वादशधा अर्चनं–देवगुरुज्ञानादिपूजनं, आदिशब्दाच्चैत्यबिंबप्रतिष्ठादि गृह्यते, वृथा–मुधा, न

---

१ अभय सुपात्रदानं अनुकंपा–उचितकीर्तिदानं च। त्रिभिर्मोक्षो भणितः द्वे च भोगादीन् ददतः ॥ १ ॥

जपः—ॐकारादिजापो मुक्त्यै—मोक्षाय न स्यादिति, तथा द्विभेदं—बाह्यत्वाभ्यंतरत्वभेदेन द्विप्रकारं तपः—अनशनप्रायश्चित्तादि मुक्त्यर्थं न स्यात्, नापि संयमः—पृथ्वीकायसंयमादिः पंचाश्रवविरमणादिर्वा सप्तदशभेदः, नापि दमः—पंचेंद्रियदमनं, नापि मौनं—वाक्संयमो, नापि पवनादिकस्य साधनं, पवनादिकस्येत्यत्रादिपदेन ध्यानासनादिपरिग्रहः, साधनाद्यमित्यत्राद्यपदेनावस्थानबंधनादिपरिग्रहः, तेन ध्यानावस्थानं आसनबंधनं च मुक्त्यै न भवेदित्यादि गम्यं, अत्र पवनसाधनादिकं योगशास्त्रादिभ्योऽवसेयं; एकम्—अद्वितीयमंतःकरणं—मनः सुदांतं—शोभनप्रकारेण नियंत्रितं मुक्त्यै भवेदिति, अत्र संयमसप्तदशभेदसूचिका गाथा चेयं—"[1]पुढविदगअगणिमारुयवणस्सइबितिचउपणिंदिअज्जीवे । पेहुप्पेहपमज्जण परिठ्ठवणमणोवईकाए ॥ १ ॥" अत्रोपेक्षासंयमस्वरूपं सीदतां संयतानां चिंता असंयतानां नेति प्रतिक्रमणसूत्रवृत्तौ, उपेक्षा—असंयमयोगेष्वव्यापारणं संयमयोगस्य व्यापारणमिति समवायवृत्तावित्यत्र विशेषार्थिनाऽऽवश्यकवृत्तिर्विलोक्येति, पुनः संयमस्य प्रकारान्तरेण सप्तदशभेदप्रतिपादिकाऽऽर्या चेयं—"पंचाश्रवाद्विरमणं पंचेंद्रियनिग्रहः कषायजयः । दंडत्रयविरतिश्चेति संयमः सप्तदशभेद ॥ १ ॥" इति ॥ ११४ ॥ ७ ॥

---

मोक्षसाधकमित्यर्थः, हि—यस्मात्कारणात् मनसो वशत्वं परः—परमो योगः—अष्टांगयोगः, मनसः किंलक्षणस्य ?—कषायाः—क्रोधमानमायालोभास्तैर्यांश्चिता—दुर्विकल्पास्ताभिराकुलता—व्यग्रत्वं तयोज्झितस्य—त्यक्तस्य ॥ ११३ ॥ ६ ॥

रत्न०—जपो नेति०, व्याख्या—जपो—जापः परमेष्ठिमंत्रादेर्मुक्त्यै—मुक्तये न स्यात्, मुक्त्यै इति सर्वत्र योज्यं, तथा तपो न, किंलक्षणं ?—

---

१ पृथ्वीदकाग्निमरुद्वनस्पतिद्वित्रिचतुष्पंचेन्द्रियाजीवेषु । प्रेक्षोपेक्षाप्रमार्जनपरिष्ठापनमनोवाक्कायेषु ॥ १ ॥

अत्र दुष्टत्वेन मनसः पिशाचतां दर्शयन् तन्निग्रहमुपदिशति—

लब्ध्वाऽपि धर्मं सकलं जिनोदितं, सुदुर्लभं पोतनिभं विहाय च ।
मनःपिशाचग्रहिलीकृतः पतन्, भवाम्बुधौ नायतिदृग् जडो जनः ॥ ११५ ॥ ८ ॥

धनवि०—सुदुर्लभं सुष्टु—अतिशयेन दुर्लभं—दुष्प्रापं दशभिर्दृष्टांतैरिति शेषः, पोतनिभं—यानपात्रसदृशं जिनोदितम्—अर्हत्प्रकाशितं धर्मं सागारानगारभेदाद् द्विविधं सकलं—परिपूर्णं मूलगुणोत्तरगुणसहितं लब्ध्वाऽपि—प्राप्यापि मन एव पिशाचः—उन्मादजनकत्वेन व्यंतरविशेषस्तेन ग्रहिलीकृतो—विकलीकृतः सन्, च पुनस्तं तथाविधं धर्मं विहाय—त्यक्त्वा भवाम्बुधौ—संसारसागरे पतन्—निमज्जन् जडो—मूर्खो जनो—लोक आयतिदृग्—उत्तरकालदर्शी न भवतीति ॥ ११५ ॥ ८ ॥

---

द्वौ भेदौ बाह्याभ्यंतरलक्षणौ यस्य, तथा संयमः—चारित्रं न, दमः—इन्द्रियदमनं, तथा न पवनादिकस्य साधनाद्यं, आदिशब्दाच्चतुरशीतियोगासनसाधनादिग्रहः, किम्वितिविशेषे, मनः सुष्टु दातम्—उपशांतं सन् मुक्त्यै—अष्टकर्ममुक्तये स्यात् ॥ ११४ ॥ ७ ॥

रत्न०—लब्ध्वाऽपि धर्ममिति०, व्याख्या—जडो—मूर्खो जनः आयतिम्—उत्तरकालं पश्यतीति आयतिदृग् नास्ति, अथवा आयतौ दृग्—बुद्धिर्यस्य स आयतिदृग् नास्ति, उत्तरकाले मम किं भविष्यतीति विचारवान्नास्तीत्यर्थः, किं कुर्वन् ?—पतन्, कस्मिन् ?—भवांबुधौ—भवसमुद्रे, किंभूतः सन् ?—मन एव पिशाचो—भूतस्तेन ग्रहिलीकृतः सन्, किं कृत्वा ?—लब्ध्वाऽपि—प्राप्यापि, च पुनः किं कृत्वा ?—संत्यज्य, कं ?—धर्मं, धर्मं प्राप्य पुनः सत्यज्येत्यर्थः, कीदृशं ?—सकलं—पूर्णं, किंलक्षणं ?—जिनैः—सर्वज्ञैरुदितं—कथितं, न तु शाक्याद्यादिष्टमिति, पुनः किंभूतं ?—सुदुर्लभम्—अतिशयेन दुर्लभमित्यर्थः, पुनः कीदृशं ?—पोतस्य—यानपात्रस्य निभं—सदृशमाश्रितजनतारकत्वादिति ॥ ११५ ॥ ८ ॥

अथ मनसः शत्रुतां दर्शयन् तन्निग्रहमुपदिशति—

**सुदुर्जयं ह्री रिपवत्यदो मनो, रिपूकरोत्येव च वाक्तनू अपि।**
**त्रिभिर्हतस्तद्रिपुभिः करोतु किं, पदीभवन् दुर्विपदां पदे पदे? ॥ ११६ ॥ ९ ॥**

**धनवि०—हीति खेदे अदो मनः सुदुर्जयं सद्**—अतिशयेन दुःखेन—कष्टेन जीयते इति, तथा सद्रिपवति—रिपुरिवाचरति, स्वयमितिगम्यं, अत्रादःशब्देन विप्रकर्षो, यदुक्तम्—"इदमः प्रत्यक्षगते समीपतरवर्त्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् ॥१॥" इति, विप्रकृष्टता च मनसोऽतिचंचलत्वेनास्वायत्तत्वात्, च पुनरदो मनो **वाक्तनू अपि**—वचनशरीरे अपि **रिपूकरोति**—शत्रूकरोति, मनोव्यापारे दुष्टे वाक्कायव्यापारयोरपि दुष्टत्वभवनात्; तत्—तस्मात् **त्रिभिः**—त्रिसंख्याकै **रिपुभिः**—वैरिभिर्वाक्कायमनोलक्षणैर्**हतो**—हननविषयीकृतः **पदे पदे**—स्थाने स्थाने **दुर्विपदां**—दुष्टापदां **पदीभवन्**—आस्पदीभवन् भवल्लक्षणो जन इति गम्यं **किं करोतु?**—किं साधयत्विति काकूक्त्याऽन्वयः; भावार्थस्तु अकृते मनोनिग्रहे वाक्तनू दुष्टे भवतः, कृते च मनोनिग्रहे वाक्तनू मोक्षसाधके भवत इति काव्यभावमवधार्य मनोनिग्रहं पूर्वमेव कुरु येन वाक्तनू दुष्टे न भवत इति ॥ ११६ ॥ ९ ॥

---

**रत्न०—सुदुर्लभमिति०** व्याख्या—हे आत्मन्! ते—तव अदः—एतन्मनो—हृदयं रिपवति—रिपुवदाचरति, यतः किंलक्षणं?—सुदुर्जयं—अतिशयेन दुर्जेतव्यमत एव रिपवतीत्यर्थः, च पुनः स्वयं रिपुवदाचरद्वाकृतनू प्रति—वचनदेहौ प्रति रिपूकरोति, कथमेवं?—निश्चयेन मनो दुष्टं सद्वाक्कायावपि दुष्टौ करोत्येवेत्यर्थः, तत्—तस्मात् त्रिभी—रिपुभिर्भवान् हतो—मारितः सन् किं करोतु?—किं बलं करोत्वित्यर्थः, अपितु न किमपि, यतो

अथानन्तरोक्तमेव शत्रुत्वं मनसः समर्थयन्नाह—

**रे चित्तवैरि! तव किं नु मयाऽपराद्धं?, यद्दुर्गतौ क्षिपसि मां कुविकल्पजालैः।**
**जानासि मामयमपास्य शिवेऽस्ति गंता, तत्किं न संति तव वासपदं ह्यसंख्याः? ॥११७॥१०॥**

धनवि०—रे इति तिरस्कारेण संबोधनं रे चित्त—रे मनः रे वैरि—रे रिपो नु वितर्के मया आत्मना तव मनसः किं—किंनाम वस्त्व-पराद्धम्—अपराधविषयीकृतं विनाशितमितियावद्, अत्र वैरिशब्दस्य मनोविशेषणत्वेन नपुंसकलिंगता, यद्—यस्मात्कुविकल्पजालैः—आर्त्तरौद्रध्यानसमूहैः करणभूतैर्दुर्गतौ—नरकादिगतौ त्वं मां क्षिपसि, बलात्कारेण नयसीत्यर्थः; अथ दुर्गतिक्षेपणकारणं स्वयमेवोट्टंक्य स्वयमेव निरस्यति जानासीत्यादिनोत्तरार्द्धेन, जानासि—त्वं यद्येवं मनुषे, एवमिति किमित्याह—अयमात्मा मामपास्य—दूरीकृत्य शिवे—मोक्षे गंताऽस्ति—याताऽस्ति, सिद्धावस्थायामात्मनोऽमनस्कत्वस्य सिद्धांते भणनात्, तत्—तदा हीति निश्चितं तव मनसो वासपदं—

---

भवान् किं भवन्?—पदीभवन्—स्थानीभवन्, कासां?—दुः—दुष्टा विपदः—आपदस्तासां, कस्मिन्?—पदे पदे—स्थाने २, अपरोऽपि पुमान् त्रिभिर्वि-रिभिर्हतः सन्नतीव निर्बलो किं बलं करोत्विति भावः ॥ ११६ ॥ ९ ॥

रत्न०—हे चित्तवैरीति० व्याख्या—हे चित्तवैरि!—हे मनोरिपो तव मया किमिति प्रश्ने नु इत्यनुशये अपराद्धं?—अपराधः कृतः, हे चित्तवैरी-त्यत्र चित्तविशेषणत्वान्नपुंसकत्वमन्यथा पुंस्त्वे वैरिन्निति भवति, यद्—यतो हेतोर्मां प्रति दुर्गतौ क्षिपसि, कैः?—कुविकल्पानां जालानि—समूहास्तैर्हेतुभिः, यद्—यस्मात् कारणात्त्वं जानासि, किं जानासीत्याह—मां—मनः प्रत्यक्षं जीवः अपास्य—त्यक्त्वा शिवे—मुक्तौ गंताऽस्ति तत्—तर्हि तव मनसो वासाय—

स्थितिस्थानमसंख्याताः प्राणिनः किमिति काकूक्त्या प्रश्ने न संति ?, अपि त्वसंख्याताः संतीत्यर्थः, असंख्यातानां पंचेंद्रियगर्भजनरतिरश्चां नारकिणां देवानां च मनोवासस्थानानां विद्यमानत्वात् ॥ ११७ ॥ १० ॥

अथानिगृहीतमनसः सद्गत्ययोग्यत्वं दृष्टांतत्रयेण दर्शयन्नुपदिशति—

**पूतिश्रुतिश्वेव रतेर्विदूरे, कुष्ठीव संपत्सुदृशामनर्हः ।**
**श्वपाकवत् सद्गतिमंदिरेषु, नार्हेत् प्रवेशं कुमनोहतोऽङ्गी ॥ ११८ ॥ ११ ॥**

**धनवि०**—कुमनोहतो—दुष्टमनसा पराभूतोऽङ्गी—प्राणी **पूती**—परिपाकतः कुथितगंधौ कृमिजालाकुलत्वाद्युपलक्षणमेतत् **श्रुती**—कर्णौ यस्य स तथा स चासौ **श्वा** च तथा **पूतिश्रुतिश्वेव**—दुष्टरोगाक्रांतकुर्कुर इव **रते**—रमणालीलाविशेषात्सौख्याद्वा **विदूरे**—विशेषेण दूरे भवति, च पुनः कुमनोहतोऽङ्गी **कुष्ठीव**—कुष्ठरोगाक्रांत इव **संपत्सु**—संपत्तिषु सतीषु **दृशां**—लोचनानां निंद्यत्वेनानर्हः—अयोग्यो भवति, यद्वा **संपदो**—रूपसौंदर्योदयस्ता एव **सुदृशः**—स्त्रियो, यद्वा **संपद** एव **सुदृश**स्तासामनर्ह इत्यर्थः, च पुनः कुमनोहतोऽङ्गी **श्वपाकवत्**—चांडाल

---

वसनाय पदं—स्थानं असंख्याः—संख्यातीताः किमिति प्रश्ने न संति ?, अपि तु संत्येव । यदा तदा काले मनस्विनोऽसंख्याताः स्युरेवेतिभावः, ततोऽहमेकस्त्वामपास्य शिवे गमिष्यामि तदा का तव हानिर्जातेति ॥ ११७ ॥ १० ॥

**रत्न०**—**पूतिश्रुतिश्वेवेति०**, व्याख्या—कुत्सितं मनः कुमनः, कुविकल्पैर्दुष्टमित्यर्थः कुमनसा हतः—संतापितोऽङ्गी—देही श्वपाकवत्—चंडालवत्सद्गतय एव मंदिराणि—गृहाणि तेषु प्रवेशं नार्हेत्—न योग्यो भवेत्, श्वपाकोऽपि सती शोभना गतिः—अवस्था येषां तानि सद्गतीनि सद्गतीनि च तानि मंदिराणि च तेषु, महेभ्यादिगृहेष्वित्यर्थः, प्रवेशं नार्हतीति, इव यथा पूतिश्रुतिः श्वा—कुथितकर्णः कुक्कुरः रते—रागाद्विदूरे स्यात्, प्रेमकारी न

इव सद्गतिमंदिरेषु—उत्तमगतिलक्षणगृहेषु प्रवेशं—मध्ये गमनं नार्हेत्—न योग्यो भवतीत्यर्थः, श्वपाकोऽपि सताम्—उत्तमानां गतयो— दुर्विकल्प-फलं
गमनानि येषु तानि च तानि मंदिराणि तेषु प्रवेशायोग्यो भवतीति ॥ ११८ ॥ ११ ॥

अथानिगृहीतमनसां पुंसां क्रियमाणा धर्माः स्वफलाय न प्रभवंतीति दृष्टांतपूर्वकं दर्शयन्नुपदिशति—

**तपोजपाद्याः स्वफलाय धर्मा, न दुर्विकल्पैर्हतचेतसः स्युः ।**
**तत् खाद्यपेयैः सुभृतेऽपि गेहे, क्षुधातृषाभ्यां म्रियते स्वदोषात् ॥ ११९ ॥ १२ ॥**

धनवि०—दुर्विकल्पैर्हतचेतसः—अशुभध्यानैर्हतचेतसः—उपहतचित्तस्य पुंसस्तपोजपाद्या आद्यपदात्स्वाध्यायप्रमुखा धर्माः स्वफ-
लाय—तत्त्वतो मोक्षफलाय न स्युः, तत्—तस्मात्कारणात्स दुर्विकल्पहतचित्तः पुमान् खाद्यपेयैः—अशनपानखादिमस्वादिमैर्भृते—संपूर्णेऽपि
गृहे स्वदोषात्—स्वसमुत्थक्लेशमांद्यप्रमादलक्षणदोषात् क्षुधातृषाभ्यां प्रसिद्धाभ्यां म्रियते—प्राणत्यागं करोतीत्यर्थः; अत्र तपोजपादीनां
दार्ष्टांतिकता खाद्यपेयानां दृष्टांतता मोक्षलक्षणफलाभावस्य दार्ष्टांतिकता क्षुधातृषाभ्यां मरणस्य दृष्टांतता स्वसमुद्भूतदुर्विकल्पस्य दार्ष्टां-
तिकता आत्मसमुत्थक्लेशमांद्यप्रमादादिदोषस्य दृष्टांतता इति दृष्टांतदार्ष्टांतिकयोजना ॥ ११९ ॥ १२ ॥

---

स्यादित्यर्थः, इव—यथा कुष्ठी—कुष्ठरोगवान् पुरुषः सपत्सु सतीष्वपि दृशां—चक्षुषामनर्हः स्यात्, दर्शनाय योग्यो न भवेद्, अथवा संपद एव सुदृशः—
स्त्रियस्तासामनर्हः स्यादित्यपि व्याख्याभेदः, रूपसौभाग्यादिसंपदां स नाश्रयः भवति ॥ ११८ ॥ ११ ॥

रत्न०—तपोजपाद्या इति०, व्याख्या—तपोजपाद्याः—तपोजपप्रभृतयो धर्माः स्वफलाय न स्युः—न भवेयुः, आद्यशब्देन ध्यानादिग्रहणं,
तेषां फलं परमार्थतो मोक्षस्तस्मै न भवेयुरित्यर्थः, कस्य ?—आत्मनः, कीदृशस्य ?—हतं—पीडितं चेतो यस्य स तस्य, कैः ?—दुर्विकल्पैः, अत्रार्थे दृष्टांत-

अथ निगृहीतमनसः पुंसः सुखसाध्या पुण्यफलप्राप्तिर्भवति, अनिगृहीतमनसः पुंसश्च पुण्यफलवंचना भवतीति दर्शयन्नुपदिशति—

**अकृच्छ्रसाध्यं मनसो वशीकृतात्, परं च पुण्यं न तु यस्य तद्वशम् ।**
**स वंचितः पुण्यचयैस्तदुद्भवैः, फलैश्च ही ही हतकः करोतु किम् ? ॥ १२० ॥ १३ ॥**

**धनवि०**—**वशीकृतात्**—निगृहीताच्छुभयोगव्यापृताद्वा **मनसः अकृच्छ्रसाध्यम्**—अकष्टसाध्यं सुखसाध्यमित्यर्थः **पुण्यं**—सुकृतं भवति, अशुभविषयांतरसंचारादिना व्याघाताभावात्, **च** पुनर्वशीकृतान्मनसः **परं**—प्रकृष्टं स्वर्गादिप्रापणप्रवणं **पुण्यं** भवतीत्यन्वयः, मनसः शुभयोगव्यापारणात्स्वर्गप्राप्तिप्रसिद्धेः श्रूयमाणत्वात् मनसो निरोधेऽपवर्गप्राप्तिप्रसिद्धेः श्रूयमाणत्वाच्च; **तु** पुनर्यस्य पुंसस्तत्—मनो **वशं**—निगृहीतं **नास्ति स** पुमान् **पुण्यचयैः**—सुकृतसमूहैः **च** पुनस्तदुद्भवैः—पुण्यचयोद्भवैः **फलैः** स्वर्गादिभिर्**वंचितो**—वंचनाविषयीकृतः सन् **हतकः**—हत एव हतको निंद्यो हीति खेदे **किं करोतु** ?—किं साधयतु, अपितु न किंचिदपि करोतीत्यर्थः ॥ १२० ॥ १३ ॥

---

फलमाह—तदिति दृष्टांतोपन्यासे निष्पुण्यको जीवः खाद्यपेयैः—भक्ष्यपानैः—घृतपूरदुग्धादिभिर्गेहे—गृहे सुष्ठु भृते सत्यपि स्वदोषात्—स्वस्य कार्पण्यमांद्यादिदोषतः क्षुधातृषाभ्यां म्रियते—मरणं प्राप्नोति तेन तपोजपादि धर्मेषु सत्स्वपि प्रेत्य—परभवे दुर्विकल्पहतचेता जीवो दुःखी स्यादित्यन्वयः ॥११९॥१२॥

**रत्न०**—**अकृच्छ्रसाध्यमिति०**, व्याख्या—चेति विशेषोक्तौ वशीकृतात् मनसः परम्—अन्यत्पुण्यं तपोजपादिकं कृच्छ्रेण—कष्टेन साध्यं २ न कृच्छ्रसाध्यमकृच्छ्रसाध्यं वर्त्तते, तु पुनर्यस्य तन्मनो वशम्—आयत्तं न वर्त्तते स प्राणी वंचितः, कैः ?—पुण्यचयैः—सुकृतसमूहैः, च पुनस्तेभ्यः—पुण्यचयेभ्यः उद्भवैः फलैरपि वंचितः, तेन हत एव हतकः—कर्मदंडितो हीहीति वीप्सायां खेदे किं करोतु ?, अपि तु न किमपि, सर्वथा निर्गतिक इत्यर्थः, किमिति प्रश्ने निंदार्थे वाऽव्ययं ॥ १२० ॥ १३ ॥

अथाधीतस्यापि पुंसो मनोनिग्रहाभावेऽनिष्टफलं दर्शयन्नुपदिशति—

अकारणं यस्य च दुर्विकल्पैर्हतं मनः शास्त्रविदोऽपि नित्यम् ।
घोरैरघैर्निश्चितनारकायुर्मृत्यौ प्रयाता नरके स नूनम् ॥ १२१ ॥ १४ ॥

धनवि०—यस्य शास्त्रविदः—सिद्धांतरहस्यज्ञस्यापि सुदुर्विकल्पैः—अतिशयेन दुश्चिंतनैर्नित्यं—सर्वकालं मनः—चित्तमकारणं—निष्कारणं निरर्थकं हृतं—पराभवविपयीकृतं, अत्राकारणता च सर्वस्यापि दुश्चिंतितस्य पदार्थस्य प्राप्तेरभावात्, स पुमान् घोरैः—भयंकरैरघैः—पापैः पापकर्मभिर्निश्चितनारकायुः—निकाचितनरकायुष्कर्मा मृत्यौ—मरणे सति नूनं—निश्चितं नरके—नरकगतौ याता—गंतेति ॥ १२१ ॥ १४ ॥

अथ मनोनिग्रहस्यैव परंपरयाऽपि मोक्षकारणतां दर्शयन्नुपदिशति—

योगस्य हेतुर्मनसः समाधिः, परं निदानं तपसश्च योगः ।
तपश्च मूलं शिवशर्मवल्ल्याः, मनःसमाधिं भर तत्कथंचित् ॥ १२२ ॥ १५ ॥

धनवि०—मनसः समाधिः—एकाग्रता रागद्वेषराहित्यमित्यर्थः योगस्य—ज्ञानदर्शनचारित्रात्मकस्याष्टांगस्य वा हेतुः—कारणं भवति,

---

रत्न०—अकारणमिति०, व्याख्या—शास्त्राणि—जिनागमादीनि वेत्तीति स तस्यापि यस्य मनः सुदुर्विकल्पैर्हतं—पीडितं, कथम् ?—अकारणं—कारणं विनापि, उपसर्गादिकारणमत्र गृह्यते, तेन तद्विनैवेत्यर्थः, कथं ?—नित्यं, स पुमान् नूनं—निश्चितं निकाचितं नारकायुर्येन स मृत्योः—मरणात् नरके प्रयाता—गंता:, यैः ?—अघैः—पापैः, किंभूतैः ?—घोरैः—भयानकैः ॥ १२१ ॥ १४ ॥

रत्न०—योगस्य हेतुरिति०, व्याख्या—मनसः समाधिः—ऐकाग्र्यं योगस्य—अष्टांगयोगस्य हेतुः—वीजं, वर्त्तते इति सर्वत्र ज्ञेयं, च पुनर्यो-

च पुनर्योगस्तपसो—द्वादशविधस्य तपःकर्मणः परं—प्रकृष्टं निदानं—साधनं भवति, योगसहितस्यैव तपसः साध्यसाधकत्वात्, तपश्च शिवशर्मवल्ल्या—मोक्षसुखलताया मूलम्—आदिकारणं भवति, तत्—तस्मात्कथंचित्—केनाप्युपायेन मनःसमाधिं—चेतःस्वास्थ्यं भर—धरेत्यर्थः ॥ १२२ ॥ १५ ॥

अथ मनोनिग्रहोपायं दर्शयन्नुपदिशति—

**स्वाध्याययोगैश्चरणक्रियासु, व्यापारणैर्द्वादशभावनाभिः ।**
**सुधीस्त्रियोगी सदसत्प्रवृत्तिफलोपयोगैश्च मनो निरुंध्यात् ॥ १२३ ॥ १६ ॥**

धनवि०—सुधीः—पंडितः **स्वाध्याययोगैः**—स्वाध्यायाश्च—वाचना १ प्रच्छना २ परावर्त्तना ३ नुप्रेक्षा ४ धर्मकथाभिधाः ५ पंचविधाः योगाश्च—सिद्धांताध्ययनायोद्देशसमुद्देशानुज्ञादिकापूर्वक्रियाविशेषाः संप्रदायगम्याः यद्वा पंचविधानां स्वाध्यायानां योगा—व्यापारास्तैर्मनो **निरुंध्यात्**—चेतोनिग्रहं कुर्यादित्यर्थः, एतावताऽशुभवाग्व्यापारनिरोधेन मनोनिरोधः कर्त्तव्य इति प्रतिपादितं, **च पुनश्चरणक्रियासु**—प्रतिलेखनप्रमार्जनकायोत्सर्गादिषु शुभानुष्ठानेषु **कायव्यापारणैः**—प्रवर्त्तनैः सुधीर्मनो निरुंध्यादित्येतेनाशुभकायव्यापारनिरोधेनापि

---

गस्तपसः परं—परमं निदानं—हेतुः, च पुनः शिवस्य—मोक्षस्य शर्म—सुखं सैव वल्ली तस्यास्तपो मूलं, तत्—तस्मात् हे शिवसुखसंतानार्थिन्! कथंचिद्येन तेनोपायेन मनसः समाधिं—स्वास्थ्यं भज—श्रय, परंपरया सर्वेषां मूलत्वादिति ॥ १२२ ॥ १५ ॥

**रत्न०**—अथ मनसः समाधेरुपायमाह—**स्वाध्याययोगैरिति०**, व्याख्या—सुधीः—सद्बुद्धिः पुमान् मनः प्रति निरुंध्यात्—निरोधं कुर्यात्, कैः ?—सु—सुष्ठु आ—समंतात् मर्यादया वा अध्यायः—अध्ययनं यस्य स स्वाध्यायो—जिनागमस्तस्य योगा—आचामाम्लादितपोविशेषास्तैः, योगोद्वहनै-

मनोरोधः कर्त्तव्य इति प्रतिपादितं, च पुनर्द्वादशभावनाभिः—द्वादश च—द्वादशसंख्याकास्ता भावनाश्चानित्यता १ ऽशरण २ भव ३ एकत्व ४ अन्यता ५ अशौच ६ आश्रव ७ संवर ८ निर्जरा ९ धर्म १० लोक ११ बोधि १२ लक्षणास्ताभिः सुधीर्मनो निरुंध्याद्, एतेन मनोयोगनिरोधेनापि मनोनिरोधः कर्त्तव्य इति प्रतिपादितं, च पुनस्त्रयाणां मनोवाक्काययोगानां समाहारस्त्रियोगी तस्याः सती च असती च सदसती ते च ते प्रवृत्ती च तयोः फलं—शुभाशुभं कर्म सुखदुःखं वा तस्योपयोगाः—सत्प्रवृत्त्या शुभकर्मोपार्जना भवति, असत्प्रवृत्त्या चाशुभकर्मोपार्जना भवतीति चिंतनरूपा तैर्मनोयोगं निरुंध्यादिति, यद्वा त्रयो योगा यस्य स त्रियोगी सुधीरित्यस्य विशेषणं, शेषं पूर्ववदिति ॥ १२३ ॥ १६ ॥

अथ मनोनिरोधद्वारमुपसंहरन्मनोनिरोधोपायभूतायाः पूर्वोक्ताया भावनाया माहात्म्यं प्रकाशयन्नाह—

**भावनापरिणामेषु, सिंहेष्विव मनोवने । सदा जाग्रत्सु दुर्ध्यानशूकरा न विशंत्यपि ॥ १२४ ॥ १७ ॥**

---

रित्यर्थः, योगोद्वहनपूर्वकं स्वाध्यायः कृतो महाफलदायको भवतीति मूलकारणमुक्तं; अथवा सुष्टु अध्यायः—अध्ययनं द्वादशांग्याद्यध्ययनं तस्य योगा—योजनानि तैः वारं वारं स्वाध्यायकरणैरित्यर्थः, च पुनर्व्यापारणैः—व्यापृतिभिः, अर्थात् मनस इत्यध्याहार्यं, कासु ?—चरणस्य—चारित्रस्य क्रियाः—प्रतिक्रमणकायोत्सर्गादिकास्तासु, तथा काभिः ?—अनित्यत्वचिंतनादिभिर्द्वादशभावनाभिः, पुनः कैः ?—त्रयाणां योगानां मनोवचनकायलक्षणानां समाहारस्त्रियोगी त्रियोग्याः सदसत्प्रवृत्ती २ तयोः फलानि तेषामुपयोगाः—चिंतनानि तैः, त्रियोग्याः शुभप्रवृत्तेः फलानि कानि अशुभप्रवृत्तेश्च फलानि कानीत्युपयोगदानैरित्यर्थः ॥ १२३ ॥ १६ ॥

मनःसमाधिः

**धनवि०—मनोवने**—मन एव—चित्तमेव वनं—काननं २ तस्मिन्मनोवने **भावनापरिणामेषु**—भावनाया अनंतरोक्तायाः परिणामेषु—अध्यवसायेषु **सदा**—सर्वकालं **जाग्रत्सु**—निद्रारहितेष्वर्थादनुभूयमानेषु **दुर्ध्यानशूकरा**—दुश्चिंतनरूपा वराहा **न** . **विशंत्यपि**—प्रविशंत्यपि नेति, अत्र **सिंहेष्विवेतीव**—यथा, मनःसदृशे वने भावनापरिणामसदृशेषु सिंहेषु—पंचाननेषु सदा जाग्रत्सु दुर्ध्यानसदृशाः शूकरा न प्रविशंतीत्युपमानयोजना, अत्रापिशब्दो मनोवने भावनापरिणामेषु जाग्रत्सु दुर्ध्यानशूकराणां प्रवेशोऽपि न भवति तदा तेषां तत्र स्थितिः कौतस्कुतीत्यर्थद्योतकः ॥ १२४ ॥ १७ ॥

इति श्रीतपा० श्रीधनविजयगणिविरचितायामध्यात्मकल्पद्रुमटीकायां मनोनिरोधनाम्नी नवमी पदपद्धतिः ॥ ९ ॥

---

**रत्न०**—सर्वेष्वेतेषु भावनानामाधिक्यं सूचयन्नाह—**भावनापरिणामेष्विति०**, व्याख्या—मन एव वनं २ तस्मिन् भावनापरिणामेषु सिंहेष्विव सिंहसदृशेष्वित्यर्थः सदा—निरंतरं जाग्रत्सु—सावधानेषु सत्सु दुर्ध्यानान्येव शूकरा विशंत्यपि न, प्रवेशमपि न कुर्वंति, स्थितिविनाशादीनां वार्त्तैव क्वेति ॥ १२४ ॥ १७ ॥ इति नवमोऽधिकारः संपूर्णः ॥



श्रीशांतिचंद्रवरवाचकदुग्धसिंधुलब्धप्रतिष्ठवरवाचकरत्नचंद्रः। अध्यात्मकल्पफलदस्य चकार वृत्तिं; तत्रांक ९ मान इति पूर्तिमितोऽधिकारः ॥९॥

## १० वैराग्योपदेशाधिकारः ।

अथानंतरोक्तो मनोनिरोधो वैराग्याधीनो भवतीत्यवसरायातं सामान्यतो वैराग्योपदेशद्वारमुपदर्शयन्नाह—

### अथ सामान्यतो वैराग्यधर्मोपदेशः ।

अथ सामान्यतो वैराग्यधर्मोपदेश इति, सुगमं। तत्रापि प्रायः सांप्रतीनजनानां दुःखगर्भवैराग्यं भवतीति सकलदुःखमुख्यं मरणभयं दर्शयन्नुपदिशति—

किं जीव! माद्यसि हसस्ययमीहसेऽर्थान्, कामांश्च खेलसि तथा कुतुकैरशंकः?।
चिक्षिप्सु घोरनरकावटकोटरे त्वामभ्यापतल्लघु विभावय मृत्युरक्षः ॥ १२५ ॥ १ ॥

धनवि०—हे जीव!–हे प्राणिन् अयं मानसप्रत्यक्षसिद्धस्त्वं किं माद्यसि?–मदं गच्छसीति, च पुनः किं हससि?–किं हास्यं कुरुषे, च पुनः किमर्थान्–धनकनकादीनीहसे?–वांछसि, च पुनः कामान्–कांतालिंगनादीन् शब्दादीन् वा किमीहसे?–वांछसि, च पुनर-

---

रत्न०—अथ सामान्यतो वैराग्यशुद्धिधर्मोपदेशाख्यो दशमोऽधिकारो विवरीतुं प्रारभ्यते। तत्रादौ जीवं प्रति मृत्योर्भयं दर्शयति–किं जीव! माद्यसीति०, व्याख्या—हे जीव! त्वं किं माद्यसि?–जात्याद्यष्टमदमत्तो भवसि, अपि तु मा माद्य, किमिति प्रश्नार्थकमव्ययं काकूक्तिसूचकं सर्वत्र योज्यं, तथा किं हससि, तथाऽयं त्वं किमर्थान्–हिरण्यादिद्रव्याणीहसे?–वांछसि, च पुनरर्थे सर्वत्र प्रथमं वाक्यं विना योजनीयः, त्वं किं कामान् खेलसि? कामक्रीडां करोषीत्यर्थः, तथा त्वं कुतुकैः–कुतूहलैरशंको–गतशंकः खेलसि, तथा कुतुकैरशङ्कः किं कामान् खेलसीत्येकमेव वाक्यं, परं त्वं मृत्युमेव

शंकः सन्—निर्भयः सन् कुतुकैः—कुतूहलजनकैर्द्यूतादिभिस्तथा—तेन प्रकारेण त्वं खेलसि—रमसे, यथा—येन प्रकारेण घोरनरकावट-कोटरे—भयंकरनरकगतिगर्त्तैकदेशशुषिरप्रदेशे चिक्षिप्सु—क्षेप्तुमिच्छु त्वां—भवंतं प्रति लघु—शीघ्रमभ्यापतद्—अभिमुखमागच्छत् मृत्यु-रक्षो—मरणलक्षणंराक्षसं विभावय—विचिंतयेति, अत्र रक्षःशब्दो नपुंसकलिंगे राक्षसवाचीति ॥ १२५ ॥ १ ॥

अथानंतरोक्तमृत्युभयविभावनया किं कर्त्तव्यमित्याशंकायां कर्त्तव्यमुपदिशति—

**आलंबनं तव लवादिकुठारघातारिछंदंति जीविततरुं न हि यावदात्मन्! ।**
**तावद्यतस्व परिणामहिताय तस्मिंश्छिन्ने हि कः? क च? कथं भवितास्यतंत्रः? ॥ १२६ ॥ २ ॥**

हे आत्मन्! तवालंबनम्—आधारं लवादिकुठारघाता "अष्टादश निमेषाः स्युः, काष्टा काष्ठाद्वयं लव" इति वचनाल्लवः काल-विशेषः स आदौ येषां ते लवादयस्त एव कुठारास्तेषां घाताः—प्रहारास्ते—तव जीविततरुम्—आयुर्लक्षणं वृक्षं यावद्—यावत्कालं न

---

रक्षो—राक्षसं लघु—शीघ्रमभ्यापतत्—संमुखमागच्छद्विभावय—विचारय, किं चिकीर्षु?—चिक्षिप्सु—प्रक्षेप्तुमिच्छु, कं?—त्वां प्रति, कस्मिन्?—घोरो—भीषणो नरक एवावटो—गर्भस्तस्य कोटरं—मध्यभागस्तस्मिन्, तेन मदादीनि मा कार्षीरिति, रक्षःशब्दो नपुंसकस्तेन मृत्युः इति जातं ॥ १२५ ॥ १ ॥

रत्न०—अथायुषि सत्येव हितप्रवृत्तावुपदिशन्नाह—**आलंबनं तवेति०**, व्याख्या—हे आत्मन्! अष्टादशनिमेषप्रमाणः कालः काष्ठा, काष्ठाद्वयं लवः—कालविशेषो भवति, लव आदौ येषां ते लवादयः, आदिशब्दात्कलालेशघटिकादीनां ग्रहणं, लवादय एव कुठाराणां घाताः—प्रहारा यावत्तव जीविततरुं—आयुर्वृक्षं न छिंदंति हि निश्चितं, किंलक्षणं?—आलंबनम्—आधारं संसारस्थितये इत्यर्थः, तावत्परिणामहिताय—परिणामे हितं कर्त्तुं

हितासि:

हि छिंदंति—छिदिक्रियाविषयं न कुर्वंति, अत्रादिपदात्प्रहरदिनाहोरात्रादिपरिग्रहः, **तावत्**—जीविततरुच्छेदात् पूर्वकाले **परिणामहिताय**—आयतिहितार्थं तपःसंयमादौ **यतस्व**—यत्नं कुरुष्वेति, अत्र तपःसंयमादाविति गम्यं; **हि**—यतः कारणा**त्तस्मिन्**—जीविततरौ **छिन्ने**—छिदिक्रियाविषयीकृते **अतंत्रः**—अस्वायत्तः परवशः सन् **कः**?—किंनामा नारकादिः पुनः **क्व**—कुत्र नरकादिगतौ **च** पुनः **कथं**—केन प्रकारेण निराधारो **भविताऽसि**?—भविष्यसीति ॥ १२६ ॥ २ ॥

अनंतरमुक्तं 'परिणामहिताय यतस्वे'ति, स च यत्नो दैवायत्त इति कस्तत्र परिणामहिते यतते इत्याशंकायामुपदिशति—

**त्वमेव मोग्धा मनिता त्वमात्मन्नेष्टाऽप्यनेष्टा सुखदुःखयोस्त्वम् ।**
**दाता च भोक्ता च तयोस्त्वमेव, तच्चेष्टसे किं न यथाहितासि ? ॥ १२७ ॥ ३ ॥**

धनवि०—हे **आत्मन्**!—**त्वमेव मोग्धा**—मुह्यतीति मोग्धा, अज्ञाताऽसीत्यर्थः, **च** पुनस्त्वमेव **मनिता**—मन्यते जानातीति मनिता,

---

यतस्व—उद्यमं कुरु, अस्मिन् जीविततरौ छिन्ने सति अस्य जीविततरोः पल्लवनायेति गम्यं क्व कदा कथं यत्नो भविता ?, क इति—किंनामा केतिकस्मिन् काले भरतादिक्षेत्रे वा कथमिति—केन प्रकारेण कियद्वर्णानुपूर्वीक इति, अपि तु न भवितेत्यर्थः, जीविततरुर्लवादिकुठारघातैश्छिन्नः संछिन्न एवेति ॥ १२६ ॥ २ ॥

रत्न०—अथ सर्वमात्मायत्तं प्ररूप्यात्मानं हितायै प्रेरयन्नाह—**त्वमेव मोग्धेति०**, व्याख्या—हे आत्मन्! त्वमेव मोग्धा—मौढ्यं प्राप्ता, तथा

ज्ञाताऽसीत्यर्थः, च पुनः **सुखदुःखयोः** प्रतीतयोरेष्टा—वांछाकर्त्ता, च पुनरनेष्टाऽपि—द्वेष्टाऽपि त्वमेवासि, एतावता सुखस्यैष्टा दुःखस्य द्वेष्टाऽपि त्वमेव वर्तसे इत्यर्थः, अत्रैष्टेति इषदिच्छायामित्यस्य तृच्प्रत्यये साधु, च पुनस्तयोः सुखदुःखयोर्दाता—दायकः च पुनर्भोक्ता—अनुभविता त्वमेवासि, यदुक्तम्—अप्पा नई वेअरणी, अप्पा मे कूडसामली । अप्पा कामदुघा धेणू, अप्पा मे नंदणं वणं ॥ १ ॥ अप्पा कत्ता विकत्ता येति, **तत्**—तस्माद्यथाहिताप्ति—हिताप्तिमनतिक्रम्य यथासुखं **किं न चेष्टसे ?**—किं न यतसे इत्यन्वयः; अत्रायं भावः—सर्वमात्मायत्तं वर्त्तते, नतु दैवायत्तं, तथा च किं न यतसे ? ॥ १२७ ॥ ३ ॥

अथान्यजनरंजनोद्यतमात्मानमुपदिशति—

**कस्ते निरंजन ! चिरं जनरंजनेन ?, धीमन् ! गुणोऽस्ति ? परमार्थदृशेति पश्य ।**
**तं रंजयाशु विशदैश्चरितैर्भवाब्धौ, यस्त्वां पतंतमबलं परिपातुमिष्टे ॥ १२८ ॥ ४ ॥**

**धनवि०**—हे **निरंजन !**—हे निर्लेप ! सम्यक्त्ववत्त्वेन विरतिमत्त्वेन च मिथ्यात्वाविरतिरूपांजनरहितत्वादिति संबोधनं, भाविसिद्धत्वा-

---

मनिता—ज्ञाता त्वमेव, तथा एष्टा—वांछिता अनेष्टा—अवांछिताऽपि त्वमेव, कयोः ?—सुखदुःखयोः, सुखस्यैष्टा दुःखस्यानेष्टेत्यर्थः, तयोः सुखदुःखयोर्दाता-दायकः जीवं प्रति पोषणादिना सुखस्य जीवं प्रति हननादिना दुःखस्येत्यर्थः, तयोश्च सुखदुःखयोर्भोक्ता त्वमेव, तत्कारणाद्यथाहिताप्ति—हिताप्तिमनतिक्रम्य यथाहिताप्ति किं न चेष्टसे ?—उद्यमं किं न कुरुषे, यथा हिताप्तिः स्यात्तदा हिताप्तिरिति पाठः ॥ १२७ ॥ ३ ॥

**रत्न०**—अथापररंजनाय प्रवृत्तमात्मानमुपदिशति—**कस्ते निरंजनेति०**, व्याख्या—हे धीमन् !—हे बुद्धिमन् निर्गतमंजनम्—अक्तिर्यालेपो यस्य

---

१ आत्मा नदी वैतरणी आत्मा मे कूटशाल्मली । आत्मा कामदुहा धेनुः, आत्मा मे नन्दनं वनम् ॥ १ ॥ आत्मा कर्त्ता विकर्त्ता च०

भवाब्धि-पातरक्षा

यस्यायां सफलकर्मरूपांजनरहितत्वाद्धान्यवस्थयेति वा संबोधनं, हे धीमन्! धीः–हिताहितपरिज्ञानं साऽस्यास्तीति तथेति संबोधनं, अत्र कोमलवचनसंबोधनपदद्वयेनामंत्रणं धर्मोपदेशश्रवणं प्रति श्रोतुराभिमुख्यापादनार्थं, कोमलवचनेनामंत्रितो हि श्रोता प्रसन्नचित्तः सम्यक् श्रोतुं प्रवर्त्तते, चिरं–चिरकालमाबाल्यादावार्द्धक्यकालं यावज्जनरंजनेन–मलिनांबरधरणमधुरभाषणमंत्रतंत्रयंत्रौपधादिकरणैर्जनमनोवशीकरणेन ते–तवात्मनः कः?–किम्प्रकारोऽणुर्वा महान् वा गुणः–वास्त्विकोपकाररूपोऽस्ति–विद्यते इति–अमुना प्रकारेणानंतरमत्रैवोक्तं त्वं परमार्थदृशा–तत्त्वदृष्ट्या पश्य–विलोकय विचारयेत्यर्थः; अत्र विलोक्येतिगम्यं, तेनेति विलोक्य तं धर्मलक्षणं पदार्थमाशु–शीघ्रं विशदैः–निष्कलंकैश्चरितैः–समाचरणै रंजय–स्ववशीकुर्वित्यर्थः, यो धर्मो भवाब्धौ–संसारसागरे पतंतं–निमज्जंतमबलं–दानादिपुण्यशंबलरहितं त्वां परिपातुं–त्रातुमीष्टे–समर्थो भवति, यदुक्तं—"दुर्गतौ प्रपतत्प्राणिधारणाद्धर्म उच्यते" इति, अत्र ईष्टे इति ईशिङ् ऐश्वर्ये इत्यस्य प्रयोग इति ॥ १२८ ॥ ४ ॥

स निरंजनस्तस्य संबोधने हे निरंजन, आत्मनो रूपाभावान्निरंजनत्वमिति, चिरं–चिरकालं जनानां–लोकानां रंजनेन–रागोत्पादनेन ते–तव को गुणोऽस्ति?, अपि तु न कोऽपि गुणोऽस्ति इति त्वं परमार्थदृशा–परमार्थो–मोक्षस्तस्मिन् दृग्–ज्ञानं तया तत्त्वज्ञानेनेत्यर्थः पश्य–विलोकय, विलोक्य च परंजन विमुच्य तं रजय–रागीकुरु, कैः?–विशदैः–निर्मलैर्दोषरहितैरित्यर्थः चरितैः–आचरितैः, कथं?–आशु–शीघ्रं, तं कमित्याह–यस्त्वां भवाब्धौ–भवसमुद्रे पतंतं परिपातुं–रक्षितुमीष्टे–ईशो भवति, समर्थो भवतीत्यर्थः, त्वां किं०?–अबलं–बलरहितं, निरर्थकेन परंजनेन किमिति?, येनाऽलं जगदीश्वरमयवा तद्भापितधर्मं रंजयेति भावः ॥ १२८ ॥ ४ ॥

१ योगशास्त्र. प्र. २. श्लो ११

ननु जनरंजनेन पांडित्यख्यात्यादिलक्षणो गुणः स्यादेवेति कथमनंतरमुक्तं "जनरंजनेन को गुणः स्यादि"त्याशंकायामुपदिशति—

**विद्वानहं सकललब्धिरहं नृपोऽहं, दाताऽहमद्भुतगुणोऽहमहं गरीयान् ।**
**इत्याद्यहंकृतिवशात् परितोषमेषि, नो वेत्सि किं परभवे लघुतां भवित्रीम् ? ॥ १२९ ॥**

धनवि०—अहं–मल्लक्षणो जनो वेचीति **विद्वान्**–पंडितोऽस्मि, च पुनरहं **सकललब्धिरस्मि** सकलाः–समस्ता लब्धयः–पण्डितपदादिप्राप्तिरूपा धनधान्यवस्त्रपात्रघृतप्राप्तिरूपा वा आमर्शौषध्यादिका वा यस्य स तथेति, च पुनरहं **नृपो**–नराधीशोऽस्मि, च पुनरहं **दाता**–दानशौंडोऽस्मि, च पुनरहम**द्भुतगुणो**ऽस्मि, अद्भुता–आश्चर्यकारिणो गुणा–ज्ञानविज्ञानादयो यस्य स तथा, च पुनरहं **गरीयान्**–अतिशयेन गुरुः–महानस्मि, **इत्याद्यहंकृतिवशाद्**–इति–अनंतरोक्ताः प्रकारास्ते आदौ–प्रथमं यत्र सा चासावहंकृतिश्च–अहंकारस्तद्वशात्–तद्वशत्वात्, तदायत्तत्वादित्यर्थो भावप्रधाननिर्देशे, **परितोषं**–संतोषमेषि–प्राप्नोपीत्यर्थः; **परं परभवे**–अग्रेतनभवे **भवित्रीं**–भविष्यंतीं **लघुतां**–लाघवं **किं न वेत्सि ?**–किं न जानासि, अत एवोक्तं योगशास्त्रे–"जातिलाभकुलैश्वर्यबलरूपतपःश्रुतैः । कुर्वन् मदं पुनस्तानि, हीनानि लभते जनः ॥ १ ॥ इति ॥ १२९ ॥ ५ ॥

---

रत्न०—अथाहंकृतिनिराकृतिविपय उपदिशति–**विद्वानहमिति**० व्याख्या—हे आत्मन्नहं विद्वानस्मि, अस्मीति सर्वत्र योज्यं, सर्वत्र चकारोनुक्तोऽपि समुच्चयार्थो गृह्यते, तेन च पुनः सकला–अष्टाविंशतिभेदा लब्धयो यस्य सोऽहं, तथा नृपोऽहं–राजा अहं, दाता–दानी, तथा अद्भुता गुणा-दुष्कालोद्धरणादिका औदार्यधैर्यादिका वा यस्य सोऽहं, तथा अहमतिशयेन गुरुर्गरीयान्–अतिमहानित्यर्थः, हे आत्मन् ! त्वमित्याद्यहंकृतिवशाद्–अहंका-

भवाब्धि-पातरक्षा

'परभवे लघुता भवित्री'त्यनंतरमुक्तं, सा च परभवे लघुता परभवे एव धर्मसाधनादिना विनिवारिता भविष्यतीति किं सांप्रतं संभाविन्नभयगर्मोपदेशेनेत्याशंकायामुपदिशति—

**वेत्सि स्वरूपफलसाधनबाधनानि, धर्मस्य तं प्रभवसि स्ववशश्च कर्तुम् ।**
**तस्मिन् यतस्व मतिमन्नधुनेत्यमुत्र, किंचित्त्वया हि न हि सेत्स्यति भोत्स्यते वा ॥ १३० ॥**

धनवि०—अधुना—वर्त्तमानसमये **धर्मस्य**—यतिधर्मस्य श्राद्धधर्मस्य वा **स्वरूपं** च—धर्मस्य क्षांत्यादिदशप्रकारं फलं च—धर्मस्य स्वर्गापवर्गादि साधनं च—धर्मस्य "चत्तारि परमंगाणीत्यादि'[2] प्रतिपादितरूपं **बाधनं** च—धर्मस्य प्रमादरूपं ततो द्वंद्वस्तानि त्वं **वेत्सि**—जानासि, तथा च पुनस्त्वमधुना **स्ववशः**—स्वाधीनः सन् **तं** धर्मं **कर्तुं प्रभवसि**—समर्थो भवसि, हे **मतिमन्** !—पंडित इति हेतोस्तस्मिन्—धर्मेऽधुना—वर्त्तमानसमये त्वं **यतस्व**—यत्नं कुर्वित्यर्थः; हि—यतो अमुत्र—भवांतरे नरकादिलक्षणे **त्वया** करणभूतेन **न हि किंचित्परलोक-**

स्ववशतः परितोषं—संतोषमेपि—प्राप्नोपि, परमेतन्मदवशात्परस्मिन् भवे भवित्री—भाविनीं लघुतां किं न वेत्सि?—किं न जानासीति काकूक्त्या जीवं प्रति प्रश्नः, यद्विपयकाहंकृतिस्तद्विपया परत्र लघुता भाविनीति जानाहीत्यर्थः ॥ १२९ ॥ ५ ॥

रत्न०—अथात्मानमिह भवे धर्मे प्रेरयन्नाह—**वेत्सि स्वरूपेति०** व्याख्या—हे आत्मन्! धर्मस्य तत्त्वतो जिनधर्मस्येत्यर्थः, अपरेषां धर्माभासत्वात्, स्वरूपं—लक्षणं फलं—स्वर्गापवर्गावात्यादि साधनं—कारणं मनुजजन्मधर्मश्रवणश्रद्धानवीर्यस्फोरणपंचेंद्रियपटुत्वादि तथा बाधनं—अनार्यदेशोत्पत्ति-

१ यो. शा. प्र. ४ श्लो. १३ २ चत्तारि परमंगाणि, दुल्लहाणीह जंतुणो । माणुसत्तं सुई सद्धा, संजमम्मि य वीरियं ॥ १ ॥ श्रीउत्तराध्ययने

साधनादिकं सेत्स्यति–सिद्धिं यास्यति, वा–अथवा अमुत्र त्वया कर्तृभूतेन किंचिद्धर्मस्य स्वरूपफलादिवस्तु न हि भोत्स्यते–ज्ञास्यते इति, तस्मादत्रैव भवे यत्नं कुरुष्वेत्यर्थः ॥ १३० ॥ ६ ॥

अथानंतरोपदिष्टमेवार्थं विशेषत उपदिशति—

**धर्मस्यावसरोऽस्ति पुद्गलपरावर्त्तैरनंतैस्तवायातः संप्रति जीव ! हे प्रसहतो दुःखान्यनंतान्ययम् ।**
**स्वल्पाहः पुनरेष दुर्लभतमश्चास्मिन् यतस्वाहतो, धर्मं कर्तुमिमं विना हि न हि ते दुःखक्षयः कर्हिचित् ॥१३१॥७॥**

धनवि०—हे जीव !–हे आत्मन् अनंतानि–अतीतकालापेक्षयाऽन्तररहितानि दुःखानि प्रसिद्धानि प्रसहतः–प्रकर्षेण सहमानस्य तव संप्रति–वर्त्तमानभवेऽनंतैः–अतीतकालापेक्षयाऽन्तररहितैः पुद्गलपरावर्त्तैः–जैनागमप्रसिद्धैः सुबहुकालविशेषैर्धर्मस्य–जैनधर्मस्यायं–प्रत्यक्षोऽनुभूयमानोऽवसरः–प्रस्तावः स्वल्पाहः–स्तोकदिन आयातः–समागतोऽस्ति, च पुनरेष धर्मावसरः पुनर्द्वितीयवारं दुर्लभतमो–दश-

---

पंचेद्रियापटुत्वकुकुलोत्पत्त्यादि द्वंद्वसमासे तानि प्रति त्वं वेत्सि–जानासि चतुरत्वादिति, च पुनस्त्वं तं धर्मं कर्तुं प्रभवसि–प्रभुर्भवसि–समर्थो भवसि । त्वं किल० ?–स्वस्य वशः स्ववशः स्वायत्त इत्यर्थः हे मतिमन् तस्मिन् ! धर्मे यतस्व–यत्नं कुरु, कथम् ?–अधुना–इह भवे, हि यस्मात् कारणादमुत्र–परभवे त्वया हि निश्चितं किंचित्–किमपि न हि सेत्स्यति–न निष्पत्स्यते, वा पुनर्न भोत्स्यते–न ज्ञास्यते इति, पारतंत्र्याद्वीर्याभावाद् ज्ञानाभावाच्च किमपि कर्तुं न शक्यते इति ॥ १३० ॥ ६ ॥

रत्न०—अथात्मानं प्रति धर्मस्यावसरं ज्ञापयन्नाह–**धर्मस्यावसरोऽस्तीति०** व्याख्या—हे जीव ! तवायं–संप्रति अधुना धर्मस्यावसरः आया-

गिर्दृष्टांतैरतिशयेन दुष्प्रापोऽस्ति, इत्यस्मिन्नवसरेऽर्हतो—जिनस्य धर्मं कर्तुं यतस्व—उद्यमं कुरुष्व; हि यतः कारणादिमं जिनधर्मं विना ते—तव दुःखक्षयः—सकलसांसारिकदुःखविनाशः कर्हिचित्—कदाचिद् न ह्यस्ति; अत्रानंतस्वरूपं च चतुर्थपडशीतिकनामककर्मग्रन्थादिभ्योऽवसेयं, ग्रन्थगौरवभयाच्च नोक्तमिति; पुद्गलपरावर्त्तस्त्वनंतोत्सर्प्पिण्यवसप्पिणीप्रमाणः कालः, तत्स्वरूपसूचककर्मग्रन्थशतकोक्तं गाथात्रयं चेदं, "दव्वे १ खित्ते २ काले ३ भावे ४ चउह दुह वायरो सुहुमो। होइ अणंतुस्सप्पिणिपरिमाणो पुग्गलपरट्टो ॥१॥ उरलाइसत्तगेणं एगजिओ मुयइ फुसिय सव्वअणू। जत्तियकालि स थूलो दव्वो सुहुमो सगन्नयरा ॥२॥ लोगपएसोसप्पणिसमया अणुभागबंधट्टाणा य। जहतहकमसरणेणं पुट्ठा खित्ताइ थूलियरा ॥३॥[1] एतस्य गाथात्रयस्यायं समुदायार्थः संक्षेपतो—यथा द्रव्य १ क्षेत्र २ काल ३—भाव ४ भेदैश्चतुर्द्धा पुद्गलपरावर्त्तः, औदारिक १ वैक्रिय २ तैजस ३ भाषा ४ श्वासोच्छ्वास ५ मनः ६ कार्मण ७ रूपतया सर्वपुद्गलान् परिणमय्य परिणमय्यैको जीवो यदा मुंचति तदा बादरद्रव्यपुद्गलपरावर्त्तः १, एतेषां सप्तानां मध्यादेकेन केनचिद्रूपेण सर्वान् पुद्गलान् परिणमय्य यदा मुंचति तदा सूक्ष्मद्रव्यपुद्गलपरावर्त्तः २, सर्वलोकाकाशप्रदेशानेक एव जीवो मरणैर्यथा तथा स्पृशति तदा बादरक्षेत्रपुद्गलपरावर्त्तः ३, सर्वलोकाकाशप्रदेशाननुक्रमेण मरणैः स्पृशति तदा सूक्ष्मक्षेत्रपुद्गलपरावर्त्तः ४; उत्सर्पिणीकालस्य सर्वान् समयान् यथा

पुद्गलपरावर्तः

---

तोऽस्ति, पैः?—द्रव्यक्षेत्रकालभावभेदैश्चतुर्भिरपि पुद्गलपरावर्त्तैः—अनंतोत्सर्पिण्यवसर्पिण्यात्मककालविशेषैः, तव किं कुर्वतः सतः?—प्रसहतः सतः—प्रकर्षेण सहमानस्य सतः, यानि प्रति?—दुःखानि प्रति, किल०?—अनंतानि, पुनरितिविशेषेऽयमवसरः स्वल्पान्यहानि—दिनानि यस्य स स्वल्पाहः, च

---

1 पंचमकर्मग्रन्थ—गा. ८६-८८

तथा मरणैः स्पृशति तदा बादरकालपुद्गलपरावर्त्तः ५, अनुक्रमेण यदा स्पृशति तदा सूक्ष्मकालपुद्गलपरावर्त्तः ६, सर्वाण्यसंख्याताध्यवसायस्थानानि क्रमेणोत्क्रमेण चैको जीवो मरणेन स्पृशति तदा बादरभावपुद्गलपरावर्त्तः ७, सूक्ष्मो भावपुद्गलपरावर्त्तस्तु कश्चिज्जंतुः सर्वजघन्ये कषायोदयरूपेऽध्यवसायस्थाने मृतस्ततो यदि स एवानंतेऽपि काले गते सति प्रथमादनंतरे द्वितीयेऽध्यवसायस्थाने वर्त्तमानो म्रियते तदा तन्मरणं गण्यते, न शेषाण्यनुक्रमभावीन्यपि मरणानि, एवं क्रमेण सर्वाण्यप्यनुभागबंधाध्यवसायस्थानानि यावता मरणेन स्पृष्टानि स्युस्तावान्काल इति ८; अत्र क्षेत्रसूक्ष्मपुद्गलपरावर्त्तेनाधिकारः, शेषाः सर्वे प्रकाराः प्ररूपणामात्रमिति ॥ १३१ ॥ ७ ॥

अथानंतरमुक्तं 'धर्मं विना दुःखक्षयो न भवती'ति, तेन तदुपरि निदर्शनत्रयदर्शनद्वारेण तमेवार्थं समर्थयन्नुपदिशति—

**गुणस्तुतीर्वांछसि निर्गुणोऽपि, सुखप्रतिष्ठादि विनापि पुण्यम् ।**
**अष्टांगयोगं च विनाऽपि सिद्धीर्वातूलता काऽपि नवा तवात्मन् ! ॥ १३२ ॥ ८ ॥**

धनवि०—हे आत्मन् !—त्वं निर्गुणोऽपि—तथाविधज्ञानादिगुणरहितोऽपि **गुणस्तुतीः**—स्वगुणप्रशंसा **वांछसि**—इच्छसि, च पुनः

---

पुनरतिशयेन दुर्लभो—दुर्लभतमो वर्त्तते, धर्मस्यावसरः स्वल्पदिनो दुर्लभतमश्च भवतीति, ततश्चास्मिन्नवसरे आर्हतं धर्मं कर्त्तुं यतस्व—उद्यमं कुरु, हि यतः कारणात्त्वे—तवेमं—आर्हतं धर्मं विना हे आत्मन् ! कर्हिचित्—कदाचिद्दुःखानामेकविंशतिप्रमेदानां क्षय—आत्यंतिकी निवृत्तिर्नास्तीति ॥१३१॥७॥

रत्न०—अथात्मनः अयुक्तवांछकत्वेन वातूलतां निरूपयति—**गुणस्तुतीरिति**० व्याख्या—हे आत्मन् ! त्वं निर्गता लौकिकलोकोत्तरभेद-

पुण्यं विना—सुकृतवर्गंतरेण सुखप्रतिष्ठादि वांछसीति, अत्र सुखं च सुधनधान्यपुत्रकलत्रादिप्राप्तिजनितं प्रतिष्ठा च श्रेष्ठित्वप्रधानत्वनर-नायकत्वादिरूपा ते आदौ—प्रथमे यत्र तत्तथा, आदिपदात् स्वर्गापवर्गादिपरिग्रहः; च पुनरष्टांगयोगं विनाऽपि सिद्धीर्वांछसीत्यन्वयः; अत्र योगस्याष्टावङ्गानि यम १ नियम २ करण ३ प्राणायाम ४ प्रत्याहार ५ धारणा ६ ध्यान ७ समाधि ८ नामानि,—'अहिंसा १ सूनृता २ स्तेय ३ ब्रह्म ४ किंचनता ५ यमाः, इत्यादिनाममालापाठतः स्पष्टार्थानि, सिद्धयश्चाष्टधा "लघिमा १ वशिते २ शित्वं ३, प्राकाम्यं ४ महिमा ५ ऽणिमा ६ । यत्र कामावसायित्वं ७, प्राप्तिरैश्वर्यमष्टधा ॥ १ ॥ इत्यादिना प्रतिपादिताः; तेन कारणेन तव वातूलता—वातविकृतिजन्या संस्कारहितता प्रथिलतेत्यर्थः कापि अवक्तव्या नवा—अपूर्वा आश्चर्यकारिणी वर्त्तते; अत्रायं भावो—यथा गुणान् विना स्तुतिर्न भवति यथा पुण्यं विना सुखप्रतिष्ठादि न भवति यथाऽष्टांगयोगं विना सिद्धयो न भवंति तथा धर्मं विना दुःखक्षयो न भवतीति दृष्टांतदार्ष्टांतिकयोजनेति ॥ १३२ ॥ ८ ॥

---

भिन्ना गुणा—औदार्यधैर्यशौर्यादयो ज्ञानदर्शनचारित्रादयश्च यस्मादेवंविधोऽपि सन् गुणानां स्तुतीः—स्तवान् प्रति वांछसि, तथा पुण्यं विनापि सुखानि प्रतिष्ठा—गौरवं ता आदौ यस्य तत्सुखप्रतिष्ठादि प्रति वांछसि, आदिशब्देन लक्ष्म्यैश्वर्यादिग्रहणं, तथा यमनियमप्रभृत्यष्टांगयोगं विनापि सिद्धीः—अष्टकर्मक्षयलक्षणाः प्रति वाञ्छसि, बहुवचनमष्टकर्मक्षयापेक्षया, सिद्धिमिति पाठे तु मोक्षमिति, अथवा "लघिमा वशितेशित्वं, प्राकाम्यं महिमाऽणिमा । यत्र कामावसायित्वं, प्राप्तिरैश्वर्यमष्टधेति" ॥ १ ॥ अष्ट सिद्धीः प्रति वांछसीत्यपि ज्ञेयं, तर्हि हे आत्मन्! तवेयं वातूलता—वातरोगित्वं वाऽप्यदृष्टपूर्वा नवा—नवीनैवास्ति, कारणं विना कार्यस्पृहयालुत्वं वातकित्वमेवेति भावः ॥ १३२ ॥ ८ ॥

अथानंतरं 'पुण्यं विना सुखप्रतिष्ठादि न भवती'त्युक्तं, तेनार्थात् पुण्याभावे पराभवो भवतीति दर्शयन् पुण्यमेव करणीयमित्युपदिशति—

**पदे पदे जीव! पराभिभूतीः, पश्यन् किमीर्ष्यस्यधमः परेभ्यः?।**
**अपुण्यमात्मानमवैषि किन्न?, तनोषि किंवा नहि पुण्यमेव?॥ १३३ ॥ ९ ॥**

**धनवि०**—हे **जीव!**—हे प्राणिन् त्वमधमो—निष्पुण्यः सन् **पदे पदे**—स्थाने स्थाने **पराभिभूतीः**—परेभ्योऽभिभूतीः—पराभवान् **पश्यन्**—विलोकयन् **परेभ्यः**—आत्मव्यतिरिक्तेभ्यः **किं**—किमर्थमीर्ष्यसि?—क्रुध्यसीत्यर्थः; अथोत्तरार्द्धेनेर्ष्याया अकरण उपायं दर्शयति—**आत्मानमेव**—स्वमेवापुण्यं—निष्पुण्यं **किं नावैषि?**—न जानासि, निष्पुण्यत्वपराभवयोः साहचर्यात्, वाऽथवा **पुण्यमेव**—सुकृतमेव **किं न हि तनोषि?**—न कुरुषे, अत्रोत्तरार्द्धस्य एवकार उक्तिद्वये योज्यः ॥ १३३ ॥ ९ ॥

---

**रत्न०**—अथ जीवं प्रति परेभ्योऽभिभूतौ सत्यामीर्ष्यां मा कुर्विति प्रतिबोधयति—**पदे पदे जीवेति०** व्याख्या—हे जीव! त्वं पदे पदे—स्थाने स्थाने परेभ्यः समर्थविशेषणाद्विशेष्यं लभ्यते इतिन्यायाज्जनेभ्यः पराः—प्रकृष्टा अभिभूतीः—अभिभवान् पश्यन् त्वं किमीर्ष्यसि?—ईर्ष्यां करोपि, त्वं किं० ?—अधमो—नीचः, पुण्यरहितत्वादिति, तर्ह्यात्मानं—स्वं न विद्यते पुण्यं यस्य स तं किं नावैषि?, न जानासि, अपितु आत्मानमपुण्यमेवावैहि, वा पुनरात्मानमपुण्यमवेत्य हि निश्चितं पुण्यमेव किं न तनोषि?, एवकारोऽन्यव्यवच्छेदार्थः, अथवा परेभ्यः किमीर्ष्यसीति व्याख्येयं तदा परेभ्य इति चतुर्थीबहुवचनं ॥ १३३ ॥ ९ ॥

प्रमादहिंसा-
त्यागः

अथानंतरोपदेशे पुण्यकरणमुपदिष्टं, तेन पुण्यकरणप्रतिपक्षे पापकरणेऽनिष्टफलं दर्शयन्नुपदिशति—

**किमर्दयन्निर्दयमंगिनो लघून्, विचेष्टसे कर्मसु ही प्रमादतः ? ।**
**यदेकशोऽप्यन्यकृतार्दनः सहत्यनंतशोऽप्यंग्ययमर्दनं भवे ॥ १३४ ॥ १० ॥**

धनवि०—हीति खेदे त्वं प्रमादतो—मद्यादिपंचविधादज्ञानाद्यष्टविधाद्वा लघून्—आत्मनोऽणून् बादरपृथ्वीकायिकादीनङ्गिनो—देहिनो निर्दयं—निष्कृपं यथा स्यात्तथाऽसमंजसवृत्त्येत्यर्थः अर्दयन्—पीडयन् कर्मसु—कृष्यादिव्यापारेषु किमिति वितर्कप्रश्ने विचेष्टसे ?—प्रवर्त्तसे, यद्—यस्मादेकशः—एकवारमन्यकृतार्दनो—विनिर्मितपरपीडः अयं परपीडाकारी अङ्गी—प्राणी भवे—संसारेऽनंतशः—अनंतवारमर्दनं—पीडनं सहति—तितिक्षते, यदुक्तं—वहमारणअब्भक्खाणदाणपरधणविलोवणाईणं । सव्वजहण्णो उदओ दसगुणिओ इक्कसि कयाणं ॥ १ ॥ तिव्वयरे उ पओसे सयगुणिओ सयसहस्सकोडिगुणो । कोडाकोडिगुणो वा हुज्ज विवागो बहुतरो वा[1] ॥ २ ॥ १३४ ॥ १० ॥

---

रत्न०—अथात्मानं परपीडनप्रसक्तमवेत्य प्रतिबोधायाह—किमर्दयन्निति० व्याख्या—हे आत्मन् ! त्वत्तो लघून्—बलेन शरीरेण वा तुच्छाङ्गिनः—प्राणिनः प्रति निर्दयं यथा स्यात्तथा अर्दयन्—पीडयन् हीतिखेदे प्रमोदतो—हर्षतः कर्मसु अर्थात् पापकर्मसु मृगयादिषु त्वं किं विचेष्टसे ?—विरुद्धां चेष्टां करोषि, अपितु मा विचेष्टस्व, यद्—यस्मात्कारणादेकशोऽपि—एकवारमपि अन्येषां कृतमर्दनं—पीडनं येन सोऽङ्गी—प्राणी भवे—संसारेऽनंतशः—अनंतवारानर्दनं—पीडनं सहति, यत उक्तं—"तिव्वयरे उ पओसे सयगुणिओ सयसहस्सकोडिगुणो । कोडाकोडिगुणो वा हुज्ज विवागो बहुतरो चेति ॥ १ ॥ १३४ ॥ १० ॥

---

1 उपदेशमाला गा. १५७-८

अथानंतरोक्ते एव परार्दने दृष्टांतदर्शनपूर्वक बीभत्सतां दर्शयंस्तन्निवृत्तिमुपदिशति—

**यथा सर्पमुखस्थोऽपि, भेको जंतूनि भक्षयेत् ।**
**तथा मृत्युमुखस्थोऽपि, किमात्मन्नर्दसेऽङ्गिनः ? ॥ १३५ ॥ ११ ॥**

**धनवि०**—यथेति दृष्टांतोपन्यासे **सर्पमुखस्थः**—अहिवदनगतोऽपि **भेको**—मंडूको **जंतूनि**—जलस्थलगतप्राणिनो **भक्षयेत्**—खादयेत्, **आत्मन्!** **तथा**—तेन प्रकारेण **मृत्युमुखस्थो**—दिनं दिनं प्रत्यायुषः क्षीयमाणत्वात्कृतांतवदनप्राप्तोऽप्यं**गिनः**—प्राणिनः किमिति प्रश्ने ? **अर्दसे**—पीडयसीत्यर्थः, जंतुशब्दः पुंनपुंसकलिंगे ॥ १३५ ॥ ११ ॥

अथानंतरोक्तोपदेशे 'परार्दनं न कर्त्तव्य'मित्युक्तं, तेन परार्दनजन्यस्य किंचिद्दृश्यमानसुखस्य तुच्छतां परभवे चानंतदुःखहेतुतां च दर्शयन् तन्निवृत्तिमुपदिशति—

**आत्मानमल्पैरिह वंचयित्वा, प्रकल्पितैर्वाकृतनुचित्तसौख्यैः ।**
**भवाधमे किं जन ! सागराणि, सोढाऽसि ही नारकदुःखराशीन् ? ॥ १३६ ॥ १२ ॥**

---

**रत्न०**—एतदेव दृष्टांतदानेनाह—**यथा सर्पमुखस्थोऽपि०** व्याख्या—यथेति दृष्टांतोपन्यासे सर्पमुखस्थोऽपि भेको—मंडूको जंतूनि—क्षुद्रजीवान् भक्षयेत्—अश्नीयात् तथेत्युपनये हे आत्मन्! मृत्युमुखस्थोऽपि त्वमंगिनः—प्राणिनः प्रति किमर्दसे ?—व्यथसे, अपितु माऽर्दस्वेति ॥ १३५ ॥ ॥ ११ ॥ अर्थतो युग्मं"

धनवि०—हा ति खेदे हे जन ! इह भवे मनुष्यजन्मन्यल्पैः—स्तोकैः स्तोककालैर्वा, वा—अथवा प्रकल्पितैः—आरोपितैः परमार्थतोऽसुखत्ववति पानभोजनललनालिंगनादौ सुखमिदमितिविचिंतनैस्तनुचित्तसौख्यैः—कायिकमानसिकसुखैरात्मानं—स्वं वंचयित्वा—विप्रतार्य नारकदुःखराशीन्—नरकभवाधमे—भवेषु—चतुर्गतिलक्षणेषु संसारेष्वधमे—नीचे नरकभवे इत्यर्थः सागराणि सिद्धांतप्रतीतानि यावन्नारकदुःखराशीन्—नरकसत्कदुःखसमूहान् किमिति प्रश्ने सोढाऽसि ?—क्षंताऽसीत्यन्वयः, अत्रासुखत्ववति पानभोजनादौ सुखमिदमित्यारोपे भर्तृहरिणाऽपि वैराग्यशतके प्रतिपादितं, यथा—"तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि, क्षुधार्त्तः सन् शालीन् कवलयति शाकादिवलितान्। प्रदीप्ते रागाग्नौ सुदृढतरमाश्लिष्यति वधूं, प्रतीकारो व्याधेः सुखमिति विपर्यस्यति जनः ॥ १ ॥" इति, अत्र सागराणि—सागरोपमाणि, तानि च दशकोटाकोटीपल्योपमैरेकं सागरोपमं भवति, एवंविधानि त्रयस्त्रिंशत्सागरोपमाणि यावदित्यर्थः, पल्योपमस्वरूपं च संक्षिप्तमिदं—उद्धार १ अद्ध २ खित्ता ३ पलिय तिहा समय १ वाससय २ समया ३ । केसवहारो दीवोदहि १ आउ २ तसाइ ३ परिमाणं ॥ १ ॥ अत्रोद्धारपल्योपमं ग्राह्यं, विस्तरवस्तु प्रवचनसारोद्धाराष्टपंचाशदधिकशतद्वारादिभ्योऽवसेयमिति ॥ १३६ ॥ १२ ॥

---

रत्न०—अथाल्पैः सुखैः करणैः परभवेऽनंतदुःखराशौ पतत जीवं प्रति बोधायाह—आत्मानमल्पैरिहेति०, व्याख्या—हे जन ! इह—अस्मिन् भवे—संसारे प्रकल्पितैः—औपचारिकैर्वाकृतनुचित्तानां—वचनकायमनसामल्पैः—तुच्छैः सौख्यैः करणैरात्मानं वंचयित्वा नारकाणां दुःखराशीन् प्रति हाधाइति खेदे किं सोढाऽसि ?—किं सहिष्यसि, अपितु धर्मकरणेन सोढा मा भवेति, कस्मिन् ?—भवेषु—अवतारेष्वधमो—नीचो भवो भवाधमस्तस्मिन् तन्नारकभवे इत्यर्थः ॥ १३६ ॥ १२ ॥

अथ सामान्यतः प्रमादपरिहारं नानानिदर्शनदर्शनपूर्वकमुपदिशन्नाह—

**उरभ्रकाकिण्युदबिंदुकाम्रवणिक्त्रयीशाकटभिक्षुकाद्यैः ।**
**निदर्शनैर्हारितमर्त्त्यजन्मा, दुःखी प्रमादैर्बहु शोचिताऽसि ॥ १३७ ॥ १३ ॥**

धनवि०—प्रमादैः—मद्यादिभिर्हेतुभिर्हारितमर्त्त्यजन्मा—हारितं प्राप्तं मर्त्यजन्म—मनुष्यभवो येन स तथा दुःखी—नारकादिदुर्गतिदुःखवान् सन्नुरभ्रकाकिण्युदबिंदुकाम्रवणिक्त्रयीशाकटभिक्षुकाद्यैः निदर्शनैः—दृष्टांतैस्त्वं बहु—भूयो यथा स्यात्तथा शोचिताऽसि—पश्चात्तापकर्त्ताऽसीत्यर्थः । अत्रोरभ्रश्च—एडकः काकिणी च—रूपकाशीतितमो भागः, क्वचित्तु विंशतिवराटकप्रमाणको नाणकविशेषः, लिंगानुशासनविवरणे तु काकिनिर्माषचतुर्भागः पणचतुर्भागो वेति, उदबिंदुश्च—दर्भाग्रभागवर्त्ती जलकणः 'उदकस्योद' ( ३—३—१०४ ) इत्यनेन सूत्रेणोदबिंदुरितिसिद्धेः; आम्रश्च—सहकारः, वणिक्त्रयी च—वाणिज्यार्थविनिर्गतवणिग्जनत्रितयी शाकटश्च—शाकटिकः शकटखेटक इतियावत् भिक्षुश्च—भिक्षाजीविकस्ततो द्वंद्वस्ते आद्याः—प्रथमा येषां तानि तथा तैः उरभ्रकाकिण्युदबिंदुकाम्रवणिक्त्रयीशाकटभिक्षुकाद्यैः, अत्राद्यपदेन यः कश्चन स्वहितकरणसमयेऽसावधानः पश्चात् पश्चात्तापपरः स ग्राह्यः; अत्रायमाशयः—प्रमादपारवश्यादकृतसुकृतो मनुष्यभवभ्रष्टो दुर्गतिं गत एतैर्दृष्टांतैः पश्चात्तापकर्त्ता भविष्यसीत्यस्मिन्नेव भवे तथा सुकृतं कुरु यथाऽग्रेऽपि सदानंदोदयो भविता । अत्र प्रथममुरभ्रदृष्टांतो यथा—कस्मिंश्चिद्ग्रामे कस्यचिद्गेहे एकोऽजोऽभ्यागतार्थं पोष्यते, स च पुष्टांगः सुस्नातः कृतहारिद्राद्यंगरागो लाल्यमानः पाल्य-

---

रत्न०—अथैतदेवोत्तराध्ययनसूत्रगतदृष्टांतैर्दृढयति—उरभ्रकाकण्युदबिंदुराम्रेति० व्याख्या—हे आत्मन् ! त्वं प्रमादैः कृत्वा दुःखी सन्

मानः पीनश्च, तं तथा दृष्ट्वा कोऽपि वत्सो मात्राऽपत्यस्नेहेन गोपितं गोदुहापि दयया मुक्तं क्षीरं नापात्, मात्रा च पृष्टो रोषादित्याचष्टो— अंब ! अयमजो यथेष्टौदनयवसाद्यैर्नानालङ्कारैश्च पुत्र इव मान्यते, अहं तु मंदभाग्यः शुष्कतृणान्यपि पूर्णानि सुसमये न लभे, पानीयमपि मां सुसमये कोऽपि नो पाययेत्, न कोऽपि मां लालयेत्, तदा मात्रोचे—वत्स ! 'आउरचिण्हाइं एयाइं, जाइं चरति नंदिओ। सुक्कत्तणेहिं लाढाहिं, एयं दीहाउलक्खणं ॥१॥" यथाऽऽतुरो मर्तुकामो यन्मार्गयति तत्पथ्यमपथ्यं वा दीयते, पुष्पाद्यैरर्च्यते, एवमस्याप्यजस्य पोषोऽर्चा च वध्यमंडनमिव, यदा चैष घातयिष्यते तदा त्वं द्रक्ष्यसि, ततो वत्सस्तथैव स्थितः। ततस्तस्मिन्नुरभ्रे पुष्टे जाते प्राघूर्णके च समागते तमुरभ्रं हत्वा मांसखंडानि कृत्वा पक्त्वा च स्वामिना सहैव प्राघूर्णकेन भुक्तं, दृष्ट्वा स वत्सस्तृषितोऽपि भयेन मातुः स्तन्यं नैच्छत्, तदा मात्रोचे—वत्स ! किं भयभीतो मम क्षरत्पयसोऽपि पयो न पिबसि ?, तदा वत्सोऽवग्—मातः ! स उरभ्रः प्राघूर्णकागमनेऽमे तेषां निर्गत-जिह्वस्तरलनेत्रो विस्वरं रसन् हतो भक्षितश्च, तद्भयान्मे कुतः पयःपानेच्छा ?, तदा मात्रोचे—वत्स ! मया ते तदैवोचे—आतुरचिह्नान्येतानि, एष तेषां विपाकः प्राप्त इत्यादि, अत्रायमुपनयो—यथा उरभ्रो जीवितेच्छया यथेष्टं खादन् पुष्टः सन् प्राघूर्णके आगते हारितजीवितः सन् शिरश्छेदादिक्रियायां क्रियमाणायां विस्वरं रसति तथा त्वमपि प्रमादैर्जीवितेच्छया यथेष्टं विचरन् पापैः पुष्टः सन् स्वायुःपूर्तौ हारितमर्त्यजन्मा सन्नरकादिदुर्गतौ गच्छन् बहु शोचसीति निगमनं १।

अथ द्वितीयः काकिणीदृष्टांतो, यथा—एकेन द्रमकेण भृतिं कुर्वता कार्षापणानां सहस्रमर्जित्वा स्वगृहागमनाय प्रस्थितेन शंवलार्थमेकरूपकस्य काकिणीः कृत्वा दिने दिनेऽभुंजत, अन्यदा मार्गे काऽप्येका काकिणी विस्मृता, सार्थे प्रस्थिते मार्गे गच्छन् स द्रमकस्तां स्मृत्वा

परभ्रं बहु—धन यथा स्यात्तथा शोचिताऽसि—शोकं कर्ताऽसि, यतस्त्वं किं० ?—हारितं मर्त्यस्य—मनुष्यस्य जन्म येन सः, कैः ?—निदर्शनैः—

मर्त्यजन्महारणे शोकः

दध्यौ—मा मम रूपकांतरभेदो भूयादिति स्वां वांसलिकामेकांते संगोप्य काकिण्यर्थं निवृत्तः, काकिणी त्वन्येन हृता, वांसलिकापि केनचित्संगोप्यमाना दृष्टा हृता, स तूभयभ्रष्टो गृहे गत्वा क्षुधा पीड्यमानो जनैश्च परिभूयमानोऽशोचदित्यादि । अत्रायमुपनयो, यथा—स द्रमकः समुपार्जितकार्षापणसहस्रः आत्मनः स्मृतिभ्रंशदोषेण विस्मारितकाकिणीको लोभेन तदर्थं प्रतिगच्छन् गतकाकिणीको गतवांसलिकश्चोभयभ्रष्टो गृहे गत्वा क्षुधा पीड्यमानो जनैः परिभूयमानश्च शोचति, तथा त्वमपि गृहीतसंयमः स्वीयांतरायदोषेण पूर्वमप्राप्तकामभोगः प्रमाददोषेण पुनस्तमेव प्रार्थयमानश्चारित्रं मुक्त्वा कामभोगे प्रवर्त्तमानोऽप्राप्तकामभोगो गतचारित्रश्चोभयभ्रष्टः सन्नरके गच्छन् दुःखीभवन् शोचिताऽसीति निगमनं २ ।

अथ तृतीय उदकबिंदुदृष्टांतो, यथा—कश्चित्तृपार्तस्तुष्टेन देवेन क्षीरसमुद्रं प्रापितः, तत्रापीतपयाः स्वग्रामसीमस्तककूपोपकंठगतदर्भाग्रभागवर्त्ती जलकणो मा पतत्विवितिधिया तत्प्राप्तये याचितदेवेन स्वस्थानं प्रापितः । तत्र निर्गलितजलकणं वीक्ष्य अपूरितस्वप्रतिज्ञं स्वस्थानप्राप्तं पुनः क्षीरसमुद्रादिप्रापणाप्रवणं च तं देवं मत्वा पिपासया कंठगतप्राण उभयतो भ्रष्टः शोचतीत्यादि । अत्रायमुपनयो, यथा स ग्रामिको देवसांनिध्यतः क्षीरसमुद्रं प्राप्य तत्रापीतपया लालसात उदबिंदूद्देशेन धावन्नप्राप्तोदबिंदुर्मुक्तक्षीरसमुद्रश्च सन्नुभयतो भ्रष्टः शोचति, तथा त्वमपि दैवयोगात्प्राप्ततपःसंयमस्तदाराधनमन्तरेण प्रमादत ऐहिकसुखोद्देशेन धावन्नप्राप्तैहिकसुखो मुक्तपारलौकिकसुखोपायभूततपःसंयमश्चोभयतो भ्रष्टो हारितमर्त्यजन्मा शोचिताऽसीतिनिगमनं ३ ।

आम्रदृष्टांतो यथा—कश्चिद्राजा अतिशयेनाम्रप्रियः, आम्राजीर्णेनैव संजातविशूचिको महावैद्यैर्महता यत्नेन पटूकृतः, पुनराम्रभक्षणे

---

दृष्टांतैः, कैः १—उरभ्रो—मेढकः काकिणी—रूपकाशीतितमभागरूपा उदबिंदुरिति—उदकबिंदुः आम्र इत्याम्रवातकी राजा वणिजां त्रयी वणिक्त्रयी

मरिष्यसीति विज्ञप्तः, तच्छ्रवणमात्रादेव स्वदेशे विहिताम्रवणोच्छेदोऽन्यदा प्रधानेन सहाश्वापहृतोऽटव्यां प्राप्तः सहकारच्छायायां विश्रांतः, तदधः पतितानि सुखास्वादान्याम्रफलानि गृह्णन् प्रधानैर्वार्यमाणोऽपि स्पर्शलांपट्यतः करे कृत्वा परामृशन् क्रमेण गंधलांपट्यतो जिघ्रन् रसलांपट्यतश्चास्ये क्षिप्त्वा गिलन् म्रियमाणः शोचतीत्यादि । अत्रायमुपनयो, यथा स राजा इंद्रियपरवशस्सन्नाम्रास्वादलुब्धः आम्रफलास्वादं कुर्वन् अप्राप्तवदास्वादानंदो राज्यजीवितयोराशापरित्यक्तो म्रियमाणः शोचति, तथा त्वमपींद्रियपरवशः सन् प्रमादात् कामभोगसुखलुब्धः कामभोगे प्रवर्त्तमानो गतसंयमजीवितराज्यो हारितमर्त्त्यजन्मा उभयतो भ्रष्टो म्रियमाणः शोचिताऽसीति निगमनं ४ ।

मर्त्यजन्म-हारणे शोकः

अथ पंचमो वणिग्दृष्टांतो यथा—एकस्य वणिजस्त्रयः पुत्राः, तेन तेषां कार्षापणानां सहस्रं सहस्रं दत्तं, उक्ताश्चैवम्—एतावता द्रव्येण व्यवहृत्य इयता कालेनागंतव्यं । ततस्ते तन्मूलं लात्वा स्वपुरान्निर्गताः पृथक् पृथक् पत्तनेषु स्थिताः । तत्रैको भोजनाच्छादनस्तोकव्ययो द्यूतमद्यमांसादिव्यसनवर्जितो युक्त्या व्यवहरन् भूयो लाभं लेभे, द्वितीयस्तु मूलमक्षिपन् लाभं भोजनाच्छादनमाल्यभूषादिषूपभुंक्ते, न चात्यादरेण व्यवहरते, तृतीयस्तु न किंचिद्व्यवाहरत्, किंतु द्यूतमद्यमांसवेश्यागंधमाल्यतांबूलशरीरसत्क्रियाभिरल्पेनैव कालेन सर्वं द्रव्यं भक्षितवान् । ततस्त्रयोऽपि यथोक्तकाले स्वपुरमागताः । तत्र यश्छिन्नमूलः स पितृभ्यां निष्कासितो जननिंद्यः प्रेष्य एव जात इत्यादि । अत्रायमुपनयो—यथा तृतीयो वणिक् पंचेंद्रियपरवशः सन् लाभमनिच्छन् भोगादि भुंजन् मूलव्ययेन गृहमागतः पितृभ्यां निष्कासितो जननिंद्यः प्रेष्यतां प्राप्तः सन् शोचति तथा त्वमपि पूर्वभवात्सुकृतं लात्वा समागतः सन् सकलसामग्री प्राप्य प्रमादपरवशः सन् भोगाद्युपभोगं स्पृहयन् पारलौकिकसुखोपायमनिच्छन् प्राक्तनसुकृतव्ययेन दुर्गतिं गच्छन् शोचिताऽसीति निगमनं ५ ।

अथ षष्ठः शाकटदृष्टांतो यथा—कश्चिच्छाकटिकः समविषममार्गज्ञाता सममुपलादिरहितं महापथं त्यक्त्वा विषममुपलादिसंकुलं मार्गं

गंतुमुपक्रांतः, तदाऽक्षे भग्ने शोचति यथा धिग्मां यज्ज्ञानन्नप्यपायमापमित्यादि । अत्रायमुपनयो—यथा स शाकटिकः समविषमभूमिभागं जानन्नपि विकथादिपारवश्यादक्षे भग्ने शोचति तथा त्वमपि पुण्यपापादिकं जानन्नपि विकथादिप्रमादपरवशः सन् भ्रष्टसम्यग्दर्शनज्ञानचारित्रो दुर्गतौ गच्छन् धिग्मां यज्ज्ञानन्नप्यहं दुर्गतौ यामीत्यादि शोचिताऽसीति निगमनं ६ ।

अथ सप्तमो भिक्षुकदृष्टांतो यथा—एको ग्राम्यो दारिद्र्येण गृहान्निर्गत्य पृथ्वीं परिभ्रमन् कुदैवयोगाद्भिक्षाया अपि अप्राप्त्या पुनर्गृहं प्रति व्यावृत्तः सन्नेकस्मिन् ग्रामे पाणपाटकपार्श्वे देवकुले रात्रौ स्थितः । ततो देवकुलादेकः पाणश्चित्रघटहस्तो निर्गत्यैकदेशे स्थित्वा घटमूचे—शीघ्रं गृहं कुर्वित्युक्ते गृहं जातम्, एवं यद्यत् सोऽवक् तत्तद् घटोऽकरोद्यावच्छय्यायां सः स्त्रीभिः सह भोगान्भुंक्ते, प्रातश्च सर्वं संजह्रे । तदा स ग्राम्यस्तद् दृष्ट्वा दध्यौ—मुधाऽहं क्ष्मामभ्रमं, अथैनं सेवे इति विचिंत्य स तमेवाश्रयत् । स च पाणस्तद्भक्त्या प्रीत ऊचे—किं ते ददे ?, तदा स ग्राम्य ऊचे—त्वत्प्रसादेनाहमप्येवं भोगान् भुंजे । तेन किं विद्यां लासि उत विद्याभिमंत्रितं घटमित्युक्ते स विद्यासाधनादिकष्टभीरुतयोचे—अभिमंत्रितं घटं देहि । तेनाभिमंत्र्य घटो दत्तः । स तं लात्वा स्वग्राममेत्य सौधं विकुर्व्य बंधुयुग् यथेच्छं भोगान् भुंक्ते । तेनान्यैश्च तदा सर्वे स्वजीवनोपायाः शिथिलिताः गवाद्याश्चासारिताः गताः । सोऽन्यदाऽतिहर्षाद् घटं स्कंधे कृत्वा पीतासवोऽनृत्यत्, तदा प्रमादात्पतितो घटो भग्नः, स विद्याकृतोपभोगो नष्टः, पश्चात्स स्वजनैः सह परप्रेष्यतादिदुःखान्यनुभवंश्चेद् घटविद्या ततो गृहीता स्यात्तदा भव्यमभविष्यदिति शोचतीत्यादि । अत्रायमुपनयो—यथा स ग्राम्यभिक्षुकः पृथिव्यां परिभ्रमन् संप्राप्तकामकुंभोऽपि मद्यपारवश्यात्पतितकामकुंभः परप्रेष्यताद्यैर्दुःखान्यनुभवन् शोचति तथा त्वमपि संसारे भ्रमन् संप्राप्तश्रीजिनधर्मोऽपि मद्यादिप्रमादपारवश्यात् त्यक्तश्रीजिनधर्मो हारितमर्त्यजन्मा नारकादिदुःखान्यनुभवन् शोचिताऽसीति निगमनं ७ ।

मर्त्यजन्म-हारणे शोकः

इत्येवं सप्त दृष्टांता भाविताः । तत्र पूर्वदृष्टांतपंचकं श्रीउत्तराध्यनसप्तमौरभ्रीयाध्ययनानुसारेण शाकटनामा षष्ठो दृष्टांत श्रीउत्तराध्ययनपंचमाकाममरणीयाख्याध्ययनानुसारेण भिक्षुकनामा सप्तमो दृष्टांतश्च श्रीउत्तराध्ययनषष्ठक्षुल्लकनिर्ग्रंथीयाध्ययनानुसारेणात्र भाविताः, सुधिया स्वधिया परम्परया वा यथासंप्रदायं प्रकारान्तरेणापि सम्यग्भावनीयाः ।

अत्राद्यपदेनान्येऽपि दृष्टांताः श्रीउत्तराध्ययनानुसारेणात्र भाविताः । यथा कचिद्ग्रामे दरिद्रकुटुंबं वसति, तस्य कस्मिंश्चित्पर्वणीभ्यगृहेषु पच्यमानं भुज्यमानं च पायसं दृष्ट्वा तद्भोजनमनोरथे समुत्पन्ने तन्मध्यगेन केनचिद्यादृशे तादृशे पयसि केनचित्तंदुले केनचिद् घृते केनचिन्मधुधूलिप्रमुखे मिष्टद्रव्ये याचिते प्राप्ते सति यादृशे तादृशे पायसे निष्पन्ने सति सर्वैरपि याचितद्रव्यानुसारेण भागमार्गणे कृतेऽप्राप्तत्वेन परस्परं विवदमानेषु राजद्वार गतेषु तत्पायसं सर्वत्र संचरद्भिः श्वानैर्भक्षितम् । तदनु तद्दरिद्रकुटुंबकं स्वगतानवगमतादोषेण पायसभोजनाप्राप्त्या तन्मनोरथैनैव मृतम् । अत्रायमुपनयो, यथा—तद्दरिद्रकुटुंबकं कलहकरणादिना श्वानेन नाशितं बह्वायासेन निष्पादितं पायसमप्राप्य शोचति, तथा त्वमपि निष्पुण्यः सन् पुण्यवद्गेहे धर्मकर्म क्रियमाणं तत्फलं चानुभूयमानं दृष्ट्वा कथंचिद्धर्मसामग्रीं प्राप्य तथादृशं तादृशं कुर्वन्नपि मत्सरादिदोषेण कलहं कुर्वाणो रागद्वेषाभ्यां तद्धर्मकर्मनाशात्तत्फलरहितः परभवे शोचिताऽसीति निगमनमिति दरिद्रकुटुंबदृष्टांतः १ ।

एकस्मिन्नगरे प्राकृतकर्मणा क्षीणधनं वणिग्द्वयं वसति । तेन धनार्जनाय बहूपायेऽपि कृते तदप्राप्त्या कचित्कस्यचिदुपदेशात्सप्रत्ययक्षो यक्षाराधनतः प्रसन्नीकृतः । तदनु तत्पार्श्वे धनयाचने यक्षेणोक्तं—कृष्णचतुर्दशीरात्रौ शकटसामग्रीं कृत्वा सावधानतया स्थेयं, रत्नद्वीपे युवां प्रापयिष्यामि, तत्र प्रहरद्वयं यावत्स्वस्वशकटं यथेष्टं रत्नमणिसुवर्णैः पूरणीयं, प्रहरद्वयानंतरं स्वस्थानं प्रापयिष्यामीति । तदनु ताभ्यां

तथेति प्रपद्य स्वस्वगृहं प्राप्य यथोक्तरात्रौ समग्रशकटसामग्रीं विधाय स्थितम् । तदनु देवेन यथोक्तसमये समागत्य सशकटौ तौ रत्नद्वीपे मुक्तौ । तदनु तयोर्मध्यगेनैकेनाप्रमत्ततया रत्नसुवर्णैः स्वशकटं भृतः अपरेणापूर्वां सुखशय्यां प्राप्य सुप्तं । तदनु देवेन स्वप्रतिज्ञानिर्वाहाय तौ सशकटौ स्वगृहे मुक्तौ । तदनु येन रत्नद्वीपं प्राप्य स्वशकटं भृतं, स प्रतिदिनं नवनवभोगसामग्र्या सुखीजज्ञे । येन सुप्तं स परार्द्धिं दृष्ट्वा दृष्ट्वा दुःखीजज्ञे, अत्रायमुपनयो—यथा स शयालुः शुद्धोपदेशकं पुरुषं प्रसन्नं च देवं सुसमयं रत्नद्वीपं च प्राप्येंद्रियपारवश्येन धनाप्राप्त्या शोचति तथा त्वमपि शुद्धदेवगुरुधर्मसामग्रीं रत्नद्वीपसदृशं मनुष्यावतारं यथोक्तसमयसदृशं चायुः प्राप्यापि पंचेंद्रियपरवशः सन् शकटसदृशमात्मानं धर्मधनेनापूरयन् दुर्गतिं गतः परेषां दिव्यर्द्धिं दृष्ट्वा शोचिताऽसीति निगमनमिति वणिग्द्वयदृष्टांतः २ ।

अथान्यदा वैताढ्यवासिनौ विद्याधरौ सुबहुसेवया परंपरागतदुष्करसाधनविधिपूर्वकं स्वपितृदत्तजगज्जयिविद्यासाधनाय भूचरौ भूत्वा भूमौ चांडालपाटके चांडालस्य यौवनस्थां कन्यां पाणिग्रहणार्थं प्रार्थ्य गृहजामातृत्वं च प्रतिपद्य परिणीय चैकशय्यास्थौ पृथक् पृथक् पाटके विद्यां साधयामासतुः, तदनु यौवनमदोन्मत्ततया तुच्छजातितया निर्लज्जतया तथा स्त्रिया हावभावालिंगनादिना क्षोभनायां क्रियमाणायामप्यक्षोभ्येनैकेन षण्मासं यावन्निरतिचारब्रह्मव्रतपालनेन सा जगज्जयिविद्या साधिता, अन्येन तु ब्रह्मव्रतभ्रष्टेन चांडालपुत्रीसंगत्या खेचरशेषविद्यावर्जितेन चांडालत्वं प्राप्य दुःखमनुभूतम् । अत्रायमुपनयो, यथा भ्रष्टविद्यासाधनविधिः खेचरो जगज्जयकारिविद्यासाधनसामग्रीप्राप्तावपींद्रियपारवश्यात्तत्फलाप्राप्त्या शोचति एवं त्वमप्यंगीकृतधर्मभ्रष्टः कर्मजयकारिधर्मसामग्रीप्राप्तावपींद्रियपारवश्याद्धर्मप्राप्तिफलाप्राप्त्या शोचिताऽसीति निगमनमिति विद्याधरद्वयदृष्टांतः ॥ ३ ॥

अथान्यदा केनचिन्निर्भाग्येन पर्यटता बह्वायाससाध्यायक्षाधिंतासणिरत्नं प्राप्तं । तदनु तेन समुद्रमार्गेण यानपात्रेण स्वगृहं गच्छता

निर्धनेन धनप्राप्त्या मत्तेन रत्नस्य कांत्या चंद्रेण समतां पश्यता चक्षुरिंद्रियपारवश्येन तद्रत्नं समुद्रे पातितं, तदनु स यावज्जीवं शोचति स्म । अत्रायमुपनयो, यथा स निर्भाग्यः स्वदारिद्र्यनाशकवह्वायाससाध्यदेवदत्तचिंतामणिप्राप्तावपींद्रियपारवश्येन समुद्रपातितचिंतामणिस्तत्प्राप्तिफलाप्राप्त्या शोचति तथा त्वमपि वहुसेवासाध्यगुरुप्रदत्तचिंतामणिसमश्रीजिनधर्मप्राप्तावपींद्रियपारवश्येन धर्मभ्रष्टस्तत्प्राप्तिफलाप्राप्त्या वहु शोचिताऽसीति निगमनमिति निर्भाग्यदृष्टांतः । इत्यादयः शोचनायां भावनीया इति ॥ १३७ ॥ १३ ॥

अथानंतरोपदेशे 'सामान्यतः प्रमादः परिहर्त्तव्य' इत्युक्तम्, अथ च पंचेंद्रियजन्यविपयरूपप्रमादविशेपपरिहारं दृष्टांताष्टकदर्शनपूर्वमुपदिशन्नाह—

**पतंगभृंगैणखगाहिमीनद्विपद्विपारिप्रमुखाः प्रमादैः ।**
**शोच्या यथा स्युर्मृतिवंधदुःखैश्चिराय भावी त्वमपीति जंतो ! ॥ १३८ ॥ १४ ॥**

धनवि०—पतंगाश्च–शलभाः भृंगाश्च–पट्पदा एणाश्च–हरिणाः खगाश्च–शुकादयः पक्षिणः अहयश्च–भुजंगाः मीनाश्च–मत्स्याः द्विपाश्च–गजाः द्विपारयश्च–सिंहास्ततो द्वंद्वस्ते प्रमुखा–मुख्या येषु ते पतंगभृंगैणखगाहिमीनद्विपद्विपारिप्रमुखाः प्राणिनो यथा–

---

शाटक इति–शकटानां वाहको वणिग् भिक्षुक इति–रंकः द्वंद्वसमासे उरभ्र० भिक्षुकास्ते आद्या येषां तानि तथा तैः, एतेषां निदर्शनानां विस्तरः श्रीउत्तराध्ययनलघुवृत्तितोऽवसेयो भावनीयश्चेति ॥ १३७ ॥ १३ ॥

रत्न०—पुनरप्यकृतपुण्यस्य प्रमादिनो जीवस्य दृष्टांतदानेन भावीनि दुःखानि कथयति–पतंगभृंगैणमीनेति० व्याख्या—हे जंतो ! यथा

पतंगादीनां मृत्यादि

तथेति प्रपद्य स्वस्वगृहं प्राप्य यथोक्तरात्रौ समग्रशकटसामग्रीं विधाय स्थितम् । तदनु देवेन यथोक्तसमये समागत्य सशकटौ तौ रत्नद्वीपे मुक्तौ । तदनु तयोर्मध्यगेनैकेनाप्रमत्ततया रत्नसुवर्णैः स्वशकटं भृतः अपरेणापूर्वां सुखशय्यां प्राप्य सुप्तं । तदनु देवेन स्वप्रतिज्ञानिर्वाहाय तौ सशकटौ स्वगृहे मुक्तौ । तदनु येन रत्नद्वीपं प्राप्य स्वशकटं भृतं, स प्रतिदिनं नवनवभोगसामग्र्या सुखीजज्ञे । येन सुप्तं स परार्द्धिं दृष्ट्वा दृष्ट्वा दुःखीजज्ञे, अत्रायमुपनयो—यथा स शयालुः शुद्धोपदेशकं पुरुषं प्रसन्नं च देवं सुसमयं रत्नद्वीपं च प्राप्येंद्रियपारवश्येन धनाप्राप्त्या शोचति तथा त्वमपि शुद्धदेवगुरुधर्मसामग्रीं रत्नद्वीपसदृशं मनुष्यावतारं यथोक्तसमयसदृशं चायुः प्राप्यापि पंचेंद्रियपरवशः सन् शकटसदृशमात्मानं धर्मधनेनापूरयन् दुर्गतिं गतः परेषां दिव्यार्द्धिं दृष्ट्वा शोचिताऽसीति निगमनमिति वणिग्द्वयदृष्टांतः २ ।

अथान्यदा वैताढ्यवासिनौ विद्याधरौ सुबहुसेवया परंपरागतदुष्करसाधनविधिपूर्वकं स्वपितृदत्तजगज्जयिविद्यासाधनाय भूचरौ भूत्वा भूमौ चांडालपाटके चांडालस्य यौवनस्थां कन्यां पाणिग्रहणार्थं प्रार्थ्य गृहजामातृत्वं च प्रतिपद्य परिणीय चैकशय्यास्थौ पृथक् पृथक् पाटके विद्यां साधयामासतुः, तदनु यौवनमदोन्मत्ततया तुच्छजातितया निर्लज्जतया तया स्त्रिया हावभावालिंगनादिना क्षोभनायां क्रियमाणायामप्यक्षोभ्येनैकेन षण्मासं यावन्निरतिचारब्रह्मव्रतपालनेन सा जगज्जयिविद्या साधिता, अन्येन तु ब्रह्मव्रतभ्रष्टेन चांडालपुत्रीसंगत्या खेचरशेषविद्यावर्जितेन चांडालत्वं प्राप्य दुःखमनुभूतम् । अत्रायमुपनयो, यथा भ्रष्टविद्यासाधनविधिः खेचरो जगज्जयकारिविद्यासाधनसामग्रीप्राप्तावपींद्रियपारवश्यात्तत्फलाप्राप्त्या शोचति एवं त्वमप्यंगीकृतधर्मभ्रष्टः कर्मजयकारिधर्मसामग्रीप्राप्तावपींद्रियपारवश्याद्धर्मप्राप्तिफलाप्राप्त्या शोचिताऽसीति निगमनमिति विद्याधरद्वयदृष्टांतः ॥ ३ ॥

अथान्यदा केनचिन्निर्भाग्येन पर्यटता बहायाससाध्यायक्षाधिचिंतामणिरत्नं प्राप्तं । तदनु तेन समुद्रमार्गेण यानपात्रेण स्वगृहं गच्छता

निर्धनेन धनप्राप्त्या मत्तेन रत्नस्य कांत्या चंद्रेण समतां पश्यता चक्षुरिंद्रियपारवश्येन तद्रत्नं समुद्रे पातितं, तदनु स यावज्जीवं शोचति स्म । अत्रायमुपनयो, यथा स निर्भाग्यः स्वदारिद्र्यनाशकबह्वायाससाध्यदेवदत्तचिंतामणिप्राप्तावपींद्रियपारवश्येन समुद्रपातितचिंतामणिस्तत्प्राप्तिफलाप्राप्त्या शोचति तथा त्वमपि बहुसेवासाध्यगुरुप्रदत्तचिंतामणिसमश्रीजिनधर्मप्राप्तावपींद्रियपारवश्येन धर्मभ्रष्टस्तत्प्राप्तिफलाप्राप्त्या बहु शोचिताऽसीति निगमनमिति निर्भाग्यदृष्टांतः । इत्यादयः शोचनायां भावनीया इति ॥ १३७ ॥ १३ ॥

अथानंतरोपदेशे 'सामान्यतः प्रमादः परिहर्त्तव्य' इत्युक्तम्, अथ च पंचेंद्रियजन्यविषयरूपप्रमादविशेषपरिहारं दृष्टांताष्टकदर्शनपूर्वमुपदिशन्नाह—

**पतंगभृंगैणखगाहिमीनद्विपद्विपारिप्रमुखाः प्रमादैः ।**
**शोच्या यथा स्युर्मृतिबंधदुःखैश्चिराय भावी त्वमपीति जंतो ! ॥ १३८ ॥ १४ ॥**

धनवि०—पतंगाश्च—शलभाः भृंगाश्च—षट्पदा एणाश्च—हरिणाः खगाश्च—शुकादयः पक्षिणः अहयश्च—भुजंगाः मीनाश्च—मत्स्याः द्विपाश्च—गजाः द्विपारयश्च—सिंहास्ततो द्वंद्वस्ते प्रमुखा—मुख्या येषु ते पतंगभृंगैणखगाहिमीनद्विपद्विपारिप्रमुखाः प्राणिनो यथा—

---

शाटक इति—शकटानां वाहको वणिग् भिक्षुक इति—रंकः द्वंद्वसमासे उरभ्र० भिक्षुकास्ते आद्या येषां तानि तथा तैः, एतेषां निदर्शनानां विस्तरः श्रीउत्तराध्ययनलघुवृत्तितोऽवसेयो भावनीयश्चेति ॥ १३७ ॥ १३ ॥

रत्न०—पुनरप्यकृतपुण्यस्य प्रमादिनो जीवस्य दृष्टांतदानेन भावीनि दुःखानि कथयति—**पतंगभृंगैणमीनेति०** व्याख्या—हे जंतो ! यथा

तंगादीनां मृत्यादि

येन प्रकारेण प्रमादैः पंचभिरष्टभिर्वा तत्फलभूतैश्च मृतिः—मरणं बंधश्च—वागुरारज्जुनिगडादिनियंत्रणं दुःखं च—छेदनभेदनक्षुत्तृट्शीतातपादिभिः प्रतिकूलवेदनीयं ततो द्वंद्वस्तैर्मृतिबंधदुःखैः शोच्याः—शोचनीयाः स्युः, यथेतिदृष्टांतोपन्यासग्रहणादत्रेत्यमुना प्रकारेणेति दार्ष्टांतिकोपन्यासस्तेनेति—अमुना प्रकारेण हे जंतो ! त्वमपि प्रमादैर्हेतुभूतैस्तत्फलभूतैश्च मृतिबंधदुःखैश्चिराय—चिरकालं नरकादिषु शोच्यः—शोचनीयो भावी—भविष्यसीत्यर्थः । अत्रायं भावः—प्रमादपतिताः प्राणिनो दुःखपात्रीभूताः संतः पतंगादिवत्सर्वे सर्वत्र शोचनीया भवंतीति प्रमादं परिहरेति । अत्र पतंगादयश्चाष्टौ दृष्टांता निर्दिष्टाः । तत्र प्रथमं चक्षुर्विषयलक्षणे प्रमादे पतंगदृष्टांतो यथा—"रूवेसु जो गिद्धिमुवेइ तिव्वं, अकालिअं पावइ से विणासं । रागाउरे से जहवा पयंगे, आलोअलोले समुवेइ मच्चुं" ॥ १ ॥ इति श्रीउत्तराध्ययने प्रमादस्थाननाम्नि द्वात्रिंशदध्ययने, एवं श्रीयोगशास्त्रेऽपि "कनकच्छेदसंकाशशिखाऽऽलोकविमोहितः । रभसेन पतन् दीपे, शलभो लभते मृतिं[1] ॥ १ ॥ अथ घ्राणेंद्रियविषयलक्षणे प्रमादे द्वितीयो भृंगदृष्टांतो यथा—"निपतन्मत्तमातंगकपोले गंधलोलुपः । कर्णतालतलाघातान्मृत्युमाप्नोति षट्पदः[2] ॥ १ ॥ इति श्रीयोगशास्त्रे ॥ अथ श्रोत्रेंद्रियविषयलक्षणे प्रमादे तृतीयो हरिणदृष्टांतो यथा—सद्देसु जो गिद्धिमुवेइ तिव्वं, अकालियं पावइ से विणासं । रागाउरे हरिणमुवेइ गिद्धे, सद्दे अतित्ते समुवेइ मच्चुं ॥ १ ॥ इति पूर्वोक्ते एवोत्तराध्ययने, एवं श्रीयोगशास्त्रेऽपि—हरिणो हारिणीं गीतिमाकर्णयितुमुद्धरः । आकर्णाकृष्टचापस्य, याति व्याधस्य वेध्यतां[3] ॥ १ ॥ अथ रसनेंद्रियविषयलक्षणे प्रमादे चतुर्थः खगदृष्टांतो यथा—कूटधान्यकणादानलौल्यतो मतिवर्जिताः । पतंति पक्षिणः पाशे, शुकपारापतादयः ॥ १ ॥

पतंगः—शलभो दीपशाखापाताद् भृंगो गंधमोहितो रात्रौ कमलकर्णिकायां बंधनादेणो—मृगः शब्दमोहितो बंधनात् खगः—पक्षी कृत्रिमनीलपत्रवृक्ष-

१ यो. शा. प्र. ४ श्लो० ३। २ श्लो० ३०। ३ श्लो० ३२। ४ श्लो० २९।

इत्यर्थत उपदेशरत्नाकरे ॥ ४ ॥ अथ पुनरपि घ्राणेन्द्रियविषयलक्षणे प्रमादे एव पंचमः सर्पदृष्टांतो यथा—"गंधस्स जो गिद्धिमुवेइ तिव्वं, रागाउरे ओसहिगंधगिद्धे। अकालियं पावइ से विणासं, सप्पे विलाओ विव निक्खमंतो" ॥ १ ॥ इति पूर्वोक्तोत्तराध्ययने एव; अथ पुनरपि रसनेंद्रियविषयलक्षणे प्रमादे षष्टे मीनदृष्टांतो यथा—"रसस्स जो गिद्धिमुवेइ तिव्वं, रागाउरे वडिसविभिन्नकाये। मच्छे जहा आमिसभोगगिद्धे, अकालियं पावइ से विणासं" ॥ १ ॥ इति पूर्वोक्तोत्तराध्ययने एव, एवं श्रीयोगशास्त्रेऽपि—पयस्यगाधे विचरन्, गिलन् गलगतामिषम्। मैनिकस्य करे दीनो, मीनः पतति निश्चितं ॥ १ ॥ इति, अथ स्पर्शनेंद्रियलक्षणे प्रमादे सप्तमो द्विपदृष्टांतो यथा—फासस्स जो गिद्धिमुवेइ तिव्वं, रागाउरे कामगुणेसु गिद्धे। करेणुमग्गावहिए व नागे, अकालियं पावइ से विणासं ॥ १ ॥ इति तत्रैवोत्तराध्ययने, एवं श्रीयोगशास्त्रेऽपि—वशास्पर्शसुखास्वादप्रसारितकरः करी। आलानबंधनक्लेशमासादयति तत्क्षणात् ॥ १ ॥ इति। अथ पुनरपि रसनेंद्रियविषयलक्षणे प्रमादेऽष्टमो द्विपारिदृष्टांतो यथा—द्विपारातिरपि व्याघ्रो, मांसास्वादस्य लिप्सया। किरातैः क्षिप्यते कूटकूटले काष्ठपंजरे ॥ १ ॥ इत्यर्थत उपदेशरत्नाकरे। अत्र प्रमुखग्रहणान्महिषादयः पंचेंद्रियद्वीन्द्रियाद्योऽन्येऽपि यथासंभवं प्राणाः, अत्र महिषदृष्टांतः स्पर्शनेंद्रिये यथा—फासस्स जो गिद्धिमुवेइ तिव्वं, रागाउरे सीयजलावसन्ने। गाहग्गहीए महिसे व रन्ने, अकालियं पावइ से विणासं ॥ १ ॥ इति पूर्वोक्त एवोत्तराध्ययने। अत्र पद्येऽष्टौ दृष्टांता साक्षाद्दर्शिताः, तत्र पतंग १ भृंग २ एण ३ अहि ४ मीन ५ द्विप ६ नामानः षट् दृष्टांताः श्रीउत्तराध्ययनयोगशास्त्रानुसारेण स्पष्टा एव, खगद्विपारिनामानौ

मोहितः पाशपतनादहिः—सर्पः शब्दादाहितुंडिकत्रशपतनान्मीनो—मत्स्यो मासखडलुब्धो धीवरजालपतनात् द्विपो—हस्ती कृतवंशकटकाच्छादितगर्तपतनक्षुदसद्मनात् द्विपारिः—सिंहपंजरमध्यमुक्ताजालोभात् पंजरपतनात् द्वंद्वसमासे पतंग०द्विपारयस्ते प्रमुखा—आद्या येषां ते पतंग०द्विपारिप्रमुखाः,

पतंगादीनां मृत्यादि

द्वौ दृष्टांतौ तथाविधसंप्रदायाभावाद्ग्रंथान्तरे साक्षादनुपलब्धेश्च संभावनया योजितौ स्तः, सति संप्रदाये ग्रन्थान्तरे वा साक्षात्तदुपलब्धौ च यथावद्योजनीयौ; न चैषा संभावना स्वचित्तमात्रकल्पितेतिवाच्यं, उपदेशरत्नाकरे द्वितीयतटे प्रथमाधिकारपष्ठगाथावृत्तौ एतदर्थान्वाख्यानदर्शनात्। तदेकदेशो यथा कामसेवनाद्याश्रवास्तु,—प्रायः स्वजातिविष्ठासु, संमूर्च्छंत्ययुगेंद्रियाः। स्वजातिलालासु पुनर्मूर्च्छंति चतुरिंद्रियाः ॥ १ ॥ मूर्च्छासंज्ञानुभावेन, तेऽपि त्रिचतुरिंद्रियाः। सेवंते जंतवो जंतून्मलामृतकलाभवान् ॥ २ ॥ इति वचनादसंज्ञिनां मिथुनसंज्ञानुभावादिना, संज्ञिनां तु वेदोदयादिना स्पष्टा एव, गजा हस्तिनीलुब्धा गजांतरादीन् घ्नंति, मत्स्या गलामिषलुब्धा म्रियंते, शाल्यादिकणलुब्धाः पक्षिणो जाले पतंति, हरिणसर्पगजादयो गीतवंशस्वरश्रवणरसलुब्धा म्रियंते, गजाश्च हस्तिनीलुब्धाः, गंधलुब्धा भृंगकीटिकासर्पादयः, आमिषलुब्धाः समुद्रान्तर्गतप्रतिसंतापस्थलवासिजलमनुष्याः, बर्करभक्षणार्थं यंत्रप्रविष्टव्याघ्रादयश्च, रूपलुब्धाः शलभादयश्च म्रियंतेऽपि, द्रव्यादिनिधिं सर्पा अधितिष्ठंति, निधौ दृष्टे खंजरीटा नृत्यंति, गोधेरकशिवादयश्च शब्दायंते, कीटिकाद्या अपि कणान् संगृह्णंतीत्यादि, अत्र च दृष्टांतदार्ष्टांतिकयोजना स्पष्टैवेति ॥ १३८ ॥ १४ ॥

अथ प्रमादानां पापरूपतां दर्शयंस्तत्परिहारमुपदिशन्नाह—

**पुराऽपि पापैः पतिताऽसि दुःखराशौ पुनर्मूढ! करोषि तानि।**
**मज्जन् महापंकिलवारिपूरे, शिला निजे मूर्ध्नि गले च धत्से ॥ १३९ ॥ १५ ॥**

---

प्रमुखशब्दादन्ये चित्रकादयो ग्राह्याः, एते प्रमादैः कृत्वा यथा शोचनीयाः स्युः, कैः ?—मृतिश्च बंधश्च मृतिबंधौ तयोर्दुःखानि तैः, केचित् पतंगादयो मरणदुःखैर्हस्त्यादयस्तु बंधनदुःखैरित्यर्थः तद्वत्त्वमपि चिराय—चिरकालं शोच्यो भावी—भविता, प्रमादैरित्यत्रापि ज्ञेयमिति ॥ १३८ ॥ १४ ॥

अवसर-ज्ञापनं

धनवि०—हे मूढ!–हे मूर्ख पुरापि–पूर्वमप्येतद्भवेऽन्यभवे वा पापैः–विषयकषायादिलक्षणप्रमादैर्हेतुभूतैर्दुःखराशौ–दुःखसमूहे पतितोऽसि–पतनकर्त्तासि, पुनस्तानि प्रमादाचरणलक्षणानि पापानि करोषि–आचरसि। एवं प्रमादाचरणं कुर्वन् किं करोषीति दृष्टांतपूर्वकं दर्शयति–पंकोऽस्यास्तीति पंकिलः स चासौ वारिपूरश्च २ महांश्चासौ पंकिलवारिपूरश्च स तथा तस्मिन् महापंकिलवारिपूरे मज्जन्–बूडन् निजे–स्वे मूर्ध्नि–मस्तके गले च–कंठे शिलाः–स्थूलोपलान् धत्से–धरसीति ॥ १३९ ॥ १५ ॥

अथ प्रमादपरिहारावसरमुपदिशन्नाह—

पुनः पुनर्जीव! तवोपदिश्यते, बिभेषि दुःखात् सुखमीहसे च चेत्।
कुरुष्व तत् किंचन येन वांछितं, भवेत्तवास्तेऽवसरोऽयमेव यत् ॥ १४० ॥ १६ ॥

धनवि०—हे जीव! तव पुनःपुनः–वारंवारमुपदिश्यते–हितवचनमादिश्यते, चेद्–यदि दुःखाद्बिभेषि–भयं यासि च पुनः सुखम्–

रत्न०—अथ पूर्वं दुःखराशौ पतितोऽस्यथापि मा पतेति ज्ञापयति–पुराऽपि पापैरिति०, व्याख्या—हे आत्मन्! पुरापि–पूर्वजन्मन्यपि पापैर्हेतुभिः दुःखराशौ पतितोऽसि हे मूढ! पुनरिह–जन्मनि तान्येव पापानि करोषीति दृष्टांतदानेन कथयति–हे जीव! त्वं महान् पंकिलः–पंकवान् यो वारिपूरस्तस्मिन् मज्जन्–बूडन् शिलां निजे मूर्ध्नि च पुनर्गले–कंठे धत्से–दधासीति ततस्त्वमेनं दृष्टांतं सफलयसीति भावः ॥ १३९ ॥ १५ ॥

रत्न०—अथात्मानं धर्मस्यायमवसरोऽस्तीति ज्ञापयति–पुनःपुनरिति०, व्याख्या—रे जीव! मया पुनःपुनस्तवोपदिश्यते–उपदेशो दीयते, किमित्याह–चेद्–यदि त्वं दुःखाद्बिभेषि–भयमाप्नोषि तथा सुखमीहसे–वांछसि। तत्–तर्हि किंचनापूर्वं सुकृतं कुरुष्व येन सुकृतेन वांछितं अर्थात्

१ श्लो० २८।

द्वौ दृष्टांतौ तथाविधसंप्रदायाभावाद्ग्रंथान्तरे साक्षादनुपलब्धेश्च संभावनया योजितौ स्तः, सति संप्रदाये ग्रन्थान्तरे वा साक्षात्तदुपलब्धौ च यथावद्योजनीयौ; न चैषा संभावना स्वचित्तमात्रकल्पितेतिवाच्यं, उपदेशरत्नाकरे द्वितीयतटे प्रथमाधिकारपष्ठगाथावृत्तौ एतदर्थान्वाख्यानदर्शनात् । तदेकदेशो यथा कामसेवनाद्याश्रवास्तु,–प्रायः स्वजातिविष्टासु, संमूर्च्छत्ययुगेंद्रियाः । स्वजातिलालासु पुनर्मूर्च्छंति चतुरिंद्रियाः ॥ १ ॥ मूर्च्छासंज्ञानुभावेन, तेऽपि त्रिचतुरिंद्रियाः । सेवंते जंतवो जंतून्मलामृतकलाभवान् ॥ २ ॥ इति वचनादसंज्ञिनां मिथुनसंज्ञानुभावादिना, संज्ञिनां तु वेदोदयादिना स्पष्टा एव, गजा हस्तिनीलुब्धा गजांतरादीन् घ्नंति, मत्स्या गलामिषलुब्धा म्रियंते, शाल्यादिकणलुब्धाः पक्षिणो जाले पतंति, हरिणसर्पगजादयो गीतवंशस्वरश्रवणरसलुब्धा म्रियंते, गजाश्च हस्तिनीलुब्धाः, गंधलुब्धा भृंगकीटिकासर्पादयः, आमिषलुब्धाः समुद्रान्तर्गतप्रतिसंतापस्थलवासिजलमनुष्याः, बर्करभक्षणार्थं यंत्रप्रविष्टव्याघ्रादयश्च, रूपलुब्धाः शलभादयश्च म्रियंतेऽपि, द्रव्यादिनिधिं सर्पा अधितिष्ठंति, निधौ दृष्टे खंजरीटा नृत्यंति, गोधेरकशिवादयश्च शब्दायंते, कीटिकाद्या अपि कणान् संगृह्णंतीत्यादि, अत्र च दृष्टांतदार्ष्टांतिकयोजना स्पष्टैवेति ॥ १३८ ॥ १४ ॥

अथ प्रमादानां पापरूपतां दर्शयंस्तत्परिहारमुपदिशन्नाह—

**पुराऽपि पापैः पतिताऽसि दुःखराशौ पुनर्मूढ! करोषि तानि ।**
**मज्जन् महापंकिलवारिपूरे, शिला निजे मूर्ध्नि गले च धत्से ॥ १३९ ॥ १५ ॥**

---

प्रमुखशब्दादन्ये चित्रकादयो ग्राह्याः, एते प्रमादैः कृत्वा यथा शोचनीयाः स्युः, कैः ?—मृतिश्च बंधश्च मृतिबंधौ तयोर्दुःखानि तैः, केचित् पंतगादयो मरणदुःखैर्हस्त्यादयस्तु वंधनदुःखैरित्यर्थः तद्वत्त्वमपि चिराय—चिरकालं शोच्यो भावी—भविता, प्रमादैरित्यत्रापि ज्ञेयमिति ॥ १३८ ॥ १४ ॥

जन्मनि जन्मनि अमूनि धनाङ्गसौख्यस्वजनप्राणलक्षणानि वस्तून्यर्थितानि—मनोऽभिलपितानि भवंति—स्युः; पुनर्द्वितीयवारमेष धर्मोऽमीभिः धनाङ्गादिभिर्दुर्लभो—दुष्प्रापोऽस्ति ॥ १४१ ॥ १७ ॥

अथाकामनिर्जरातः सकामनिर्जराया विशेषफलं दर्शयन्नुपदिशति—

**दुःखं यथा बहुविधं सहसेऽप्यकामः, कामं तथा सहसि चेत्करुणादिभावैः ।**
**अल्पीयसाऽपि तव तेन भवान्तरे स्यादात्यंतिकी सकलदुःखनिवृत्तिरेव ॥ १४२ ॥ १८ ॥**

**धनवि०**—यथाऽकामोऽपि—निर्जरावांछारहितोऽपि चतुर्गतिषु बहुविधं—छेदनभेदनशीतातपक्षुत्तृट्पारवश्यादि नानाप्रकारं दुःखं सहसे—क्षमसे, तथा चेद्—यदि कामं निर्जरावांछासहितं यथा स्यात्तथा करुणादिभावैः—मैत्रीप्रमोदकारुण्यमाध्यस्थ्यपरिणामैः सहसि, अत्र मैत्र्यादिस्वरूपं चेदं—"परहितचिंता मैत्री परदुःखविनाशिनी तथा करुणा । परसुखतुष्टिर्मुदिता परदोपोपेक्षणमुपेक्षा" ॥ १ ॥ इति,

---

धनार्थं, यथा अरे सर्प्पः अरे सर्प्प इति, च पुनरेकमार्हतं धर्मं न त्यज, न त्यज इत्यत्र तु अत्यंतमुपादेयतासूचनार्थं वीप्सावचनं, यथा अरे सुवर्णं अरे सुवर्णमिति । उभयत्रापि हेतुमाह—हि—यतः कारणाद्धर्मादमूनि—धनादीन्यर्थितानि—वाछितानि भवे भवे—जन्मनि जन्मनि भवंति, पुनरितिविशेषे अमीभिर्धनादिभिरेष धर्मो भवे भवे दुर्लभो—दुष्प्राप इति ॥ १४१ ॥ १७ ॥

**रत्न०**—अथात्मानं प्रत्यकामदुःखसहनाद्वरं सकामदुःखसहनमित्युपदिशति—दुःखं **यथेति०** व्याख्या—हे आत्मन्! यथा त्वं न विद्यते कामः—इच्छा यस्य सः अकामः सन् बहुविधमपि दुःखं सहसे, एकेंद्रियादिजन्मखिलर्थैः, तथा त्वं कामं यथा स्यात्तथा चेद्—यदि करुणादि-

इष्टवेदनीयमीहसे—वांछसि, तत्—तस्मात्प्रमादपरिहारेण तत्किंचन—तपःसंयमादि सुकृतकर्म कुरुष्व—समाचर येन सुकृतकर्मणा तव वांछितं—समीहितं भवेत्, यद्—यस्मादयमेव—मनुष्यभवार्यदेशोत्तमजातिसर्वेंद्रियपटुताशुद्धदेवगुरुधर्मप्राप्तिशास्त्रश्रवणश्रद्धानादिसामग्रीसहितः प्रत्यक्षोऽवसरः—प्रस्तावो वर्त्तते, अत्रैवकार एतत्प्रस्तावातिरिक्तप्रस्तावप्रतिषेधक इति ॥ १४० ॥ १६ ॥

अथानंतरोक्तं धर्मावसरमेव धर्मस्य दुर्लभतादर्शनेन द्रढयति—

**धनांगसौख्यस्वजनानसूनपि, त्यज त्यजैकं नच धर्ममार्हतम् ।**
**भवंति धर्माद्धि भवे भवेऽर्थितान्यमून्यमीभिः पुनरेष दुर्लभः ॥ १४१ ॥ १७ ॥**

**धनवि०**—धनं च—कनकादि अङ्गं च—शरीरं सौख्यं च—स्रक्चंदनाङ्गनादिस्पर्शजन्यमनुकूलवेदनीयं स्वजनाश्च—मातापितृभ्रातृपुत्रकलत्रादयस्ततो द्वंद्वस्तान् **धनांगसौख्यस्वजनान् त्यज**—मुंच, च पुनः **असूनपि**—प्राणानपि त्यज, च **पुनरार्हतं**—जैनं **धर्मं** श्रुतसम्यक्त्वलक्षणं विरतिलक्षणं वा **एकम्**—अद्वितीयं न **त्यज**—मा मुंचेति । हि यतः कारणाद्धर्मात्—तीर्थंकृता प्रतिपादिताचाराद्भवे भवे-

---

सुखमितिगम्यते भवेद्, यद्—यतो हेतोरयमेवावसरो—वेला आस्ते अर्थात्सुकृतस्येति "सज्झायझाणतवओसहेसु उवएसथुईपयाणेसुं । संतगुणकित्तणेसुं न हुंति पुनरुत्तदोसा उ" ॥ १ ॥ ति वचनात्पुनः पुनरुपदेशदानेऽपि पुनरुक्तदोषो नैवेति ॥ १४० ॥ १६ ॥

**रत्न०**—अथैहिकं प्राप्तं धनादि मुक्त्वा अप्राप्ताय तस्मै सुखाय कथं धर्मं करोमीत्याशंकामपाकुर्वन्नाह—**धनांगसौख्यैरिति०** व्याख्या—हे आत्मन् ! धनं—द्रव्यमंगं—शरीरं सौख्यं—सुखं स्वजना—बंधवस्तान् तथा असून्—प्राणान् त्यज त्यजेतिवीप्सायां द्विर्भावः, वीप्सा चात्यंतं हेयतासू-

द्वितीयांवः, पुनस्तज्जीवितं द्रुतं—शीघ्रं विनश्वरं—विनाशनशीलं विभावयन्—विचिंतयन् दुर्गतिदुःखतो—नरकादिवेदनातः किमिति प्रश्ने न हि विभेषि ?—न भयं गच्छसीति ॥ १४३ ॥ १९ ॥

अथ यः शास्त्रश्रवणादिना पापकर्मकरणजनितविपद्भ्यो भीतिं प्राप्नोति पापकर्माण्यपि च न त्यजति तं प्रत्युपदिशन्नाह—

**कर्माणि रे जीव ! करोषि तानि, यैस्ते भवित्र्यो विपदो ह्यनंताः ।**
**ताभ्यो भिया तद्दधसेऽधुना न किं, संभाविताभ्योऽपि भृशाकुलत्वम् ? ॥ १४४ ॥ २० ॥**

धनवि०—रे जीव ! यदि त्वं तानि कर्माणि सावद्यमार्गप्रवृत्तिलक्षणानि करोषि हीति निश्चितं यैः पापकर्मभिस्ते—तवानन्ता—बहुकालमप्यंतरहिता विपदः—आपदो भवित्र्यो, भविष्यंतीति भवित्र्य इत्यर्थः, तत्—तदा संभाविताभ्यः—संभावनाविषयीकृताभ्यस्ताभ्यो विपद्भ्यो भिया—भयेनाधुना—सांप्रतं किमिति प्रश्ने भृशाकुलत्वं ?—भृशम्—अत्यर्थमाकुलत्वं—व्यग्रत्वं दधसे ? इत्यन्वयः, दधि धारणे इत्यस्य दधसे इति प्रयोगः । भावार्थस्तु यदि त्वं पापकर्मफलं जानन्नपि पापकर्माणि कुरुषे तदा शास्त्रादिश्रवणात्तत्कर्मफलभूताभ्यः संभावितविपद्भ्यः किं व्याकुलो न भवसीति ॥ १४४ ॥ २० ॥

---

दित्यर्थः, चेति विशेषे, तत् सुखं द्रुतं—विनाशशीलं विभावयन् सन् त्वं हि निश्चितं दुर्गतीनां—तिर्यग्नरकादीनां दुःखतो—दुःखेभ्यः किं न बिभेषि ?, अपितु भेतुं युक्तमित्यर्थः, द्रुतविनश्वराल्पसुखाय कृतपापकर्मणः पापकर्मसमुत्थदुर्गतिदुःखेभ्यस्तव भयं कर्तुं युक्तमितिभावः ॥ १४३ ॥ १९ ॥

रत्न०—अथ तदेव प्रकारांतरेण कथयति—**कर्माणि रे जीव इति०** व्याख्या—रे इति निंद्यसंबोधने जीव ! त्वं तानि कर्माणि करोषि यैः

विपदाकुलता

तदाऽल्पीयसाऽपि—अतिस्तोकेनापि तेन सकामसहनेन भवान्तरे—परभवे तवात्यंतिकी—पुनःप्रादुर्भावरहिता सकलदुःखनिवृत्तिः—समस्तजन्मजरामरणाद्यनेकदुःखोच्छित्तिरेव स्यात् ॥ १४२ ॥ १८ ॥

अथ सांसारिकसुखवांछया धर्मकर्मपरिहारेण पापकर्मसु ये प्रवर्त्तंते तान् प्रत्युपदिशति——

**प्रगल्भसे कर्मसु पापकेष्वरे, यदाशया शर्म न तद्विनाऽनितम् ।**
**विभावयंस्तच्च विनश्वरं द्रुतं, बिभेषि किं दुर्गतिदुःखतो न हि? ॥ १४३ ॥ १९ ॥**

धनवि०——अरे इति तिरस्कारपूर्वकं संबोधने यस्य सुखस्याशया—अभिलाषेण पापकेषु—पापजनकेषु कर्मसु—प्राणातिपातादिषु व्यापारेषु प्रगल्भसे—पंडितो भवसि, तच्छर्म—सुखं अनितं—जीवितं विना न भवति, अत्र अनितमिति 'अन श्वसक् प्राणने' इत्यस्य प्रयोगो

---

भावैः—कृपादिपरिणामैः, आदिशब्दात्परदुःखनिवृत्तिपरसुखोत्पादनादिग्रहणं, सहसि—क्षमसे, अथवा काममिति दुःखविशेषणं, सकाममित्यर्थः, तदा तवाल्पीयसाऽपि सकामदुःखसहनेनात्यंतिकी—सकलानामेकविंशतिभेदभिन्नानां दुःखानां निवृत्तिरेवेति निश्चयेन स्यादित्यर्थः, पंचमारकोत्पन्नस्यास्मिन् जन्मनि मुक्तिगमनानर्हत्वं तेन भवांतरे इत्युक्तं, 'षहि मर्षणे' इत्यस्य सहसे इति, षहण् मर्षणे इति तु चुरादौ युजादेर्नवेति णिचो वैकल्पिकत्वात् सहसीति रूपमिति ॥ १४२ ॥ १८ ॥

रत्न०——अथ सुखाशया पापकर्मसु मा धार्ष्ट्यं कुर्विति भंग्योपदिशति—प्रगल्भसे कर्मस्विति० व्याख्या——अरे इत्याक्रोशार्थ संबोधने आत्मन्! पापकेषु कर्मसु प्रगल्भसे—धृष्टो भवसि, कया?—यस्य सुखस्याशया—वांछया शर्म—सुखं न विनाऽनितं तत्, शर्मणो भोगग्रहणा-

धनादेर-गुणकृत्त्वं

अथ पुत्रकलत्रादिप्रतिबंधेन ये पापकर्मकारिणस्तान् प्रत्युपदिशन्नाह—

यैः क्लिश्यसे यंधनवंध्ववपत्ययशःप्रभुत्वादिभिराशयस्थैः ।
कियानिह प्रेत्य च तैर्गुणस्ते, साध्यः? किमायुश्च? विचारयैवम् ॥ १४६ ॥ २२ ॥

धनवि०—यैराशयस्थैः—स्वचित्तकल्पितैर्वधनवंध्ववपत्ययशःप्रभुत्वादिभिस्त्वं क्लिश्यसे—पापकर्मभिः क्लेशं यासीति, अत्र धंधनानि—धंधनरूपाणि च तानि वंधवश्च—स्वगोत्रीया अपत्यानि च—पुत्रपुत्र्यादीनि यशांसि च दानाद्युत्थानि प्रभुत्वानि च गृहनायकत्वकुटुंबनायकत्वदेशनायकत्वादीनि तान्यादौ येषु तानि तथा तैः; अत्रादिपदात्कलत्रादीनि ग्राह्याणीति, ते—तव तैर्वंध्ववपत्यादिभिः पदार्थैरिह—अत्र भवे च पुनः प्रेत्य—परभवे कियान्—कियन्मात्रो गुणः—उपकारः साध्यः?—साधयितुं शक्य इति काकूक्त्या, च पुनरायुः—जीवितं च किं—कियन्मात्रमस्तीत्येवममुना प्रकारेणोक्तं त्वं विचारय—स्वहृदि विभावयेति । "यैः क्लिश्यसे त्वं धनवंध्ववपत्ये'ति पाठे तु धनानि च धंधवश्चेत्यादिद्वंद्वः ॥ १४६ ॥ २२ ॥

---

रत्न०—अथ यदर्थं त्वं क्लिश्यसे तैस्तव गुणो नास्तीति प्रत्युपदिशति—यैः क्लिश्यसे त्वमिति० व्याख्या—हे आत्मन्! यैर्निमित्तभूतैस्त्वं क्लिश्यसे, यदर्थं त्वं क्लेशं प्राप्नोषीत्यर्थः, यैः कैरित्याह—धनं च वंधवश्च अपत्यानि च यशश्च प्रभुत्वं च तान्यादौ येषां तानि धनवंध्ववपत्ययशःप्रभुत्वादीनि, तैः किंभूतैः?—आशये तिष्ठंतीति तानि तैः, चेतिविशेषे, तैर्धनादिभिरिह लोके च पुनः प्रेत्य—परभवे ते—तव कियान् गुणः साध्यः?, च पुनस्ते—तवायुः—जीवितं किं?—कियदित्येवं त्वं विचारय, विचार्य च तैरिहभवेऽपि परभवेऽपि न कश्चिद्गुणोऽस्तीति आयुरपि तुच्छं मत्वाऽऽत्महितं कुरुष्वेत्युपदेशः ॥ १४६ ॥ २२ ॥

अथ पुनः परलोकभीतं दर्शयन्नुपदिशति—

**ये पालिता वृद्धिमिताः सहैव, स्निग्धा भृशं स्नेहपदं च ये ते ।**
**यमेन तानप्यदयं गृहीतान्, ज्ञात्वाऽपि किं न त्वरसे हिताय ? ॥ १४५ ॥ २१ ॥**

**धनवि०**—ये पुत्रसेवकादयस्त्वया **पालिता**—हितप्रवर्त्तनादिना रक्षिताः, **च** पुनर्ये भ्रातृभगिन्यादयस्ते—तवात्मना **सहैव वृद्धिं**—शरीरपुष्टिमि**ताः**—प्राप्ताः । **च** पुनर्ये तव **भृशम्**—अत्यर्थं **स्निग्धा**—मित्राणि, **च** पुनर्ये पितृकलत्रादयस्ते—तव **स्नेहपदं**—प्रेमपात्रं, आसन्निति सर्वत्र योज्यं, **तान**पि संबंधिनो **यमेन**—कृतांतेना**दयं**—निर्दयं यथा स्यात्तथा **गृहीतान्**—स्वायत्तीकृतान् **ज्ञात्वा**ऽपि—साक्षाद् दृष्ट्वाऽपि श्रुवताऽपि वा **हिताय**—वस्त्वत आत्मनः सुखोपायाय तपःसंयमाय **किमिति** प्रश्ने **न त्वरसे** ?—किं न वेगवान् भवसीति ॥ १४५ ॥ २१ ॥

---

कर्मभिस्ते—तव विपदो—विपत्तयः अनंता—अंतरहिता भवित्र्यो—भाविन्यः तत्—तस्मात्कारणादधुना—इह भवे ताभ्यः संभाविताभ्योऽपि—चिंतिताभ्योऽपि भृशाकुलत्वं किं दधसे ?, अपितु परभवेऽपि विपदनुभवनसमये भृशाकुलत्वं दधिष्यसे इति भावः ॥ १४४ ॥ २० ॥

**रत्न०**—पुनरपि हितार्थे जीवं प्रत्युपदिशति—**ये पालिता इति०** व्याख्या—हे आत्मन् ! ये स्वजनादयस्त्वया पालिताः च पुनर्ये सहैव वृद्धिमिता—गताः ये च भृशम्—अत्यर्थं त्वयि स्निग्धाः—स्नेहवंतः ये च ते—तव स्नेहपदं—स्नेहस्य स्थानं तानपि यमेनादयं—दयारहितं यथा स्यात्तथा गृहीतान् ज्ञात्वाऽपि हितार्थं—हितं कर्तुमित्यर्थः किं न त्वरसे ?—त्वरां किं न करोषि, अपितु त्वरस्वेत्यर्थः ॥ १४५ ॥ २१ ॥

धनादेर-
गुणकृत्त्वं

अथ पुत्रकलत्रादिप्रतिबंधेन ये पापकर्मकारिणस्तान् प्रत्युपदिशन्नाह—

यैः क्लिश्यसे वंधनवंध्वपत्ययशःप्रभुत्वादिभिराशयस्थैः ।
कियानिह प्रेत्य च तैर्गुणस्ते, साध्यः ? किमायुश्च ? विचारयैवम् ॥ १४६ ॥ २२ ॥

धनवि०—यैराशयस्थैः—स्वचित्तकल्पितैर्वंधनवंध्वपत्ययशःप्रभुत्वादिभिस्त्वं क्लिश्यसे—पापकर्मभिः क्लेशं यासीति, अत्र वंधनानि—वंधनरूपाणि च तानि वंधवश्च—स्वगोत्रीया अपत्यानि च—पुत्रपुत्र्यादीनि यशांसि च दानाद्युत्थानि प्रभुत्वानि च गृहनायकत्वकुटुंबनायकत्वदेशनायकत्वादीनि तान्यादौ येषु तानि तथा तैः; अत्रादिपदात्कलत्रादीनि ग्राह्याणीति, ते—तव तैर्वंध्वपत्यादिभिः पदार्थैरिह—अत्र भवे च पुनः प्रेत्य—परभवे कियान्—कियन्मात्रो गुणः—उपकारः साध्यः ?—साधयितुं शक्य इति काकूक्त्या, च पुनरायुर्जीवितं च किं—कियन्मात्रमस्तीत्येवममुना प्रकारेणोक्तं त्वं विचारय—स्वहृदि विभावयेति । "यैः क्लिश्यसे त्वं धनवंध्वपत्ये"ति पाठे तु धनानि च वंधवश्चेत्यादिद्वंद्वः ॥ १४६ ॥ २२ ॥

रत्न०—अथ यदर्थं त्वं क्लिश्यसे तैस्तव गुणो नास्तीति प्रत्युपदिशति—यैः क्लिश्यसे त्वमिति० व्याख्या—हे आत्मन् ! यैर्निमित्तभूतैस्त्वं क्लिश्यसे, यदर्थं त्वं क्लेशं प्राप्नोषीत्यर्थः, यैः कैरित्याह—धनं च वंधवश्च अपत्यानि च यशश्च प्रभुत्वं च तान्यादौ येषां तानि धनवंध्वपत्ययशःप्रभुत्वादीनि, तैः किंभूतैः ?—आशये तिष्ठंतीति तानि तैः, चेतिविशेषे, तैर्धनादिभिरिह लोके च पुनः प्रेत्य—परभवे ते—तव कियान् गुणः साध्यः ?, च पुनस्तेतवायुः—जीवितं किं ?—कियदित्येवं त्वं विचारय, विचार्य च तैरिहभवेऽपि परभवेऽपि न कश्चिद्गुणोऽस्तीति आयुरपि तुच्छं मत्वाऽऽत्महितं कुरुष्वेत्युपदेशः ॥ १४६ ॥ २२ ॥

अथ स्वहिताचरणोपदेशमाह—

किमु मुह्यसि गत्वरैः पृथक्कृपणैर्बंधुवपुःपरिग्रहैः ।
विमृश स्वहितोपयोगिनोऽवसरेऽस्मिन् परलोकपांथ रे ॥ ! १४७ ॥ २३ ॥

धनवि०—रे परलोकपांथ ! पृथग्गत्वरैः–भिन्नभिन्नस्थानगमनशीलैः कृपणैः–तुच्छैः स्वार्थसिद्धिं यावत्सुंदरैस्तदनंतरमसुंदरैरित्यर्थो बंधुवपुःपरिग्रहैः–स्वजनतनुधनादिभिः किमिति प्रश्ने मुह्यसि ?–मोहं यासि; अस्मिन् दृश्यमानमानुष्यादिसमग्रसामग्रीसहितेऽवसरे–प्रस्तावे स्वहितोपयोगिनो–निजसुखोपायहेतून् पदार्थान् श्रीजिनधर्माचरणलक्षणान् विमृश–विचिंतय; अत्र परलोकपांथ रे इति संबोधनपदेन पृथग्गत्वरैरितिपदेन चानित्यताभावना द्योत्यते ॥ १४७ ॥ २३ ॥

अथ पुराकृतपुण्यानुभावेन सुखमनुभवंतमात्मानमुपदिशति—

सुखमास्से सुखं शेषे, भुंक्षे पिबसि खेलसि ।
न जाने त्वग्रतः पुण्यैर्विना किं ते भविष्यति ? ॥ १४८ ॥ ॥ २४ ॥

धनवि०—हे आत्मन् ! त्वं सुखं यथा स्यात्तथा सुखासनसिंहासनभद्रासनादौ आस्से–उपविशसि, 'आसिकृ उपवेशने' इत्यस्यायं प्रयोगः,

---

रत्न०—अथ स्वजनादिषु मोहं संत्यज्य हितोपयोगिषु विचारायोपदिशति–किमु मुह्यसीति० व्याख्या—रे परलोकपांथ !–रे परलोकपथिक बंधवश्च वपुश्च परिग्रहश्च तैः किमु इति ?–किं मुह्यसि–मोहं प्राप्नोषि, अपितु मा मुह्य, यतः किंभूतैः ?–गत्वरैः–गमनशीलैः, कथं ?–पृथग्–भिन्नभिन्नस्थाने, पुनः कीदृशैः ?–कृपणैः–दीनैः परभवे सुखकरणासमर्थैः, अस्मिन्नवसरे परलोकगमनावसरे इत्यर्थः स्वस्य हितोपयोगिनः प्रति विमृश–विचारय, परलोकहितोपयोगिनो ज्ञानदर्शनचारित्रादिगुणान् विचारयेत्यर्थः ॥ १४७ ॥ २३ ॥

च पुनः **सुखं शेषे**—पल्यंकपट्टिकादौ स्वपिषि, च पुनः **सुखं भुंक्षे**—शालिदाल्यादिकं भक्ष्यसि, च पुनः **सुखं पिबसि**—कर्पूरादिवासितं शीतलजलं मदिरादि वा पानविषयीकरोषि, च पुनः **सुखं खेलसि**—गजतुरंगादिभिरक्षकंदुकादिभिर्वा क्रीडसि; तु पुनरहमेवं **न जाने**—न वेद्मि **अग्रतः**—अग्रेतनभवे **पुण्यैः**—इहभवकृतसुकृतैर्विना **किं**—सुखासनसुखशयनादिमध्ये किं वस्तु **ते**—तव **भविष्यति ?** ॥१४८॥२४॥

पुनः प्रकारान्तरेण विमर्शं दर्शयन्नात्मैवात्मानमुपदिशति—

**शीतात्तापान्मक्षिकाकत्तृणादिस्पर्शाद्युत्थात् कष्टतोऽल्पाद्बिभेषि ।**
**तास्ताश्चैभिः कर्मभिः स्वीकरोषि, श्वभ्रादीनां वेदना धिग्धियं ते ॥ १४९ ॥ २५ ॥**

**धनवि०**—**त्वमल्पात्**—स्तोकात् स्तोककालीनाद्वा **शीतात्**—शीतर्तुप्रभवाच्छैत्यात् च पुनस्**तापात्**—उष्णर्तुप्रभवाद् घर्मतः च पुन**र्मक्षिकाकत्तृणादिस्पर्शाद्युत्थात्कष्टाद्बिभेषि**—भयं यासीति, अत्र मक्षिका प्रसिद्धा **कत्तृणं** च—तृणविशेषस्ते आदौ येषां ते तथा तेषां **स्पर्शः**—

---

**रत्न०**—अथ सांप्रतं सुखेन विलसतस्तवाग्रे किं भविष्यतीति ज्ञापयति—**सुखमास्से०** इति व्याख्या—हे आत्मन्! त्वं सांप्रतं संपन्मुदितः सन् सुखं यथा स्यात्तथा आस्से—उपविशसि तथा सुखं शेषे—स्वपिषि तथा सुखं भुंक्षे—भुक्तिं करोषि तथा पिबसि मद्यादि, सुखमिति क्रियाविशेषणं सर्वत्र योज्यं, तथा खेलसि—द्यूतक्रीडामृगयादि रमसे, परमग्रतो भवे ते—तव पुण्यैर्विना किं? भविष्यतीति, अहं तु जाने आगमानुमानाभ्यां महत्कष्टं भविष्यतीति, जानतोऽपि ग्रंथकर्त्तुरिदमुदासीनं वचः, अथवा छद्मस्थत्वात्सम्यक्तया न जाने इत्यपि, तथेयताऽप्युपदेशेनाप्रतिबुध्यमानं जीवं प्रति निरादरतावचनं वा ॥ १४८ ॥ २४ ॥

**रत्न०**—अथ स्वल्पात्कष्टाद्बिभेषि महत्कष्टमंगीकरोषीत्युपदिशति—**शीतात्तापादिति०** व्याख्या—हे आत्मन्! त्वं शीताद्बिभेषि—भयमाप्नोषि

अथ स्वहिताचरणोपदेशमाह—

किमु मुह्यसि गत्वरैः पृथक्कृपणैर्बंधुवपुःपरिग्रहैः ।
विमृश स्वहितोपयोगिनोऽवसरेऽस्मिन् परलोकपांथ रे ॥ ! १४७ ॥ २३ ॥

धनवि०—रे परलोकपांथ ! पृथग्गत्वरैः—भिन्नभिन्नस्थानगमनशीलैः कृपणैः—तुच्छैः स्वार्थसिद्धिं यावत्सुंदरैस्तदनंतरमसुंदरैरित्यर्थो बंधुवपुःपरिग्रहैः—स्वजनतनुधनादिभिः किमिति प्रश्ने मुह्यसि ?—मोहं यासि; अस्मिन् दृश्यमानमानुष्यादिसमग्रसामग्रीसहितेऽवसरे—प्रस्तावे स्वहितोपयोगिनो—निजसुखोपायहेतून् पदार्थान् श्रीजिनधर्माचरणलक्षणान् विमृश—विचिंतय; अत्र परलोकपांथ रे इति संबोधनपदेन पृथग्गत्वरैरितिपदेन चानित्यताभावना द्योत्यते ॥ १४७ ॥ २३ ॥

अथ पुराकृतपुण्यानुभावेन सुखमनुभवंतमात्मानमुपदिशति—

सुखमास्से सुखं शेषे, भुंक्षे पिबसि खेलसि ।
न जाने त्वग्रतः पुण्यैर्विना किं ते भविष्यति ? ॥ १४८ ॥ ॥ २४ ॥

धनवि०—हे आत्मन् ! त्वं सुखं यथा स्यात्तथा सुखासनसिंहासनभद्रासनादौ आस्से—उपविशसि, 'आसिङ् उपवेशने' इत्यस्यायं प्रयोगः,

---

रत्न०—अथ स्वजनादिषु मोहं संत्यज्य हितोपयोगिषु विचारायोपदिशति—किमु मुह्यसीति० व्याख्या—रे परलोकपांथ !—रे परलोकपथिक बंधवश्च वपुश्च परिग्रहश्च तैः किमु इति ?—किं मुह्यसि—मोहं प्राप्नोषि, अपितु मा मुह्य, यतः किंभूतैः ?—गत्वरैः—गमनशीलैः, कथं ?—पृथग्—भिन्नभिन्नस्थाने, पुनः कीदृशैः ?—कृपणैः—दीनैः परभवे सुखकरणासमर्थैः, अस्मिन्नवसरे परलोकगमनावसरे इत्यर्थः स्वस्य हितोपयोगिनः प्रति विमृश—विचारय, परलोकहितोपयोगिनो ज्ञानदर्शनचारित्रादिगुणान् विचारयेत्यर्थः ॥ १४७ ॥ २३ ॥

त्मानं कलुषीकरोषि, अत्राद्यपदेन क्वचिच्छास्त्रार्थश्रवणादौ मौढ्यादिभिराशातनाकरणेनात्मानं कलुषीकरोषीत्यपि सूचितं, च पुनरधर्मा गम्नरकात्यसिद्धान्न बिभेषि—न भयं प्राप्नोषीत्यर्थः, तत्र न विद्यते धर्मो—देशविरतिलक्षणः सर्वविरतिलक्षणः सम्यक्त्वलक्षणो दानादिलक्षणो वा यस्य सः अधर्मा, पाप्मानित्यर्थः, 'द्विपदाद्धर्माद्'निति (७-३-१४१) साधुः, अत एवात्मानं कलंकयंतं धर्मविरहितं नरकेभ्यो निर्भयं त्वां धिगस्त्वित्यर्थः, एतावता तिरस्कारेण कषायादिप्रमादरहितः सन् धर्मं कुर्वित्यर्थतो दर्शितमिति ॥ १५० ॥ २६ ॥

इति श्रीतपोगच्छनायकश्रीमुनिसुंदरसूरिनिर्मितस्याध्यात्मकल्पद्रुमस्याधिरोहणीटीकायां श्रीधनविजयगणिविरचितायां सामान्यतो वैराग्योपदेशनाम्नी दशमी पदपद्धतिः ॥ १० ॥

कषायैः—क्रोधमानमायालोभैः, कथं ?—क्वचित्—क्वचन प्रमादैः—मद्यादिभिः क्वापि च कदाग्रहैः—कुत्सितहठैः कुमतोपदेशादिभिरित्यर्थः क्वापि च मत्सराद्यैः, उमरुकमणिन्यायेन क्वापि चेत्यत्रापि योज्यं, आद्यशब्देनाष्टादशपापस्थानकाना ग्रहणं, परं त्वं परभवे नरकान्नो बिभेषि, त्वं किं०?—न विद्यते धर्मो यस्य सोऽधर्मा, समासे धर्मशब्दादन्प्रत्यये सिद्धं, ततस्त्वामविचारकत्वाद्धिगस्त्विति ॥ १५० ॥ २६ ॥ इति दशमोऽधिकारः ॥

श्रीशांतिचंद्रवरवाचकदुग्धसिंधुलब्धप्रतिष्ठवरवाचकरत्नचंद्रः। अध्यात्मकल्पफलदस्य चकार वृत्तिं, तस्या गतो विवृतितो दशमोऽधिकारः ॥ १० ॥

त्वगिंद्रियग्राह्योऽनिष्टगुणविशेषः स आदौ येषां ते तथा तेभ्य उत्था–उत्थानं यस्य स तथा तस्मान्मक्षिकाकत्तृणादिस्पर्शाद्युत्थात्, कत्तृणादीत्यत्रादिपदात्कर्करादिकर्कशवस्तुपरिग्रहः, स्पर्शादीत्यत्रादिपदाद्रूसदुर्गंधादिपरिग्रहः, च पुनरेभिः प्रत्यक्षतः क्रियमाणैः कर्मभिः–पापण्यापारैस्तास्ता जगत्प्रसिद्धाः श्वभ्रादीनामादिपदात्तिरश्चां वेदना–दुस्सहपीडाः स्वीकरोपि–अङ्गीकरोपीत्यन्वयः; तेन कारणेनाल्पकष्टाङ्गीतस्य पापकर्मकरणेनाङ्गीकृतनारकवेदनस्य ते–तव धियं–बुद्धिं प्रति धिगस्तु–तिरस्कारोऽस्तु ॥ १४९ ॥ २५ ॥

अथ सामान्यतो वैराग्यद्वारमुपसंहरन् तिरस्कारपूर्वकं कपायादिसकलकलंकनिरासार्थमात्मानमुपदिशति—

**क्वचित् कषायैः क्वचन प्रमादैः, कदाग्रहैः क्वापि समत्सराद्यैः।**
**आत्मानमात्मन्! कलुषीकरोषि, बिभेषि धिग्नो नरकादधर्मा ॥ १५० ॥२६ ॥**

**धनवि०**—हे आत्मन्! त्वं क्वचित्परीषहसहनादौ कषायैः क्रोधादिभिरात्मानं–स्वं कलुषीकरोषि–मलिनीकुरुषे, तथा क्वचन क्रियानुष्ठानादौ प्रमादैः–मद्यादिभिरात्मानं कलुपीकरोषि, क्वापि शास्त्रार्थप्ररूपणादौ समत्सराद्यैः कदाग्रहैः–मिथ्याभिनिवेशाद्यैरसद्ग्रहैरा-

---

तथा तापात्, तथा मक्षिका कत्तृणानि च तान्यादौ येषां तानि मक्षिकाकत्तृणादीनि तेषां स्पर्शाद्युत्थात्–स्पर्शादिजातात्कष्टतस्त्वं बिभेषि, किंलक्षणाद्?–अल्पाद्–अल्पतः, कुत्सितानि तृणानि कत्तृणानि–दुःस्पर्शानि दर्भादीनि, आदिशब्देनावनतोन्नतभूमिकाप्रस्तरादिग्रहणं, चेति विशेषे, एभिर्जीवहिंसादिपापकर्मभिस्तास्ता वक्तुमशक्याः किं पुनरनुभवितुमित्यर्थः श्वभ्रादीनां–नरकादीनां वेदनाः प्रति स्वीकरोषि, अर्जयसीत्यर्थः, आदिशब्देन तिरश्चां वेदनाग्रहणं, ततस्तवात्मन्! धियं प्रति–बुद्धिं प्रति धिगस्त्विति ॥ १४९ ॥ २५ ॥

**रत्न०**—एतदेव प्रकारांतरेणाचष्टे–**क्वचित्कषायैरिति०**—हे आत्मन्! त्वमात्मानं स्वं प्रति किं कलुषीकरोषि?–मलिनीकरोषि, कैः?–

करोषि; हि यतः कारणान्मिश्रितं—रोगोत्पादकद्रव्येण संपृक्तं औषधं—रोगापहारि भेषजमामयापहं—रोगोच्छेदकं न भवतीति; भावार्थस्तु यथौषधं विरुद्धौषधमिश्रितं रोगापहाराय न भवति तथा प्रमादादिभिः कलुषितो धर्मः संसारविनाशाय न भवतीति ॥ १५१ ॥ १ ॥

शैथिल्यादित्यागः

अथात्र चिरंतनग्रन्थसन्मतिं दर्शयितुमाह—

**यतः—शैथिल्यमात्सर्यकदाग्रहक्रुधोऽनुतापदंभाविधिगौरवाणि च ।**
**प्रमादमानौ कुगुरुः कुसंगतिः, श्लाघार्थिता वा सुकृते मला इमे ॥ १५२ ॥ २ ॥**

धनवि०—यत इति यतः कारणात्पूर्वाचार्यैरिति प्रतिपादितमस्तीत्यर्थः, इमे नामग्राहं वक्ष्यमाणाः **सुकृते**—पुण्यकर्मणि **मला**—मलप्राया वस्तुशोभापहारिणो भवंतीत्यर्थः, तानेव नामग्राहं दर्शयति—**शैथिल्यं** च—क्रियायां शिथिलता प्रमादो वा **मात्सर्यं** च—परगुणासहनं **कदाग्रह**श्च—असद्ग्रहदार्ढ्यं **क्रुच्च**—क्रोधस्ततो द्वंद्वे **शैथिल्यमात्सर्यकदाग्रहक्रुधः**, च पुनरनुतापश्च—धर्मकर्मकरणानंतरं पश्चात्तापो दंभश्च—धर्मकर्मणि माया विधिश्च—शास्त्रोक्तमर्यादया प्रवर्त्तनं तदभावोऽविधिः **गौरवं** च—मयेदं सुकृतं कृतं ततोऽहं महानिति स्वयं चिंतनं लोके महत्त्वप्राप्तये परेषां पुरस्तात्प्रकाशनं वा, ततो द्वंद्वे **अनुतापदंभाविधिगौरवाणि**; च पुनः प्रमादश्च मानश्च **प्रमादमानौ**

---

परसपरयसहनं तदादिकारणैरित्यर्थः, एतद्दृष्टांतेन द्रढयति—हि निश्चितं विरुद्धद्रव्यै—रेण्वादिभिर्मिश्रितमौषधं आमयापहं—रोगहंतृ न स्यात् तथा प्रमादादिभिः कलुषितो धर्मो भवापायविनाशनाय न स्यादित्यर्थः ॥ १५१ ॥ १ ॥

रत्न०—अथ सुकृते मलानभिधित्सुराह—**शैथिल्यमात्सर्येति०** व्याख्या—सुकृते—धर्मे इमे मला भवंति, इमे के इत्याह—शैथिल्यं—शिथिलता धर्मे अदार्ढ्यं तथा मात्सर्य—गुणिषु मत्सरकरणं कदाग्रहः—कुत्सितहठः क्रुध्—कोपः द्वंद्वसमासे ताः शैथिल्यमात्सर्यकदाग्रहक्रुधः, तथा अनुतापः—

## ११ धर्मशुद्ध्युपदेशाधिकारः ।

अथानंतरमुक्तः सामान्यतो वैराग्यस्योपदेशः, तच्च वैराग्यं शुद्धधर्मवासनाधीनं भवतीत्यवसरायातं धर्मशुद्ध्युपदेशद्वारमुपदर्शयन्नाह—

**अथ धर्मशुद्ध्युपदेशः ॥**

अथ धर्मशुद्ध्युपदेश इति, स्पष्टं । तत्रापि प्रथमं शुद्ध एव धर्मो भवापायविनाशनाय भवतीति धर्मशुद्धिमुपदिशति—

**भवेद्भवापायविनाशनाय, तमज्ञ! धर्मं कलुषीकरोषि किम्? ।**
**प्रमादमानोपधिकारणादिभिर्न मिश्रितं ह्यौषधमामयापहम् ॥ १५१ ॥ १ ॥**

**धनवि०**—यो धर्मो **भवापायविनाशनाय**—भवः—संसारस्तत्संबंधिनो येऽपाया—जन्मजरामरणलक्षणा उपद्रवास्तेषां विनाशनाय—विध्वंसाय **भवेदिति, हे अज्ञ!**—हे मूर्ख, **तं धर्मं,** प्रमादश्च प्रसिद्धो मानश्च—अहंकारः उपधिश्च—माया ततो द्वंद्वस्ते एव कारणानि—निमित्तान्यादौ—प्रथमं येषां तानि तथा तैः **प्रमादमानोपधिकारणादिभिः,** आदिपदाल्लोभप्रभृतिभिश्च, किमिति प्रश्ने **कलुषीकरोषि?**—मलिनी-

---

**रत्न०**—अथैकादशो धर्मसदुपदेशाख्योऽधिकारो व्याख्यातुं प्रस्तूयते—अथेदृशं धर्ममेभिर्मा मलिनीकुर्वित्युपदिशति—**भवेद्भवापायेति०** व्याख्या—यो भवे—संसारे अपाया—विघ्नास्तेषां विनाशनाय भवेत् हे अज्ञ !—हे मूर्ख, तं धर्मं किं कलुषीकरोषि ?, अपितु मा कलुषीकुरु, कैः ?—प्रमादश्च मानश्च उपधिश्च मत्सरश्च प्रमादमानोपधिमत्सरास्ते आदौ येषां तानि तैः, प्रमादो—मद्यादिः मानः—अहंकारः उपधिः—छद्म मत्सरः—

गुणस्तुत्यादौ प्रमोदादिफलं

रोज्झीति—गतमत्सरः सन् तेषां परेषामिमां गुणप्रशंसां संतनु—सम्यक्प्रकारेण तनु—विस्तारय, यद्—यस्मात्त्वं तां गुणप्रशंसां लभेथाः—प्राप्नुयाः, हि यतः कारणादिष्टदानाद्विना—अभिलषणीयवस्तुवितरणमंतरेणेष्टलाभः—स्पृहणीयवस्तुप्राप्तिर्न स्यादिति ॥ १५३ ॥ ३ ॥

अथ स्वगुणप्रशंसां परनिंदां च निषेधयन्नुपदिशति—

जनेषु गृह्णत्सु गुणान् प्रमोदसे, ततो भवित्री गुणरिक्तता तव ।
गृह्णत्सु दोषान् परितप्यसे च चेद्, भवंतु दोषास्त्वयि सुस्थिरास्तव ॥ १५४ ॥ ४ ॥

धनवि०—जनेषु—लोकेषु तव गुणान्—दातृताज्ञातृतातपस्वितासुस्वरतादिधर्मान् गृह्णत्सु—स्तुतिकरणादिना स्वीकुर्वत्सु प्रमोदसे—हृष्यसि, ततो गुणग्रहणजनितप्रमोदात्तव गुणरिक्तता—गुणशून्यता भवित्री—भाविनी; च पुनश्चेद्—यदि तव दोषान्—अज्ञातृत्वादीन्

---

यद्वा तथा परेषां जनाना स्वगुणप्रशंसा इष्टा वर्त्तते इति हेतोस्त्वं तेषा इमां गुणप्रशंसा संतनु—सम्यग्विस्तारय, कुर्वित्यर्थः, त्वं किं० ?—मत्सरं—परगुणोत्कर्षासहनलक्षणमुज्झसि—त्यजसीत्येवंशीलो मत्सरोज्झी अर्थात्परेषामेवेति, यद्—यस्मात्कारणात्तां स्वगुणप्रशंसां लभेथाः—प्राप्नुयाः, हि यस्मात्कारणादिष्टस्य—वांछितस्य दानाद्विना इष्टस्य—वांछितस्य लाभो न भवतीति ॥ १५३ ॥ ३ ॥

रत्न०—अथ कियत्सु काव्येषु स्वगुणप्रशंसेच्छाया दोषमाह—जनेषु गृह्णत्स्विति० व्याख्या—हे आत्मन् ! यतो—यस्मात् कारणात्त्वं तव गुणान् प्रति जनेषु गृह्णत्सु प्रमोदसे—हर्षं प्राप्नोषि ततो हेतोस्तव स्वगुणैः कृत्वा रिक्तता—राहित्यं भवित्री—भवनशीला, च पुनश्चेद्—यदि तव

प्रसिद्धौ; च पुनः **कुगुरुः**—सम्यग्ज्ञानदर्शनचारित्ररहितो धर्माचार्यः **कुसंगतिः**—नटविटादिभिरुत्सूत्रभाषिभिर्वा सह मिलनं, च पुनः **श्लाघार्थिता**—परकृतस्वप्रशंसास्पृहालुता, **वा** इति पूर्वोक्तसर्वसमुच्चये । भावार्थस्तु इमे शैथिल्यादयः सर्वेऽपि पुण्यकर्मणि कृते क्रियमाणे वा दोषाः यथेप्सितफलसाधका न भवंतीति ॥ १५२ ॥ २ ॥

अनंतरं स्वश्लाघार्थिता समत्सरता च मलत्वेनोक्ता तेन तत्परिहारेण धर्मशुद्धिमुपदिशति—

**यथा तवेष्टा स्वगुणप्रशंसा, तथा परेषामिति मत्सरोज्झी ।**
**तेषामिमां संतनु यल्लभेथास्तां नेष्टदानाद्धि विनेष्टलाभः ॥ १५३ ॥ ३ ॥**

**धनवि०—यथा**—येन प्रकारेण **तव स्वगुणप्रशंसा**—स्वस्य—निजस्य गुणा—ज्ञानविज्ञानादयस्तेषां प्रशंसा—श्लाघा **इष्टा**—स्पृहणीया वर्त्तते, **तथा**—तेन प्रकारेण **परेषां**—आत्मव्यतिरिक्तानामन्येषां स्वगुणप्रशंसा इष्टा वर्त्तते, इति हेतोस्त्वं मत्सरमुज्झतीति—त्यजतीति **मत्स-**

---

पश्चात्तापः दानादिधर्मं कृत्वा पश्चात्तापकरणं हा मया बहु दत्तं वृथा तपः कृतमित्यादि, च पुनर्दंभः—कपटमविधिः—अनाचारः गुरोर्भावो गौरवं—गुरुत्व द्वंद्वसमासे तानि तथा प्रमादः—अनवधानता मानः—चित्तोन्नतिस्तौ तथा कुत्सितो गुरुः—धर्मोपदेष्टा प्रस्तरोपमानः स्वयं निमज्जन् परानपि निमज्जयतीतिलक्षणः, कु—कुत्सिता संगतिः, मद्यपकुमत्यादीनां संगतिरित्यर्थः, श्लाघा—प्रशंसा तस्या अर्थित्वं वांछकत्वं—दानादि ददानस्य मम कश्चित् श्लाघां करोति नवेति स्पृहयालुत्वं, वा पुनरर्थे, एभिर्धर्मो मलिनो भवतीति ॥ १५२ ॥ २ ॥

**रत्न०**—अथ स्वगुणश्लाघेच्छुः परगुणप्रशंसां कुर्विंत्युपदिशति—**यथा तवेष्टेति०** व्याख्या—हे आत्मन् ! यथा तव स्वगुणप्रशंसा इष्टा—

रोऽज्ञीति—गतमत्सरः सन् तेषां परेषामिमां गुणप्रशंसां संतनु—सम्यक्प्रकारेण तनु—विस्तारय, यद्—यस्मात्त्वं तां गुणप्रशंसां लभेथाः—प्राप्नुयाः, हि यतः कारणादिष्टदानाद्विना—अभिलषणीयवस्तुवितरणमंतरेणेष्टलाभः—स्पृहणीयवस्तुप्राप्तिर्न स्यादिति ॥ १५३ ॥ ३ ॥

गुणस्तुत्यादौ प्रमोदादिफलं

अथ स्वगुणप्रशंसां परनिंदां च निषेधयन्नुपदिशति—

जनेषु गृह्णत्सु गुणान् प्रमोदसे, ततो भवित्री गुणरिक्तता तव ।
गृह्णत्सु दोषान् परितप्यसे च चेद्, भवंतु दोषास्त्वयि सुस्थिरास्तव ॥ १५४ ॥ ४ ॥

धनवि०—जनेषु—लोकेषु तव गुणान्—दातृताज्ञातृतातपस्वितासुस्वरतादिधर्मान् गृह्णत्सु—स्तुतिकरणादिना स्वीकुर्वत्सु प्रमोदसे—हृष्यसि, ततो गुणग्रहणजनितप्रमोदात्तव गुणरिक्तता—गुणशून्यता भवित्री—भाविनी; च पुनश्चेद्—यदि तव दोषान्—अज्ञातृत्वादीन्

---

यदा तथा परेषा जनानां स्वगुणप्रशंसा इष्टा वर्त्तते इति हेतोस्त्वं तेषा इमा गुणप्रशंसा संतनु—सम्यग्विस्तारय, कुर्वित्यर्थः, त्वं किं० ?—मत्सरं—परगुणोत्कर्षासहनलक्षणगुरुंऽसि—त्यजसीत्येवंशीलो मत्सरोज्झी अर्थात्परेषामेवेति, यद्—यस्मात्कारणात्तां स्वगुणप्रशंसा लभेथाः—प्राप्नुयाः, हि यस्मात्कारणादिष्टस्य—वाञ्छितस्य दानाद्विना इष्टस्य—वांछितस्य लाभो न भवतीति ॥ १५३ ॥ ३ ॥

रत्न०—अथ विषयेषु काव्येषु स्वगुणप्रशंसेच्छायां दोषमाह—जनेषु गृह्णत्स्विति० व्याख्या—हे आत्मन्! यतो—यस्मात् कारणात्त्वं तव गुणान् प्रति जनेषु गृह्णत्सु प्रमोदसे—हर्षं प्राप्नोषि ततो हेतोस्तव स्वगुणैः कृत्वा रिक्तता—राहित्यं भवित्री—भवनशीला, च पुनश्चेद्—यदि तव

गृह्णत्सु—निंदाकरणादिना स्वीकुर्वत्सु **परितप्यसे**—परितापमाप्नोषि, परिपूर्वस्य तपिच् ऐश्वर्ये इत्यस्य प्रयोगः, **तदा तव दोषास्त्वयि सुस्थिराः**—सुनिश्चला **भवंत्विति** ॥ १५४ ॥ ४ ॥

अथ स्वपरस्तुतौ स्वपरनिंदायां च समताभावकरणद्वारा मत्सरपरिहारोपदेशगर्भां धर्मशुद्धिमुपदिशति—

**प्रमोदसे स्वस्य यथाऽन्यनिर्मितैः, स्तवैस्तथा चेत्प्रतिपंथिनामपि ।**
**विगर्हणैः स्वस्य यथोपतप्यसे, तथा रिपूणामपि चेत्ततोऽसि वित् ॥ १५५ ॥ ५ ॥**

**धनवि०**—त्वं **यथा**—येन प्रकारेणा**न्यनिर्मितैः**—परकृतैः **स्वस्य**—निजस्य **स्तवैः मोदसे**—हृष्यसि, **चेद्**—यदि **तथा**—तेन प्रकारेण परनिर्मितैः **प्रतिपंथिनां**—स्वद्वैरिणामपि **स्तवैः**—गुणप्रशंसनैः **प्रमोदसे**, च पुनर्यथा **स्वस्य**—निजस्य **विगर्हणैः**—निंदाकरणैरुपतप्यसे—खिद्यसे, **चेद्**—यदि **तथा**—तेन प्रकारेण **रिपूणामपि** विगर्हणैरुपतप्यसे **ततः**—तदा त्वं **विद्**—वेत्तीति वित्—पंडि**तोऽसीति** ॥१५५॥५॥

---

दोषान्—अपगुणान् जनेषु गृह्णत्सु परितापमुपैषि ततो हेतोस्त्वयि दोषाः सुस्थिराः—सुनिश्चला भवंतु, तेन स्वगुणप्रशंसायां प्रमोदं मा कुरु, स्वदोपजल्पने च परितापं मा कुर्वित्यर्थः ॥ १५४ ॥ ४ ॥

**रत्न०—प्रमोदसे स्वस्येति०** व्याख्या—हे आत्मन् ! स्वस्यान्यैर्निर्मितैः—कृतैः स्तवैः—स्तवनैः कृत्वा प्रमोदसे—हर्षं—दधसे तथा चेद्—यदि प्रतिपंथिनां—वैरिणामपि स्तवैः प्रमोदसे, अन्यच्च स्वस्य विगर्हणैः—निन्दाभिरुपतप्यसे तथा रिपूणामपि विगर्हणैरुपतप्यसे ततः—तर्हि त्वं वेत्सीति विद्—विद्वानसीत्यर्थः, उपतप्यसे कर्मकर्तरिप्रयोगे साधुः ॥ १५५ ॥ ५ ॥

उक्तमेवार्थं प्रकारान्तरेण दर्शयितुमाह—"अथवा"

स्तवैर्यथा स्वस्य विगर्हणैश्च, प्रमोदतापौ भजसे तथा चेत् ।
इमौ परेषामपि तैश्चतुर्ष्वप्युदासतां वाऽसि ततोऽर्थवेदी ॥ १५६ ॥ ६ ॥ इति वा पाठः ।

धन०—स्तवैरिति, यथा स्वस्य स्तवैः च पुनः स्वस्य विगर्हणैः प्रमोदतापौ—हर्षविषादौ भजसे—प्रतिपद्यसे, तथा—तेन प्रकारेण परेषां—रिपूणामपि तैः स्तवविगर्हणैश्च चेद्—यदीमौ प्रमोदतापौ भजसे, वा—अथवा चतुर्ष्वपि—स्वीयस्तव १ स्वीयगर्हण २ परकीयस्तव ३ परकीयविगर्हणेष्वप्युदासताम्—औदासीन्यं भजसे ततः—तदा भवानर्थवेदी—अर्थं—परमार्थं वेत्तीत्यर्थवेदी, परमार्थज्ञोऽसीत्यर्थः ॥ १५६ ॥ ६ ॥ इति वा पाठ इति स्पष्टं ॥

अथ श्लाघार्थितायां दोषं गुणाभावं च दर्शयन् धर्मशुद्धिमुपदिशन्नाह—

भवेन्न कोऽपि स्तुतिमात्रतो गुणी, ख्यात्या न बह्वथाऽपि हितं परत्र च ।
तदिच्छुरीर्ष्यादिभिरायतिं ततो, मुधाऽभिमानग्रहिलो निहंसि किम्? ॥ १५७ ॥ ७ ॥

---

रत्न०—अथैनमेवार्थं पाठान्तरेणाह—स्तवैर्यथेति० व्याख्या—हे आत्मन्! त्वं यथा स्वस्य स्तवैश्च पुनः स्वस्य विगर्हणैः प्रमोदतापौ—हर्षपरितापौ भजसे तथा चेद्—यदि परेषां तैः स्तवविगर्हणैश्चेमौ प्रमोदतापौ त्वं भजसे वा—अथवा स्तवविगर्हणप्रमोदतापेषु चतुर्ष्वप्युदासतां—निःस्पृहितां भजसे ततः—तर्हि त्वमर्थं—परमार्थं वेत्सीत्यर्थवेद्यसीति ॥ १५६ ॥ ६ ॥

धनवि०—कोऽपि पुमान् स्तुतिमात्रतः—केवलायाः परकृतप्रशंसाया गुणी—गुणवान्न भवेत्, च पुनर्बह्व्याऽपि—भूयस्याऽपि ख्यात्या—अयं गुणवानिति प्रसिद्ध्या परत्र—परभवे हितं—सुखोपायो न भवेत्; ततः कारणात्तदिच्छुः—तत् परत्रहितमेषणशीलस्त्व-मीर्ष्यादिभिः, आदिपदादसूयादिभिश्च आयतिम्—उत्तरकालं मुधा—निरर्थकमभिमानग्रहिलः—अहंकारग्रस्तः सन् किं निहंसि ?—किं विनाशयसीत्यर्थः ॥ १५७ ॥ ७ ॥

अथाशुद्धधर्मकर्त्तारो भूयांसः शुद्धधर्मकर्त्तारश्चाल्पीयांस इति ख्यापयन् पुनर्धर्मशुद्धिमुपदिशति—

सृजंति के के न बहिर्मुखा जनाः, प्रमादमात्सर्यकुबोधविप्लुताः ।
दानादिधर्माणि मलीमसान्यमून्युपेक्ष्य शुद्धं सुकृतं चराण्वपि ॥ १५८ ॥ ८ ॥

धनवि०—प्रमादमात्सर्ये च प्रसिद्धे कुबोधश्च—मिथ्यात्वं तैर्विप्लुता—उपद्रुताः प्रेरिता वा बहिर्मुखाः—प्राकृतजना बाह्यदृष्टयो दाना-दिधर्माणि मलीमसानि—अतिशयेन मलिनानि के के न सृजंति ?—न कुर्वंति—अपि तु प्रायः सर्वेऽपि कुर्वंतीत्यर्थः, धर्माणीत्यत्र धर्मशब्दस्य

---

रत्न०—पाठांतरं—भवेन्न कोऽपीति० व्याख्या—हे आत्मन् ! केवलं स्तुतिः स्तुतिमात्रं तस्माद्गुणी—गुणवान्न कोऽपि भवेत्, तथा बह्व्याऽपि—भूयस्याऽपि ख्यात्या—प्रसिद्ध्या परत्र—परस्मिन् जन्मनि हितं न भवेत्, ततो हेतोर्मुधा—वृथा अभिमानेन ग्रहिलः सन् आयतिम्—उत्तरकालं किं निहंसि ?, अपितु मा जहीत्यर्थः, कैः ?—ईर्ष्यादिभिः, आदिशब्देन क्रोधादिग्रहणं, त्वं कि० ?—तद्—हितमिच्छसीति तदिच्छुरिति ॥ १५७ ॥ ७ ॥

रत्न०—अथ दानादिधर्मं मलिनं मा कुर्वित्याह—सृजंति के के नेति०, व्याख्या—हे आत्मन् ! के के बहिर्मुखं येषां ते बहिर्मुखा—यत्तत्प्रला-पिन इत्यर्थः दानादिधर्माणि प्रति मलीमसानि—मलिनानि, न सृजंति ?—न कुर्वंति, अपि तु सर्वेऽपि बहिर्मुखाः सृजंतीत्यर्थः, यतः किं० ?—प्रमादो—

नपुंसकता 'धर्मं दानादिके' इति लिंगानुशासनवचनात्; तेन हेतुनामूनि मलीमसानि दानादिधर्माण्युपेक्ष्य—उपेक्षाविषयीकृत्य शुद्धं—श्लाघार्थितादोषरहितं सुकृतं—पुण्यं अण्वपि—स्तोकमपि चर—समाचरेति ॥ १५८ ॥ ८ ॥

आच्छादितपुण्यं

अथ धर्मकरणे श्लाघार्थितालक्षणदोषनिवृत्तये दृष्टांतदर्शनपूर्वकं धर्मशुद्धिमुपदिशति—

**आच्छादितानि सुकृतानि यथा दधंते, सौभाग्यमत्र न तथा प्रकटीकृतानि ।**
**व्रीडानताननसरोजसरोजनेत्रावक्षःस्थलानि कलितानि यथा दुकूलैः ॥ १५९ ॥ ९ ॥**

धनवि०—यथा—येन प्रकारेण आच्छादितानि—अप्रकटीकृतानि परेषामग्रेऽप्रकाशनेन गूढानि सुकृतानि—पुण्यकर्माण्यत्र जगति सौभाग्यं—सुभगतां दधंते—धारयंतीति, तथा तेन—प्रकारेण प्रकटीकृतानि—परेषामग्रे प्रकाशनेन व्यक्तीकृतानि सौभाग्यं न दधति; अत्र दृष्टांतमाह—यथेति दृष्टांतं व्रीडा—लज्जा तया समंतान्नतं—नम्रमाननं—मुखं तदेव सरोजं—कमलं यासां तास्तथा ताश्च ताः सरोजनेत्राश्च—ललना-

---

मत्सरादिः पंचधा मात्सर्यं—परसंपदुत्कर्षासहनत्वं कुबोधः—अज्ञानं तेषु विप्लुता—व्यसनिनः हे आत्मन्! अमूनि दानादिधर्माणि मलीमसान्युपेक्ष्य मुक्त्वेत्यर्थः अण्वपि—स्तोकमपि शुद्धं—निर्मलं सुकृत—पुण्यं चर—कुरु 'धर्मं दानादिके' इति लिंगानुशासनवचनान्नपुंसकत्वमिति ॥ १५८ ॥ ८ ॥

रत्न०—अथ प्रच्छन्नं कृतेषु सौभाग्यमाह—आच्छादितानीति०, व्याख्या—हे आत्मन्! अत्र जिनशासने यथा सुकृतानि—पुण्यान्याच्छादितानि कृतानि सति सौभाग्यं—सुभगत्वं चारुत्वमित्यर्थ दधंते तथा प्रकटीकृतानि न सौभाग्यं दधंते, अत्रार्थे दृष्टांतमाह—यथेति दृष्टांतदर्शने व्रीडया—लज्जया नतं—नम्रमाननसरोजं—वदनकमलं यासां ताश्च ताः सरोजनेत्राः—कमलनयनाः कामिन्यस्तासां वक्षःस्थलानि दुकूलैः—देशविशेषोत्पन्नांशुकैः

स्तासां वक्षःस्थलानि—कुचप्रदेशाः व्रीडाननताननसरोजसरोजनेत्रावक्षःस्थलानि दुकूलैः कलितानि—सहितानि जगति सौभाग्यं यथा दधंते तथा प्रकटीकृतानि—दुकूलरहितानि न सौभाग्यं दधतीति ॥ १५९ ॥ ९ ॥

अनंतरोक्तमेवार्थं दृष्टांतान्तरेण दर्शयति—

**स्तुतैः श्रुतैर्वाऽप्यपरैर्निरीक्षितैर्गुणस्तवात्मन्! सुकृतैर्न कश्चन।**
**फलंति नैव प्रकटीकृतैर्भुवो, द्रुमा हि मूलैर्निपतंत्यपि त्वधः ॥ १६० ॥ १० ॥**

**धनवि०**—हे आत्मन्नपरैः—स्वव्यतिरिक्तैः **स्तुतैः**—स्तुतिविपयीकृतैर्वा—अथवा **श्रुतैः**—अपरैराकर्णितैर्वाऽथवा **परैर्निरीक्षितैः**—विलोकितैस्तव **सुकृतैः कश्चन**—कोऽपि **गुण**—उपकारो **न** भवति, प्रत्युत दोपः स्यात्, 'पुण्यनाशापारगमाद्धर्मः क्षरति कीर्त्तना'दिति वचनादर्थतोऽवसेयम्। अत्र दृष्टांतमाह—**हि** यतः कारणा**द्भुवः**—पृथिव्याः **प्रकटीकृतैः**—मृत्तिकाद्यावरणराहित्येन प्रकाशितैरुद्घाटितै**र्मूलैः**—बुध्नैर्**द्रुमा**—वृक्षा **नैव फलंति**—नैव फलवंतो भवंति—**अपि तु** भुवः प्रकटीकृतैर्मूलैर्द्रुमा **अधो निपतंति**। अत्र सुकृतस्य दार्ष्टांतिकता मूलस्य दृष्टांतता

---

कलितानि—सहितानि तैराच्छादितानीत्यर्थः सौभाग्यं दधंते तथा न प्रकटीकृतानि—अनाच्छादितानीति तेन गुणस्तुतीच्छामंतरेण तान्याच्छादितान्येव सुकृतानि कुरुष्वेत्युपदेश इति ॥ १५९ ॥ ९ ॥

**रत्न०**—पुनरेतदेव प्रकारांतरेणाह—**स्तुतैः श्रुतैरिति०**, व्याख्या—हे आत्मन्नेवंविधैः कृतैः सुकृतैस्तव कश्चन गुणो नास्ति, कीदृशैः?—स्तुतैः—स्तुतिविपयीकृतैः तथा श्रुतैः—श्रुतिविपयीकृतैर्वा अपि पुनरर्थे परैर्निरीक्षितैः—दृष्टैः, तत्रार्थे दृष्टांतमाह—हि यस्मात् कारणाद्भुवः—पृथिव्याः

आत्मनो दार्ष्टांतिकता द्रुमस्य दृष्टांतता स्तवनश्रवणनिरीक्षणानां दार्ष्टांतिकता प्रकटीकरणस्य दृष्टांतता गुणाभावस्य दार्ष्टांतिकता फलाभावस्य दृष्टांतता धर्मक्षरणस्य दार्ष्टांतिकता अधःपतनस्य दृष्टांततेति दृष्टांतदार्ष्टांतिकयोजनेति भावः ॥ १६० ॥ १० ॥

मत्सर-त्यागः

अथ च स्वगतमत्सररूपदोपनिवृत्तये दृष्टांतं दर्शयन् धर्मशुद्धिमुपदिशति—

**तपःक्रियाऽऽवश्यकदानपूजनैः, शिवं न गंता गुणमत्सरी जनः ।**
**अपथ्यभोजी न निरामयो भवेद्रसायनैरप्यतुलैर्यदातुरः ॥ १६१ ॥ ११ ॥**

धनवि०—**गुणमत्सरी**—गुणेषु परकीयज्ञानादिषु मत्सरो यस्य स तथा **जनो**—लोकस्तपश्च—षष्ठाष्टमादि **क्रिया** च—योगोपधानादिरूपा **आवश्यकानि** च—सामायिकचतुर्विंशतिस्तवादीनि **दानानि** च—अशनादिदानान्यभयदानादीनि वा **पूजनानि** च—अष्टप्रकारसप्तदशप्रकारादीनि ततो द्वंद्वस्तैः **शिवं**—मोक्षं **न गंता**—न याता । इत्युक्तमर्थं दृष्टांतेन समर्थयति—**यद्**—यस्मात्कारणा**दपथ्यभोजी**—वैद्यप्रतिषिद्धभक्ष्यभोक्ता **आतुरो**—रोगी **अतुलैः**—निरुपमैरपि **रसायनैः**—सुवर्णभस्मसूतादिभि**र्निरामयो**—नीरोगो **न भवेत्** । अत्र तपःप्रभृतीनां दार्ष्टांतिकता

---

सकाशात्प्रकटीकृतैर्मूलैः सद्भिर्द्रुमा, न—नैव फलंति, न फलंत्येव अपि तु नीचैर्निपतंति, तद्वत्प्रकटीकृतैरपि सुकृतैस्तव न कश्चिद्गुणोऽस्ति, किंतु सुकृतहानिरेवास्तीति ॥ १६० ॥ १० ॥

रत्न०—अथ गुणमत्सरे विषये उपदिशति—**तपस्क्रियावश्यकेति०**, व्याख्या—गुणानामर्थात्परसंबंधिनां मत्सरोऽस्यास्तीति गुणमत्सरी जनो—लोकः तपः—चतुर्थषष्ठादि क्रिया—कायोत्सर्गादिका आवश्यकं—प्रतिक्रमणमन्यदप्यवश्यकरणीयं वा दानं—सुपात्रदानाभयदानलक्षणं पूजनं जिनबिंबानां

रसायनानां दृष्टांतता गुणमत्सरस्य दार्ष्टांतिकता अपथ्यभोजनस्य दृष्टांतता शिवगमनस्य दार्ष्टांतिकता निरामयताया दृष्टांतता जीवस्य दार्ष्टांतिकताऽऽतुरस्य दृष्टांततेति भावः ॥ १६१ ॥ ११ ॥

अथोक्तमेवार्थं पुनर्दृष्टांतेन निर्दिशति—

**मंत्रप्रभारत्नरसायनादिनिदर्शनादल्पमपीह शुद्धम् ।**
**दानार्चनावश्यकपौषधादि, महाफलं पुण्यमितोऽन्यथाऽन्यत् ॥ १६२ ॥ १२ ॥**

धनवि०—इह जगति मंत्रश्चिंतामण्यादिः, प्रभा च चंद्रसूर्यादीनां दीप्तिः, रत्नानि च—मौक्तिकादीनि—रसायनानि च—पक्वपारदादीनि, दानानि च—तान्यादौ येषां ते तथा तेषां निदर्शनं—दृष्टांतस्तस्मान्मंत्रप्रभारत्नरसायनादिनिदर्शनात्, अत्रादिपदाद्दिव्यास्त्रादिपरिग्रहः, "दानानि च—सुपात्रदानादीनि अर्चनं च—पुष्पादिभिर्जिनार्चनमावश्यकानि च—सामायिकादीनि पौषधाश्च—आहार १ शरीरसत्कार २ अब्रह्म ३ सावद्यव्या-

---

तैः करणैः शिवं—मोक्षं न गंता—न गमिष्यति, तत्रार्थे दृष्टांतमाह—यद्—यस्मात्कारणादातुरो—रोगी, अतुलैः—अनुपमैः रसायनैः—औषधमिश्रितपक्वसुवर्णादिधातुचूर्णैः करणैरपथ्यं—रोगहितवैद्यानुपदिष्टं भुंक्त इत्येवंशीलः अपथ्यभोजी सन् न निरामयो—नीरुग् भवेत्, तपःप्रभृतीनां रसायनोपमानं गुणमत्सरस्यापथ्यभोजनोपमानमिति ॥ १६१ ॥ ११ ॥

रत्न०—एतदेव प्रकारांतरेण निदर्शयति—**मंत्रप्रभेति०**, व्याख्या—दानं चावश्यकं च पौषधश्च ते आदौ यस्य तद्दानार्चनावश्यकपौषधादि पुण्यमिह जिनशासनेऽल्पमपि शुद्धं—निर्मलं सन्महत् फलं—स्वर्गापवर्गप्राप्तिलक्षणं यस्य तत्स्यात्, कस्मात्?—मंत्रो—जांगुल्यादिः प्रभा चंद्रदीपादीनां रत्नं

पार ८ निवृत्तिरूपास्ते आदौ यस्य वह्वानार्चनावश्यकपौषधादि अल्पमपि—स्तोकमपि शुद्धं—मत्सरादिदोषरहितं पुण्यं महाफलं—स्वर्गापवर्गादिप्राप्तिलक्षणं (यस्य स तथा) भवति, इति—उक्तप्रकाराच्छुद्धधर्मादन्यथा—विपरीतं वह्वप्यशुद्धं पुण्यमन्यद्—अल्पफलमफलं वा सदोषमंत्रप्रभाररसायनादिवद्भवतीति । भावार्थस्तु यथा शुद्धे मंत्रप्रभाररसायनादिके महान् गुणो भवति तथा शुद्धे पुण्ये फलं भवति, अशुद्धे पुण्ये अशुद्धे मंत्रादाविव निष्फलता भवतीति ॥ १६२ ॥ १२ ॥

अनंतरमल्पस्यापि शुद्धधर्मस्य महाफलत्वमुक्तं तदेव दृष्टांतत्रयेण समर्थयन्नुपदिशति—

**दीपो यथाऽल्पोऽपि तमांसि हंति, लवोऽपि रोगान् हरते सुधायाः ।**
**तृण्यां दहत्याशु कणोऽपि चाग्नेर्धर्मस्य लेशोऽप्यमलस्तथाऽंहः ॥ १६३ ॥ १३ ॥**

धनवि०—यथाऽल्पोऽपि—गृहगततमसोऽपेक्षया स्तोकपरिणामोऽपि दीपः—प्रदीपस्तमांसि—अंधकाराणि हंति—विनाशयति, च पुनर्यथा सुधाया—अमृतस्य लवोऽपि—जलकणप्रमाणलेशोऽपि रोगान्—कुष्ठदाघज्वरादीन् हरते—अपनयति, च पुनरग्नेः कणो—लवो यथाऽऽशु—

---

चन्द्रकांतादि रसायनं—पक्षं सुवर्णादि धातुभिः एतान्यादौ येषां तानि तेषां निदर्शनं—दृष्टांतस्तस्मात्, यथैतान्यल्पान्यपि शुद्धानि विषापहारादितमोनाशानिर्मलजलश्रवणोद्योतकरणरोगापहारादिमहाफलानि भवेयुस्तथा दानादिधर्मोऽपीति, इतः—अस्मादन्यथा पुण्यं महदप्यशुद्धं सदमहाफलं स्यादिति ॥ १६२ ॥ १२ ॥

रत्न०—पुनरेतदेव प्रकारांतरेणाचष्टे—दीपो यथाऽल्पोऽपीति०, व्याख्या—यथेति दृष्टांते अल्पोऽपि दीपस्तमांसि—अंधकाराणि हंति तथा

शीघ्रं तृण्यां—तृणगणं दहति—भस्मसात्करोति, तथा धर्मस्य—सुकृतस्य लेशः—अंशोऽप्यमलो—मात्सर्यादिदोषरहितः अंहः—पापं हंति। अत्र दीपा १ मृतलवा २ ग्निकणानां ३ दृष्टांतता शुद्धधर्मस्य च दार्ष्टांतिकतेति ॥ १६३ ॥ १३ ॥

अथ धर्मशुद्धिद्वारमुपसंहरन् भावोपयोगरहितं बह्वपि पुण्यं निष्फलं भवतीति दर्शयति—

भावोपयोगशून्याः कुर्वन्नावश्यकीः क्रियाः सर्वाः।
देहक्लेशं लभसे फलमाप्स्यसि नैव पुनरासाम् ॥ १६४ ॥ १४ ॥

धनवि०—भावोपयोगशून्याः—भावश्च—आवश्यकक्रियायां चित्तोत्साह उपयोगश्च—आवश्यकादिक्रियायां सूत्रार्थोभयव्यंजनदीर्घह्रस्वलघ्वक्षराद्युपयुक्तता ताभ्यां शून्या—रहिताः सर्वाः—सकला आवश्यिकीः—अवश्यकर्त्तव्याः क्रियाः—षडावश्यककरणप्रतिलेखनाप्रमार्जनादिकाः कुर्वन्—समाचरन् देहक्लेशं—मुधा शरीरप्रयासं लभसे—प्राप्नोपीत्यर्थः, अत्र सर्वा इत्यनेन परीषहसहनातापनाग्रहणादिकाः

---

सुधाया लवो—लेशोऽपि रोगान् हरते—अपनयति च पुनरग्नेः कणोऽपि आशु—शीघ्रं तृणगणं दहति तथेत्युपनये ईर्ष्यादिमलरहितो धर्मस्य दानादेर्लेशोऽप्यंहः—पापं हंतीति, अमल इति विशेषणं दीपादीनामपीति ॥ १६३ ॥ १३ ॥

रत्न०—अथ सर्वासां क्रियाणां भावपूर्वककरणेन सफलतामुपदिशति—भावोपयोगशून्या इति०, व्याख्या—हे आत्मन्! अवश्यं भवा आवश्यक्यः आवश्यक्यश्च ताः क्रियाश्चावश्यकीक्रियाः ताः सर्वाः प्रति कुर्वन् देहस्य क्लेशं लभसे, यतः किंलक्षणाः ?—भावशुद्धाः (:—शुद्धता) तस्या उपयोगस्तेन

शून्याः क्रिया माहा; पुनरित्युक्तक्रियासमुच्चयार्थे, तेन पुनरासामनंतरोक्तानां क्रियाणां फलं—मोक्षलक्षणं नैवाप्स्यसि—नाधिगच्छसि, भावशून्यत्वादिति ॥ १६५ ॥ १४ ॥

इति श्रीतपाग० अध्यात्मकल्पद्रुमटीकायां उ० श्रीधनविजयगणिविरचितायां धर्मशुद्धिनाम्न्येकादशी पदपद्धतिः ॥ ११ ॥

## १२ देवगुरुधर्मशुद्ध्यधिकारः ।

अनन्तरद्वारे मात्सर्यादिदोषरहितः शुद्धधर्मो मोक्षफलो भवतीत्युक्तं; स च धर्मः शुद्धदेवगुरुधर्मपरिज्ञाने तदाश्रयणे च विवक्षितफलसाधको भवतीति देवगुरुधर्मशुद्धिद्वारमभिधित्सुराह—

अथ श्रीदेवगुरुधर्मशुद्धिमधिकृत्य किंचिदुपदेश इति, स्पष्टं । नन्वनंतरद्वारेऽपि धर्मशुद्धिरुक्ता, पुनरत्र धर्मशुद्धिप्रतिपादने पौनरुक्त्यं स्यादिति चेन्न, अनन्तरद्वारे शुद्धस्यापि धर्मस्य मत्सरादिना कालुष्यं न कर्त्तव्यमिति धर्मशुद्धिरुक्ता, अत्र च षड्दर्शनसंबंधिशास्त्रप्रतिपादित-

---

रहिताः पुनरितिविशेषे आसां क्रियाणां फलं—स्वर्गादिप्राप्तिलक्षणं नैवाप्स्यसि—नैव लप्स्यसे इति ॥ १६४ ॥ १४ ॥ **इत्येकादशोऽधिकारः ॥**

श्रीशांतिचंद्रवरवाचकदुग्धसिंधुलब्धप्रतिष्टवरवाचकरत्नचंद्रः । अध्यात्मकल्पफलदस्य चकार वृत्तिमेकादशोऽत्र गतवान् विमलोऽधिकारः ॥११॥

देवादिशुद्धिः

धर्माणां मध्ये को धर्मः शुद्ध इति भेदप्रतिपादनेन पौनरुक्त्याभावात्; यद्वाऽनन्तरद्वारे केवलाया धर्मशुद्धेः प्रतिपादनेऽपि देवगुरुशुद्धिसाहचर्येण धर्मशुद्धेरप्रतिपादनेन पौनरुक्त्याभावादिति । तत्रापि पूर्वं सांप्रतीनकाले गुर्वायत्तौ देवधर्माविति गुरुशुद्धिमधिकृत्योपदिशति—

**तत्त्वेषु सर्वेषु गुरुः प्रधानं, हितार्थिधर्मा हि तदुक्तिसाध्याः ।**
**अयंस्तमेवेत्यपरीक्ष्य मूढ !, धर्मप्रयासान् कुरुषे वृथैव ॥ १६५ ॥ १ ॥**

**धनवि०**—**सर्वेषु**—समस्तेषु **तत्त्वेषु**—देवगुरुधर्मलक्षणेषु **गुरुः**—गुरुतत्त्वं **प्रधानं**—मुख्यं भवति, **हि** यतः कारणाद्धि**तार्थिधर्माः**—हितं—स्वोपकारकमर्थान्मोक्षः स एवार्थः—प्रयोजनं येषां ते च ते धर्माश्चेति, यद्वा हितार्थिनां—मोक्षार्थिनां पुरुषाणां समाचरणीया धर्मा दानादयः, **तस्य गुरोरुक्तिः**—वचनं तेन **साध्याः** प्रायो भवंति, **हे मूढ !**—हे मूर्ख इति हेतोस्**तमेव गुरुमपरीक्ष्य**—अयं गुरुः शुद्धधर्मोपदेष्टाऽयं चाशुद्धधर्मोपदेष्टेति विवेकमकृत्वा **श्रयन्**—भजन् **धर्मप्रयासान्**—धर्मकर्मश्रमान् **वृथैव कुरुषे** इति ॥ १६५ ॥ १ ॥

---

**रत्न०**—अथ देवगुरुधर्मशुद्धिमधिकृत्य द्वादशाधिकारे किंचिदुपदिश्यते, अथ सांप्रतं भरतक्षेत्रे साक्षाद्भावजिनाभावे गुरुतत्त्वशुद्धेर्देवधर्मतत्त्वयोः शुद्धिर्भवतीति प्रथमं गुरुतत्त्वशुद्धिमाश्रित्याह—**तत्त्वेषु सर्वेष्विति०**, व्याख्या—सर्वेषु तत्त्वेषु गुरुः प्रधानं—मुख्यं तत्त्वं वर्त्तते, हि यस्माद्धेतोर्हितायेति हितार्थाः हितार्थाश्च ते धर्माश्च हितार्थधर्माः तस्य गुरोरुक्तिः—वचनं २ तया साध्याः—साधनीया वर्त्तंते, तमेव गुरुमितिहेतोरपरीक्ष्य—परीक्षां विनैव श्रयन् सन् मूढो—मूर्खो धर्मे प्रयासान् वृथैव कुरुषे, तेन गुरुं परीक्ष्य गृहाणेति ॥ १६५ ॥ १ ॥

कुगुरोः स्वरूपं

अथ गुरुसदोषतायां धर्मस्यापि सदोषता भवतीत्याह—

भवी न धर्मैरविधिप्रयुक्तैर्गमी शिवं येषु गुरुर्न शुद्धः ।
रोगी हि कल्यो न रसायनैस्तैर्येषां प्रयोक्ता भिषगेव मूढः ॥ १६६ ॥ २ ॥

धनवि०—अविधिप्रयुक्तैः-वितथाचरणप्रयोगवद्भिर्धर्मैः-दानादिकैर्भवी-प्राणी शिवं-मोक्षं न गमी-न गमनशीलो भवतीति, येषु धर्मेषु गुरुः शुद्धो-निर्दोषो नास्ति; अत्र दृष्टांतमाह-हि यतः कारणाद्रोगी-आतुरस्तैः रसायनैः-औषधविशेषैर्न कल्यो-नीरोगो न भवति, येषां रसायनानां प्रयोक्ता-उपदेष्टा भिषगेव-वैद्य एव मूढः-अज्ञानोऽस्तीत्यन्वयः । अत्र संसारिरोगिणोर्धर्मरसायनयोर्गुरुभिषग्वरयोः परस्परं दृष्टांतदार्ष्टांतिकयोजना कार्येति भावः ॥ १६६ ॥ २ ॥

अथ गुरुपरीक्षायामेव कुगुरोरभिलषितफलासाधकत्वं दर्शयन्नाह—

समाश्रितस्तारकबुद्धितो यो, यस्यास्त्यहो मज्जयिता स एव ।
ओघं तरीता विषमं कथं स ?, तथैव जंतुः कुगुरोर्भवाब्धिम् ॥ १६७ ॥ ३ ॥

---

रत्न०—अथ गुरावशुद्धे धर्मोऽप्यशुद्ध एवेत्याह—भवी न धर्मैरिति०, व्याख्या—भवी-संसारी जीवः अविधिकृतैर्धर्मैर्हेतुभिः शिवं-मोक्षं न गमी-न गमनशीलः येषु धर्मेषु गुरुरुपदेष्टा शुद्धो-दोषरहितो नास्ति, एतदेव दृष्टांतयति-हि यस्मात्कारणाद्रोगी तैः रसायनैः कल्यो न-अरुग् न भवति । तः धारयत्याह-येषां रसायनानां प्रयोक्ता-कर्त्ता कथको वा भिषगेव-वैद्य एव मूढो-मूर्खोऽस्तीति, उपनययोजना सुगमैवेति ॥ १६६ ॥ २ ॥

धनवि०—यथा यः पुरुषो यं तारक इति बुद्धितः समाश्रितः—सेवितः स एव पुरुषः अहो इत्याश्चर्ये यस्य पुरुषस्य मज्जयिता—बोलयिताऽस्ति स पुरुषो विषमम्—अतिशयेनागाधमतिशयेन चपलं वौघं—प्रवाहं कथं तरीता ?—कथं तरिष्यतीत्यर्थः, तथैवेति दार्ष्टांतिकोपन्यासे, जंतुः—संसारी प्राणी कुगुरोः—उन्मार्गगामिन उन्मार्गप्ररूपिणश्च पुरुषाद्भवाब्धिं—संसारसमुद्रं कथं तरीतेत्यर्थः; अत्र विषमप्रवाहस्य संसारदृष्टांतता कुतारस्य कुगुरुदृष्टांतता वाच्येति ॥ १६७ ॥ ३ ॥

अथ दृष्टांतपूर्वकं स्वपरव्यवहारहठमकृत्वैव शुद्धा एव गुरुदेवधर्माः श्रयणीया इत्युपदिशति—

**गजाश्वपोतोक्षरथान् यथेष्टपदाप्तये भद्र! निजान् परान् वा ।**
**भजंति विज्ञाः सुगुणान् भजैवं, शिवाय शुद्धान् गुरुदेवधर्मान् ॥ १६८ ॥ ४ ॥**

धनवि०—हे भद्र!—हे निर्माय विज्ञा—विवेकवंतो जना यथेष्टपदाप्तये—ईप्सितस्थानप्राप्तये सुगुणान्—सुष्ठु—अतिशयेन गुणः—सुख-

---

रत्न०—अथ कुतारकदृष्टांतेन कुगुरुः कथं निमज्जयिता न भवतीत्याह—समाश्रित इति०, व्याख्या—यो जंतुस्तारकबुद्धेः—असौ मां तारयिष्यतीति बुद्धेर्यं तारकं समाश्रितः अहो इति आश्चर्ये स एव यस्य मज्जयिता भवति स जंतुर्विषममोघं—प्रवाहं अर्थादगाधजलाश्रयस्य कथं तरीता स्याद् ?, अपि तु न स्यात्, तथैव दृष्टांतेन यो भवाब्धितारकबुद्ध्या यं गुरुं समाश्रितः स एव गुरुः परिणामतः कुगुरुर्यस्याश्रितस्य मज्जयिता वर्त्तते स जंतुस्तस्मात् कुगुरोः सकाशाद्भवाब्धिं—भवसमुद्रं कथं तरीता स्याद् ?, अपि तु न तरीतेति भावः ॥ १६७ ॥ ३ ॥

रत्न०—ततः शुद्धान् गुरुदेवधर्मान् श्रयेति कथयति—गजाश्वपोतोक्षरथानिति०, व्याख्या—हे भद्र!—हे साधो विज्ञा—दक्षा यथेष्टपदाप्तये-

संचारितादिलक्षणो येषां ते तथा तान्निजान्—स्वकीयान् वा—अथवा परान्—परकीयान् गजाश्च—हस्तिनः अश्वा—हयाः पोताश्च—यानपात्राण्युक्षाणश्च—बलीवर्दाः रथाश्च—शकटगंत्रीप्रभृतयस्ततो द्वंद्वस्तान् भजंति—प्रतिपद्यंते, एवमेभिर्दृष्टांतैस्त्वं सुगुणान्—विशिष्टज्ञानदर्शनचारित्रादिगुणान् स्वकीयान् परकीयान् वा गुरवश्च सम्यक्त्वसहितपंचमहाव्रतधरा देवाश्चान्तरायाद्यष्टादशदोपरहिताः धर्माश्चाप्तप्रणीतास्ततो द्वंद्वस्तान् गुरुदेवधर्मान् स्वेष्टपदाप्तये—मुक्तिपदाप्तये भजस्व—श्रय । ननु देवगुरुधर्मशुद्ध्यधिकारेऽपि पौर्वापर्येण गुरुशुद्ध्यधिकारे प्रस्तुते देवगुरुधर्मशुद्धिप्रतिपादनमनर्थकमिति चेन्न, प्रस्तुतगुरुदेवधर्मशुद्ध्यधिकारद्वारार्थस्मारणार्थत्वात् । अत्र सुगुणगजादीनां तु शुद्धगुर्वादिदृष्टांतता इष्टपदप्राप्तेश्च परमपदप्राप्तिदृष्टांतता भावनीयेति ॥ १६८ ॥ ४ ॥

अथ कुगुरुप्ररूपिता धर्मा अपि निष्फलाः स्युरित्याह—

**फलाद्वृथा स्युः कुगुरूपदेशतः, कृता हि धर्मार्थमपीह सूद्यमाः ।**
**तद्दृष्टिरागं परिमुच्य भद्र ! हे, गुरुं विशुद्धं भज चेद्धितार्थ्यसि ॥ १६९ ॥ ५ ॥**

धनवि०—हि यतः कारणादिह—संसारे कुगुरूपदेशतः—अगीतार्थपार्श्वस्थमिथ्यादृष्टिगुरुवचनतो **धर्मार्थमपि**—धर्मप्रयोजनमुद्दिश्यापि

---

वाञ्छितस्थानप्राप्त्यै निजान्—स्वकीयान् वा—अथवा परान्—परकीयान् गजाश्वपोतोक्षरथान्—हस्तितुरगवहनगोस्यंदनान् भजंति, किं० ?—सुगुणान्—लक्षणशास्त्रोक्तसत्गुणोपेतान् एवमिति—तद्वत् हे भद्रात्मन् ! त्वं देवगुरुधर्मान् योगशास्त्राद्युक्तलक्षणोपेतान् शिवाय—मोक्षाय भज—श्रयेति ॥ १६८ ॥ ४ ॥

रत्न०—अथ कुगुरूपदिष्टा धर्मा न फलदायका भवंतीत्याह—**फलाद्वृथा स्युरिति०**, व्याख्या—हि यस्मात्कारणादिह—जिनप्रवचने कुगुरूणा-

दृष्टिराग-
मोक्षः

सूद्यमाः—सुष्ठु—अतिशयेनोद्यमाः—प्रयत्नाः कृता—विहिताः फलात्—स्वर्गापवर्गादिप्राप्तिफलमाश्रित्य वृथा—मिथ्या स्युः—भवंति निष्फलाः स्युरित्यर्थो, यदुक्तं गच्छाचारादौ "अगीयत्थस्स वयणेणं, अमीयंपि न घुंटए। गीयत्थस्स उ वयणेणं, विसं हालाहलं पिए" ॥ १ ॥ [अगीतस्य वचनेनामृतमपि न पिवेत्। गीतार्थस्य तु वचनेन हालाहलं विषं पिवेत् ॥१॥] इति हे भद्र!—तीव्रकषायरहित तत्—तस्मात्कारणाद्दृष्टिरागं—स्वस्वदर्शनदृष्टिरागं परिमुच्य—परित्यज्य विशुद्धं गुरुं भज—श्रय चेद्—यदि त्वं हितार्थी—मोक्षकामोऽसीति ॥१६९॥५॥

अथ गुरुपरीक्षायां लोकविप्रतारककुगुरुस्वरूपं भृशं प्रायः स्थाने २ पश्यन्नतीव व्याकुलितचेता उपदेष्टा पूत्कारपूर्वकं श्रीवीरभगवतः पुरस्तादित्याह—

**न्यस्ता मुक्तिपथस्य वाहकतया श्रीवीर! ये प्राक्त्वया, लुंटाकास्त्वहतेऽभवन् बहुतरास्त्वच्छासने ते कलौ।**
**बिभ्राणा यतिनाम तत्तनुधियां मुष्णंति पुण्यश्रियः, पूत्कुर्म्मः किमराजके ह्यपि तलारक्षा न किं दस्यवः? ॥**

**धनवि०**—हे श्रीवीर!—हे श्रीवर्द्धमानस्वामिन् प्राक् सुधर्मादयो ये गुरवो मुक्तिपथस्य—मोक्षमार्गस्य वाहकतया—प्रवर्त्तकतया त्वया न्यस्ताः—स्थापिताः संति तत्परम्परायाता अप्युपचारात्त एवोच्यंतेऽतस्तत्परंपरानामग्राहकाः शिथिलाचारा बहुतरा—अतिशयेन बहवो

---

मुपदेशतो धर्मार्थं—धर्माय कृता अपि सूद्यमाः—शोभनोद्योगास्तपःसंयमादिकाः फलात्—कार्याद्वृथा स्युः—फलप्रदा न भवंति, अथवा फलमुद्दिश्येति व्याख्येयं, तत्कारणाद्धे भद्र!—हे सज्जन त्वं दृष्टिरागं परिमुच्य विशुद्धं स्वयमवद्यमुक्तमन्येषामवद्येभ्यो निवर्त्तकं निःस्पृहं च गुरुं भज—श्रय चेद्—यदि हितार्थी—हितेच्छुरसीति ॥ १६९ ॥ ५ ॥

**रत्न०**—अथ दृष्टांतेन कुगुरून् ज्ञापयति—**न्यस्ता मुक्तिपथस्येति०** व्याख्या—हे श्रीवीर! प्राक्—पूर्वं त्वया ये सुधर्मादयो मुक्तिपथस्य

गुरवः प्रायेणेति शेषः कलौ–कलिकाले त्वच्छासने–जिनमते त्वद्दते–त्वां विना लुंटाका–मार्गग्राहकतस्करा अभवन्–आसन्; यद्–यत्कारणाद्यतिनाम–यतिरित्यभिधानं बिभ्राणा–दधानास्ते गुरवस्तनुधियाम्–अल्पबुद्धीनां जनानां पुण्यश्रियः–सुकृतलक्ष्मीः मुष्णंति–चौर्येणापहरंति, अत्र कुगुरवो मंदबुद्धीनां पुण्यलक्ष्मीमोपकाः स्वार्थसहितकुत्सितोपदेशकत्वोत्सूत्रभापकत्वोत्सूत्रप्रवर्त्तकत्वादिना गच्छ स्वयंकृतविकर्मादिकारकत्वेन, यत उक्तं–"पासत्थाइ वंदमाणस्स नेव कित्ती न निज्जरा होइ। कायकिलेसो एमेव कुणइ तह कम्मवंधं च ॥ १ ॥ ति" [ पार्श्वस्थादीन् वंदमानस्य नैव कीर्त्तिः न निर्जरा भवति। कायक्लेश एवमेव करोति तथा कर्मबन्धं च ॥ १ ॥ ] भावः। ततः कारणात किं पूत्कुर्मो–वयं किं पूत्कारं कुर्मः ?, हि यतः कारणादराजके–राजरहिते नगरे तलारक्षा अपि–राजनियुक्तनगरोपद्रवनिवारकाः कोट्टपाला अपि किं दस्यवः ?–चौरा न भवंति, अपि तु भवंत्येव ॥ १७० ॥ ६ ॥

अथ कुगुरुदेवधर्माः आश्रिताः शोचनाय भवंतीत्याह—

**माद्यस्यशुद्धैर्गुरुदेवधर्मैर्धिग्दृष्टिरागेण गुणानपेक्षः।**
**अमुत्र शोचिष्यसि तत्फले तु, कुपथ्यभोजीव महामयार्त्तः ॥ १७१ ॥ ७ ॥**

---

यतीनां मोपकता

...पाद्यतया–प्रवर्त्तकत्वेन न्यस्ताः–स्थापिताः ते सुधर्मादिपट्टपरंपरायातसुविहिताचार्येभ्यः पृथग्भूय स्वाभिमानपुष्ट्यै स्वनाम्ना मतप्रवर्त्तकास्त्वद्दते–त्वया विना त्वच्छासने लुंटाका इव–लुंटाका अभवन्, कस्मिन् ?–कलौ–कलियुगे, अथ लुंटाकोपमानत्वेन लुंटाकधर्ममाह–यत्कारणाद्यतिनाम बिभ्राणा–दधानास्तनुधिया–स्वल्पबुद्धीना जनाना पुण्यश्रियो मुष्णंति–चोरयंति, अत्रार्थे वयं किं पूत्कुर्मः–पूत्कारं कुर्मः ?, हि यस्मात्कारणात्तलारक्षा अपि–कोट्टपाला अप्यराजके–राज्ञोऽभावे किं दस्यवः–चौरा न भवंति ?, अपितु भवंति एव, अत्रोपनयः सुगमत्वाददर्शितोऽप्यूह्य इति ॥ १७० ॥ ६ ॥

**धनवि०**—**धिगिति** तिरस्कारे त्वं **दृष्टिरागेण**—स्वदर्शनरागेण गुणेषु—ज्ञानदर्शनचारित्रेषु न विद्यतेऽपेक्षा—मया गुणिन एव गुरवो वंदनीया यत्र गुणो भवति स एव देवः सेव्यः समग्रगुणवत्प्रणीत एव धर्मः समाचरणीय इति बुद्धिर्यस्य स **गुणानपेक्षः** सन् **अशुद्धैः**—सदोषैर्**गुरुदेवधर्मैर्**रिदानीमितिगम्यं किं **माद्यसि** ?—मदवान् किं भवसि, **तु** पुनर**मुत्र**—परलोके **तत्फले**—कुगुर्वादिसेवनजनितमदफले दुर्गतिदुःखानुभवलक्षणे **शोचिष्यसि**—शोचनां करिष्यसि, अत्रोक्तमर्थं दृष्टांतेन द्रढयति—**इव**—यथा **कुपथ्यभोजी**—पूर्वं भिषग्निषिद्धाहार-भोक्ता उत्तरकाले **महामयार्त्तः** सन्—अतिशयेन रोगपीडितः पुमान् शोचते इत्यन्वयः। अत्राशुद्धदेवगुरुधर्मांगीकारेण मदकरणकुपथ्य-भोजनयोर्गुणानपेक्षदृष्टिरागिमहामयार्त्तयोर्दृष्टांतदार्ष्टांतिकतेति भावः ॥ १७१ ॥ ७ ॥

अथ कुगुरुः सेवितो मोक्षप्रदो न भवतीति दृष्टांतत्रयदर्शनपूर्वकमुपदिशति—

**नाम्रं सुसिक्तोऽपि ददाति निंबकः, पुष्टा रसैर्वंध्यगवी पयो न च।**
**दुःस्थो नृपो नैव सुसेवितः श्रियं, धर्मं शिवं वा कुगुरुर्न संश्रितः ॥ १७२ ॥ ८ ॥**

---

**रत्न०**—अथ शुद्धान् गुरुदेवधर्मान् प्राप्य मा हरणं प्राप्नुहीति कथयति—**माद्यस्यशुद्धैरिति०** हे आत्मन्! यस्त्वमशुद्धैः—सदोषैर्गुरुदेवधर्मैः प्राप्तैः सद्भिर्माद्यसि—हृष्यसि, त्वं किं० ?—गुणानां—योगशास्त्रादिशास्त्रोक्तानां न विद्यते अपेक्षा यस्य सः, केन ?—दृष्टिरागेण, ततस्त्वां धिगस्तु, क्वचिदध्याहारस्य व्याख्यानांगत्वात् यत्तच्छब्दावध्याहार्यौ, च पुनस्तस्य मदस्याथवा दृष्टिरागस्यामुत्र—परभवे किल्बिषकावतारलक्षणे प्राप्ते सति त्वं शोचिष्यसि—हा मया किं कृतमित्यात्मानं पश्चात्तापविषयीकरिष्यसि। तत्रार्थे दृष्टांतमाह—इव—यथा पुमान् महांश्चासौ आमयश्च महामयो—महान् रोगस्तेन ऋतः—पीडितस्सन् कुपथ्यं भुंक्ते इत्येवंशीलः कुपथ्यभोजी शोचतीति ॥ १७१ ॥ ७ ॥

धनवि०—यथा निंबवृक्षः प्रसिद्धः सुसिक्तोऽपि—शोभनप्रकारेण दुग्धामृतादिना सिक्तोऽप्याम्रं—सहकारफलं न ददाति—नो दत्ते, च पुनर्यथा वंध्यगवी—संतानात्यंताभाववती धेनुः रसैः—इक्षुघृततैलप्रभृतिभिः पुष्टाऽपि—पुष्टिं प्रापिताऽपि न च पयो—दुग्धं ददाति, च पुनर्यथा दुःस्थो—राज्यभ्रष्टः कष्टपतितो नृपो—राजा सुसेवितः—सम्यक्प्रकारेण सकलतत्समीहितसंपादनेनाराधितः श्रियं—धनधान्यादिलक्ष्मीं नैव ददाति, तथा कुगुरुः—अशुद्धगुरुः संश्रितः—सेवितो धर्मं—स्वर्गादिप्राप्तिवीजं वा—अथवा शिवम्—अपवर्गं न ददाति, अत्र यथा तथेति पदद्वयमध्याहार्यं, तथा च दृष्टांतदार्ष्टांतिकभावः स्पष्ट एवेति ॥ १७२ ॥ ८ ॥

अथ देवगुरुधर्माः शुद्धा एव हिताय भवंतीत्युपदिशति—

**कुलं न जातिः पितरौ गणो वा, विद्या च वंधुः स्व(श्व)गुरुर्धनं वा ।**
**हिताय जंतोर्न परं च किंचित्, किं त्वाहृताः सद्गुरुदेवधर्माः ॥ १७३ ॥ ९ ॥**

धनवि०—न कुलं—पितृवंशः न जातिः—मातृवंशो न पितरौ—माता च पिता च पितरौ न गणो—महाजनादिसमुदायो वा—अथवा

---

रत्न०—पुनः कुगुरोरनासेवनमाश्रित्योपदिशति—नाम्रं सुसिक्तोऽपीति० व्याख्या—निंब एव निंबको वृक्षः सुष्ठु यथा स्यात्तथा सिक्तोऽप्याम्रं—आम्रफलं न ददाति, तथाः पुष्टाऽपि वंध्यगवी—वंध्या गौः पयो न ददाति, चः पुनरर्थे देशभ्रष्टत्वादुत्पन्नमात्रभक्षित्वाद् दुःस्थो—दुर्गतो राजा—राजेति नामधारी सुष्टु सेवितः सन् श्रियं—लक्ष्मीं न ददाति, एतैर्दृष्टांतैः कुगुरुः संश्रितः सन् धर्मं—स्वर्गादिसंपद्दायकमथवा शिवं—मोक्षं सकलदुःखनिवृत्तिलक्षणं न ददाति, सुसिक्ताः सुपोषिताः सुसेविताः सुसंश्रिता अपि ये यादृशास्ते तादृशा एव भवंतीति भावः ॥ १७२ ॥ ८ ॥

रत्न०—अथ सर्वेभ्यो गुरुदेवधर्माणामुत्कर्षमाह—कुलं न जातिरिति० व्याख्या—एतानि जंतोः—प्राणिनो हिताय न भवंतीत्यन्वयः, तद्व्यक्तित

सुदेवादेर्हितत्वं

न विद्या—तर्कविद्या मंत्रविद्या वा च पुनर्न बंधुः—स्वजनश्च पुनर्न स्वगुरुः—विद्यागुरुः कुलगुरुर्वा—अथवा न धनं—वित्तं च पुनर्न परम्—उक्तातिरिक्तमन्यत् किंचिद्वस्तु, हिताय भवतीति सर्वत्र योज्यं; तु पुनः किं हिताय भवतीति प्रश्ने प्रतिपादयति—आदृता—आराधिताः सद्गुरुदेवधर्मा—निर्दोषगुरुदेवधर्मा हिताय भवंतीति योगः ॥ १७३ ॥ ९ ॥

अथ गुरुदेवधर्मशुद्ध्यर्थं परमार्थतः सुगुरुस्वरूपं निर्दिशति—

**माता पिता स्वः सु(स)गुरुश्च तत्त्वात्, प्रबोध्य यो योजति शुद्धधर्मे ।**
**न तत्समोऽरिः क्षिपते भवाब्धौ, यो धर्मविघ्नादिकृतेश्च जीवम् ॥ १७४ ॥ १० ॥**

**धनवि०—तत्त्वात्**—परमार्थतः स जनो **माता**—जननी, **च** पुनः स जनः **पिता**—जनकः, च पुनः स जनः **स्वः**—स्वकीयः, च पुनः स जनः **सुगुरुः**—तत्त्वमार्गोपदेष्टा, भवतीति सर्वत्र योजनीयं, **यो** जनो **जीवं**—प्राणिनं **शुद्धधर्मे योजति**—योजयति; च पुनस्तत्समः—

आह—कुलम्—इक्ष्वाकुकुलादि जातिः—मातृपक्षः पितरः—पितामहपितृवृद्धभ्रातृपितृत्वप्रपन्नादयः गणः—समूहः स्वकीयत्वेन कल्पितः चः पुनरर्थे विद्याः—षडंग्यादिका बन्धुः—स्वजनः च पुनर्गुरुः—विद्यापाठकः वा पुनर्धनं—हिरण्यादि, एतानि सर्वाण्यपि कर्तृपदानीति यथार्हवचनानि योज्यानि, वेति विशेषे, परं—किंचिद् उक्तान्यतरदपि हिताय न भवतीति, किल्विति विशेषे, आदृता—अङ्गीकृताः संतः—शोभना देवगुरुधर्मा हिताय भवंति ॥ १७३ ॥ ९ ॥

**रत्न०**—अथ शुद्धधर्मे योजयितारं प्रशंसति—**माता पितेति०** व्याख्या—यो यं प्रति तत्त्वादिति—तत्त्वं समर्थ्य प्रबोध्य—बोधिदानं दत्त्वा शुद्धधर्मेऽर्हदुक्ते योजति—योजयति, युजादेर्नवेति णिचो विकल्पेन प्राप्तौ णिचोऽभावे रूपमिति, स मातेव हितकर्तृत्वात् माता स पितेव स स्वो

तेन सदृशोऽरिः—वैरी नास्ति यो जनो धर्मविघ्नादिकृतेः—सुकृतान्तरायनिष्पादनात्, अत्रादिपदादुन्मार्गप्रवृत्तिकृतेः, जीवं—प्राणिनं भयाब्धौ—संसारसागरे क्षिपते—प्रक्षिपतीति ॥ १७४ ॥ १० ॥

अथ गुरुदेवार्चनानां तत्सहचरितानामन्येषामपि गुणानां माहात्म्यं वर्णयन्नुपदिशति—

दाक्षिण्यलज्जे गुरुदेवपूजा, पित्रादिभक्तिः सुकृताभिलाषः।
परोपकारव्यवहारशुद्धी, नृणामिहामुत्र च संपदे स्युः ॥ १७५ ॥ ११ ॥

धनवि०—दाक्षिण्यं च लज्जा च दाक्षिण्यलज्जे प्रतीते, तथा गुरुदेवयोः—सद्गुरुवीतरागयोः पूजा—अर्चा, सा च द्रव्यभावभेदाभ्यां द्विधा, तत्र द्रव्यपूजा पुष्पाक्षतादिभिः भावपूजा च स्तुतिस्तोत्रादिभिः, तथा पित्रादिभक्तिः—पित्रादीनां मातृपितृवृद्धभ्रातृप्रभृतीनां भक्तिः—सेवा, तथा सुकृतस्य—पुण्यकर्मणोऽभिलाषो—मनोरथः, तथा परोपकारश्च—परेषामापत्पतितानामुपकार—उद्धरणं व्यवहारशुद्धिश्च—

---

ज्ञातिः स गुरुः, चेति पुनरर्थे, तथा तेन समः—सदृशोऽरिः—रिपुर्नास्ति यो धर्मे विघ्नादिकृतेः—अंतरायादिकरणाज्जीवं प्रति भवाब्धौ—भवसमुद्रे क्षिपते—प्रतिक्षिपति, आदिशब्देनोन्मार्गदर्शनतश्चेति, अथवा तत्त्वात्—परमार्थतः स मातेव माता इत्याद्यपि व्याख्येयं ॥ १७४ ॥ १० ॥

रत्न०—दाक्षिण्यलज्जे इति० व्याख्या—दाक्षिण्यं च लज्जा च दाक्षिण्यलज्जे, दाक्षिण्यं—अनुकूलता तथा गुरुदेवयोः पूजनं तथा पिता आदौ

न्यायसंपन्नविभवादिना व्यवहरणं ततो द्वंद्वः परोपकारव्यवहारशुद्धी, एते उक्ता गुणा नृणां—मनुष्याणामिह—इह लोके च पुनरमुत्र—परलोके संपदे—ऐहिकपारलौकिकसुखसंपत्तये स्युः—भवंतीत्यर्थः ॥ १७५ ॥ ११ ॥

अथानंतरोक्तमेवार्थं व्यत्ययेनाह—

**जिनेष्वभक्तिर्यमिनामवज्ञा, कर्मस्वनौचित्यमधर्मसंगः ।**
**पित्राद्युपेक्षा परवंचनं च, सृजंति पुंसां विपदः समंतात् ॥ १७६ ॥ १२ ॥**

**धनवि०—जिनेषु**—वीतरागेषु **अभक्तिः**—आशातनाकरणं, च पुनर्यमिनां—सुसाधूनामवज्ञा—अवहेला, च पुनः **कर्मसु**—व्यापारेषु **अनौचित्यं**—अनुचितप्रवृत्तिः, च पुनर्न विद्यते धर्मः—सुकृतं येषां तेऽधर्माणस्तेषां **संगः**—संगतिरथवा न धर्मोऽधर्मः—'तदन्यतद्विरुद्धतदभावेषु नञ् वर्त्तते' इति वचनात् पापं तस्य **संगः**—संगतिः, च पुनः **पित्राद्युपेक्षा**—पितृमातृप्रभृतीनामुपेक्षा—शुश्रूषायामुपेक्षणं, च पुनः

---

येषां ते पित्रादयस्तेषां भक्तिः, आदिशब्देन मातृवृद्धभ्रातृभगिनीपितृभ्रात्रादीनां ग्रहणं, तथा सुकृते—पुण्येऽभिलाषो—वांछा तथा परोपकारश्च व्यवहारशुद्धिश्च परोपकारव्यवहारशुद्धी, एतानीह लोके च पुनरमुत्र—परलोके संपदे—विभूतये भवंति, अर्थादेतद्वतः पुरुषस्येति ॥ १७५ ॥ ११ ॥

**रत्न०**—एतदर्थं च व्यत्ययेन निर्दिशति—**जिनेष्वभक्तिरिति०** व्याख्या—जिनेषु—वीतरागेष्वभक्तिस्तथा यमिनां—यतिनामवज्ञा—अवगणनं तथा कर्मसु **श्राद्धदिनकृत्ययतिदिनकृत्यादिशास्त्रेषूक्तेष्वनौचित्यम्**—औचित्याभावः यथायोग्याकरणमित्यर्थः तथा नञो विरुद्धार्थवाचकत्वाद्धर्मधर्मिणोरभेदोपचाराच्चाधर्मिभिः—मिथ्यादृष्टिभिः कुमत्यादिभिः सह संगः—परिचितिः अधर्मसंगः विवाहकरणेन व्यापारकरणेन मैत्रीकरणेन च तथा

परवंचनं—परेषामात्मव्यतिरिक्तानां वंचनं—विप्रतारणमेते उक्ता दोषाः पुंसां—पुरुषाणां समंतादिह—परत्र च विपदो—वधबंधादिका आपदः सृजंति—कुर्वंतीत्यर्थः ॥ १७६ ॥ १२ ॥

अथ शुद्धदेवगुरुधर्मादिसमग्रसामग्रीं प्राप्य यो न यतते तं प्रत्युपदिशति—

**भक्त्यैव नार्चसि जिनं सुगुरोश्च धर्मं, नाकर्णयस्यविरतं विरतीर्न धत्से।**
**सार्थं निरर्थमपि च प्रचिनोष्यघानि, मूल्येन केन तदमुत्र समीहसे शम्? ॥ १७७ ॥ १३ ॥**

धनवि०—यदि त्वं भक्त्यैव—केवलया भक्त्या आराधनबुद्ध्या जिनं—वीतरागं नार्चसि—न पूजयसि, च पुनः सुगुरोः—सद्गुरोः सकाशाद्धर्मं—श्रुतधर्मरूपं नाकर्णयसि—न शृणोषि, च पुनरविरतं—निरंतरं विरतीः—आश्रवादिभ्यो निवृत्तीर्न धत्से—न बिभर्षीत्यर्थः, च

---

पित्रादीनां वृद्धानामुपेक्षा—उपेक्षणमवगणनं तथा परेषां कूटतुलाकूटमानतत्प्रतिरूपकरणकूटलेखलिखनादिना वंचनं च पुनरर्थे एतानि पुंसां विपदः समंतादिति समंततः सर्वप्रकारेण सृजंति—कुर्वंति ॥ १७६ ॥ १२ ॥

रत्न०—एतदेव प्रकारातरेण निर्दिशन्नाह—**भक्त्यैव नार्चसीति०** व्याख्या—हे आत्मन्! त्वं भक्त्या एवेत्यवधारणे जिनं नार्चसि—न पूजयसि, कदाचिदपि पूजयसि तदा लज्जाकुलक्रमादिना पूजयसीत्येवकारेण सूचनं, च पुनः सुगुरोः पार्श्वे धर्ममर्हत्प्रणीतं नाकर्णयसि—न शृणोषि, सुशब्देन कदाचिच्छृणोषि तदा कुगुरोः पार्श्वे इति सूचनं, कथं?, अविरतं—निरंतरमिति सर्वत्र योज्यं, तथा विरतीः—अष्टादशपापस्थानकेभ्यः पंचदशकर्मादानेभ्यश्च विरमणानि न धत्से—न दधासि, च पुनः सार्थं कुटुंबादिदाक्षिण्यहेतुना निरर्थं—निरर्थकमपध्यानाचरितपापोपदेशहिंस्रप्रदान-

पुनः सार्थं—सप्रयोजनं निरर्थं—निष्प्रयोजनमप्यघानि—पापानि हिंसादीनि प्रचिनोषि—प्रकर्षेण पुष्टिं नयसि, तत्—तदा अमुत्र—परलोके केन मूल्येन—निष्क्रयेण शं—सुखं स्वर्गापवर्गादिजं समीहसे ?—वांछसीत्यर्थः ॥ १७७ ॥ १३ ॥

अथ सुगुरुसंगत्यां गुणं कुगुरुसंगत्यां च दोषं दृष्टांतपूर्वकमुपदर्शयन्नुपदिशति—

**चतुष्पदैः सिंह इव स्वजात्यैर्मिलन्निमांस्तारयतीह कश्चित् ।**
**सहैव तैर्मज्जति कोऽपि दुर्गे, शृगालवच्चेत्यमिलन् वरं सः ॥ १७८ ॥ १४ ॥**

धनवि०—इह संसारे कश्चित्सुगुरुः स्वजात्यैः—पंचेंद्रियसंज्ञिमनुष्यादिभिः सह मिलन्—संगतिं कुर्वन्निमान् स्वजात्यान् तारयति—पारं प्रापयति इव—यथा सिंहः स्वजात्यैश्चतुष्पदत्वजात्या स्वजातीयैश्चतुष्पदैर्मृगगवयादिभिर्मिलन् स्वजातीयान् मृगगवयादीन् पारं प्रापयति, च पुनः कोऽपि कुगुरुः स्वजातीयैर्मनुष्यैः सह मिलन् तैः सहैव दुःखेन गम्यते इति दुर्गो—नरकस्तस्मिन् मज्जति—अधो गच्छतीत्यर्थः इव—यथा शृगालो—मृगधूर्त्तः, स्वजात्यैः शशकादिभिश्चतुष्पदैर्मिलन् तैः शशकादिचतुष्पदैः सहैव दुर्गेऽगाधत्वरितगतिसरित्प्रवाहे मज्जति,

---

प्रमादाचरितमेदाद्यथा स्यात्तथा त्वमघानि—पापानि प्रति प्रचिनोषि—प्रचयं नयसि, तत्—तस्मात्कारणात् केन मूल्येन—मूल्यप्रदानरूपेणैव कर्मणा सुकृताचरणलक्षणेन शं—सुखं समीहसे ?—सम्यग्वांछसीति ॥ १७७ ॥ १३ ॥

रत्न०—अथ सुगुरुं सिंहेन सदृशीकृत्य कुगुरुं च शृगालेन सदृशीकृत्य चोपदिशति—चतुष्पदैरिति०, व्याख्या—कश्चित्सुगुरुरिमान् भव्यान् मिलन् सन् तारयति इव—यथा सिंहः, स्वजातौ भवाः स्वजात्यास्तैश्चतुष्पदैः सह मिलन्निमान्निजपृष्ठलग्नान् चतुष्पदान् तारयति । अन्यच्चेह

प्रमादि-
दोषाः

सुटतात्पर्यः; भावार्थः पुनः पंचास्यानादिकथानकादवसेयः, तच्च कथानकं लोके प्रसिद्धमपि स्पष्टार्थं किंचिदुच्यते, यथा कस्मिंश्चित्तृणाकीर्णेऽरण्ये कुतश्चिदागतसिंहाद्बिभ्यद्भिः सर्वैश्चतुष्पदैः संभूय सिंहो योगक्षेमकारीति मत्वा स्वामित्वेन प्रपन्नः । तदनु तत्रारण्ये कदाचिद्दावानले उत्थिते सर्वस्वजातीयचतुष्पदविज्ञप्तेन सिंहेन सर्वे स्वजातीया यथाक्रमं स्वलाङ्गूले लग्ना एकफालया महानदीमुल्लंघ्य परं पारं प्रापिताः, पुनः कालान्तरेणारण्ये पल्लविते तथैव ते स्वस्थानं प्रापिताः । इति सिंहविलसितं दृष्ट्वा केनचिद्दुर्धिया सिंहस्पर्धिना शृगालेन केचिद्दीनपुण्याः स्वसेवकीकृताश्चतुष्पदाः, कालान्तरेणान्यदा तत्र दावानले प्रज्वलिते ते तल्लाङ्गूले लग्नाः शशकादयश्चतुष्पदा एकफालयैव तेन शृगालेन महानदीप्रवाहे पातिता निमग्नाः इति, अत्र सुगुरूणां सिंहदृष्टांतता कुगुरूणां शृगालदृष्टांतता च स्पष्टैव इति । इति कारणात् अमिलन्—संगतिमकुर्वन् स—कुगुरुर्वरं—सम्यग् भवतीत्यर्थः ॥ १७८ ॥ १४ ॥

अथ गुर्वादियोगे सत्यपि प्रमादवतां जनानां दृष्टांतपूर्वकं शोचनीयतां सूचयन्नुपदिशति—

**पूर्णे तटाके तृषितः सदैव, भृतेऽपि गेहे क्षुधितः स मूढः ।**
**कल्पद्रुमे सत्यपि ही दरिद्रो, गुर्वादियोगेऽपि हि यः प्रमादी ॥ १७९ ॥ १५ ॥**

---

कश्चित् कुगुरुरस्मानाश्रितान् तैर्निजाश्रितैः सह मज्जति—ब्रुडति, कस्मिन् ?—दुर्गे—जलविषमस्थाने कूपादौ कश्चिच्छृगालवद्, यथा शृगालः स्वजातैश्चतुष्पदैः सह मिलन् तैर्निजाश्रितैः सहैव निमग्नः इति हेतोः सः कुगुरुः शृगालवन्निर्बलः अमिलन् सन् वरं—श्रेयो भवति, अत्र कूपपतितचंद्रार्कपंचसिंहशृगालयोर्ज्ञातं ज्ञातव्यमिति ॥ १७८ ॥ १४ ॥

**धनवि०**—स जनो **मूढो**—मूर्खः **पूर्णे**—आकंठं जलेन भृतेऽपि **तटाके**—सरसि **सदैव**—निरंतरं **तृषितः**—तृषाक्रांतो ज्ञेयः, च पुनः स मूढः पुमान् **भृतेऽपि**—सिद्धान्नादिना भरितेऽपि **गेहे क्षुधितः**—क्षुधाक्रांतो ज्ञेयः, हीति सर्वत्र खेदे, च पुनः स मूढः पुमान् **कल्पद्रुमे**—कल्पवृक्षे **सत्यपि दरिद्रो** ज्ञेयः, सः क इत्याह—**यः** पुमान् हि निश्चितं **गुर्वादियोगेऽपि** देवगुरुधर्मसामग्र्यां सत्यामपि **प्रमादी**—प्रमादवान् भवतीति ॥ १७९ ॥ १५ ॥

अथ देवगुरुधर्मेष्वान्तरप्रीतिमन्तरेण संपूर्णस्यापि जन्मनोऽसारतां दर्शयन्नुपदिशति—

**न धर्मचिंता गुरुदेवभक्ती, येषां न वैराग्यलवोऽपि चित्ते ।**
**तेषां प्रसूक्लेशफलः पशूनामिवोद्भवः स्यादुदरंभरीणाम् ॥ १८० ॥ १६ ॥**

**धनवि०**—**येषां** पुरुषाणां **चित्ते न धर्मचिंता**—किमद्य सुकृतं कृतं ? किमद्य करणीयमित्यादिचिंतनरूपा न जायते, पुनर्येषां चित्ते **गुरुदेवभक्ती**—गुरुदेवयोर्भक्ती—आन्तरप्रीत्याऽशनपानवसनादिप्रदानप्रासादप्रतिमाप्रतिष्ठापर्युपासनादिरूपे **न** भवतः, पुनर्येषां चित्ते **वैराग्यलवोऽपि**—संसारविरक्ततालेशोऽपि नास्ति, **तेषां** पुंसा**मुदरंभरीणां**—केवलं स्वोदरपूरकाणा**मुद्भवो**—जन्म उत्पत्तिः **पशूनामिव**—काकश्वाना-

---

**रत्न०**—अथ गुर्वादीनां योगे मा प्रमादीरिति दृष्टांतदानेनोपदिशति—**पूर्णे तटाके** इति०, व्याख्या—स पुमान् पूर्णे तटाके सत्यपि सदैव—नित्यं तृषितोऽस्ति, स मूढो गेहे सुखभक्षिकादिना भृते सति क्षुधितोऽस्ति, हीति खेदे, अङ्गणे कल्पद्रुमे सत्यपि दरिद्रोऽस्ति, स कः ?—यो गुर्वादीनां—गुरुदेवधर्माणां योगे सत्यपि प्रमादी—प्रमत्तोऽस्तीति ॥ १७९ ॥ १५ ॥

**रत्न०**—एतदेव प्रकारांतरेणाचष्टे—**न धर्मचिंतेति०**, व्याख्या—येषां पुंसां धर्मस्य चिंता—चिंतनमहं प्रतिदिनं कं धर्मं करोमि न करो-

दीनानिव प्रसूः—जननी तस्याः क्लेशो—यौवनविनाशगर्भवासप्रसवादिपरिश्रमः स एव फलं—प्रयोजनं यस्य स प्रसूक्लेशफलः स्याद्—भवतीत्यर्थः ॥

अथैनं द्वारमुपसंहरन् शुद्धदेवगुरुधर्मार्थं यस्य धनं नोपयुज्यते तस्य धनस्य दौर्गत्यहेतुतां दर्शयन्नुपदिशति—

**न देवकार्ये न च संघकार्ये, येषां धनं नश्वरमाशु तेषाम् ।**
**तदर्जनाद्यैर्वृजिनैर्भवांधौ, पतिष्यतां किं न्ववलंबनं स्यात्? ॥ १८१ ॥ १७ ॥**

**धनवि०**—आशु—शीघ्रं **नश्वरं**—विनाशि **येषां** पुरुषाणां **धनं**—द्रव्यं **देवकार्ये**—देवप्रासादप्रतिमाप्रतिष्ठादिप्रयोजने **नायाति**, च पुनः **संघकार्ये**—संघः—साधुसाध्वीश्रावकश्राविकासमुदायस्तस्य कार्ये—प्रयोजने येषां धनं **नायाति**, **तेषां** पुंसां **तदर्जनाद्यैः**—धनोपार्जनप्रमुखैः, आद्यपदेन पंचाश्रवप्रवृत्तिपरिग्रहो, **वृजिनैः**—पापैर्**भवांधौ**—संसारकूपे **पतिष्यतां**—पतनं करिष्यतां नु इति वितर्के **किमवलंबनम्**—अवष्टंभः

---

नीति लक्षणा नास्ति, तथा गुरुदेवयोर्भक्ती—भजने न स्तः, तथा विरागस्य भावो वैराग्यं तस्य लवोऽपि—लेशोऽपि नास्ति, कस्मिन्?—चित्ते, तेषां पुंसामुद्भवो—जन्म स्यात्, किंल०?—प्रसूः—जनन्याः क्लेश एव—कष्टकरणमेव फलं यस्य सः, केषामिव?—पशूनामिव, यथा पशूनाम्—शूकरादीनामुद्भवः केवलं जननीक्लेशकरः स्यात्, यतः किंलक्षणानाम्?—उदरं बिभ्रतीति तेषां ॥ १८० ॥ १६ ॥

रत्न०—अथ सुपात्रे धनव्ययं प्रकारांतरेणोपदिशति—**न देवकार्ये** इति०, व्याख्या—येषां धनिनां धनं देवकार्ये—नवीनप्रासादनिर्मापणबिंबप्रतिष्ठाजीर्णप्रासादोद्धारादिलक्षणे न भवति—नोपयोगि भवतीत्यर्थः च पुनः संघस्य—साधुसाध्वीश्रावकश्राविकालक्षणस्य कार्ये—साधर्मिकवात्सल्यादिलक्षणे न भवति, किंल०?—नश्वरं—नाशशीलं, कथम्?—आशु—शीघ्रं तेषां तस्य धनस्यार्जनाद्यैर्वृजिनैः—पापैर्भवांधौ—संसारकूपे पतिष्यतां सतां नुरिति

स्याद्—भवतीति ॥ १८१ ॥ १७ ॥

इति श्रीतपागच्छ० शिष्योपाध्यायश्रीधनविजयगणिविरचितायां गुरुदेवधर्मशुद्धिनाम्नी द्वादशी पदपद्धतिः ॥ १२ ॥

## १३ यतिशिक्षोपदेशाधिकारः ॥

अथानंतरद्वारे गुरुदेवधर्मशुद्धिरुक्ता, सा च गुर्वधीना, गुरुश्च विरतिधार्येव, विरतिश्च यत्यधीनेति विरतिधारिणो यतीन् प्रति शिक्षामुपदिशन्नाह—

**अथ यतिं प्रति शिक्षोपदेशः ।**

अथ यतिं प्रति शिक्षोपदेश इति, स्पष्टम् । अत्रापि विरतिधारिणां मंगलार्थं नमस्कारमुपदेशद्वारेणाह—

**ते तीर्णा भववारिधिं मुनिवरास्तेभ्यो नमस्कुर्म्महे, येषां नो विषयेषु गृद्ध्यति मनो नो वा कषायैः प्लुतम् ।**
**रागद्वेषविमुक्त प्रशांतकलुषं साम्याप्तशर्माद्वयं, नित्यं खेलति चाप्तसंयमगुणाक्रीडे भजद्भावनाः ॥ १८२ ॥ १ ॥**

---

विशेषे अवलंबनम्—आधारः किं स्याद् ?, अपि तु किं न स्यादिति, धर्महीनाः संसारकूपे पतिष्यंत्येवेति ॥१८१॥१७॥ इति द्वादशोऽधिकारः ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धुलब्धप्रतिष्ठवरवाचकरत्नचंद्रः । अध्यात्मकल्पफलदेऽत्र चकार वृत्तिं, तत्रास्तिकव्रत १२ मितो विवृतोऽधिकारः १२

धनवि०—तेऽमेऽत्रैव यच्छब्देन वक्ष्यमाणा मुनिवरा–मुनिषु–यतिषु वराः–प्रधानाः महामुनय इत्यर्थो भववारिधिं–संसारसमुद्रं तीर्णाः–पारं प्राप्ताः, पुनस्तेभ्यो मुनिवरेभ्यो वयं नमस्कुर्म्महे–नमस्कारं कुर्मो, येषां मुनिवराणां मनः–चित्तं विषयेषु–शब्दादिषु नो गृध्यति–आसक्तिं नो याति, वा–अथवा येषां मनः कषायैः–क्रोधादिभिर्नो प्लुतं–नाप्लावितं, च पुनर्येषां मनो रागद्वेषौ विमुंचति–त्यजतीति रागद्वेषविमुक्, च पुनर्येषां मनः प्रशांतकलुषं–प्रकर्षेण शांतं–निःसत्ताकीभूतं कलुषं–पापकर्म यत्र तत्तथा, च पुनर्येषां मनः साम्याप्तशर्माद्वयं–साम्येन–समतया आप्तं–प्राप्तं शर्मणा–सुखेन सहाद्वयम्–ऐक्यं येन तत्तथा, च पुनर्येषां मनो भावना–अनित्यतादिका द्वादश भजत्–आश्रयत् आप्तसंयमगुणाक्रीडे आप्तः–प्राप्तो यः संयमलक्षणो गुणः स एवाक्रीडः–उद्यानं तत्र खेलति–क्रीडतीत्यन्वयः ॥१८२॥

---

रत्न०—अथ यतिं प्रति शिक्षोपदेशाख्यस्त्रयोदशोऽधिकारो विवरीतुं प्रस्तूयते–तत्र प्रथमं यतिस्वरूपमेवोपदिशति–ते तीर्णा इति०, व्याख्या—ते मुनिवरा भववारिधिं तीर्णाः, तथा तेभ्यो मुनिवरेभ्यो वयं नमस्कुर्महे, ते के?–येषां मनो विषयेषु–शब्दादिषु न गृध्यति–न गार्ध्यं भजते, वा पुनः कषायैः–क्रोधाद्यैर्न प्लुत–न निमग्नं, न व्याप्तमित्यर्थः, च पुनराप्तैः–अर्हद्भिरुपदिष्टा ये संयमस्य गुणाः–क्षांत्यादयस्ते एवाक्रीड–उद्यानं तस्मिन् खेलति–क्रीडति, अथवा आप्तः–प्राप्तः संयमगुणा एवाक्रीड–उद्यानं तत्र खेलतीति व्याख्येयं, किं कुर्वन्?–भजत्–श्रयत्, का?–भावनाः–पञ्चविंशति मतस्य, एवंलक्षस्य पचपंचसद्भावाद्, अथवा अनित्यत्वादयो द्वादश, किंलक्षणं?–रागद्वेषौ विमुंचतीति रागद्वेषविमुक्, पुनः कीदृक्?–प्रशान्तानि कलुषानि–पापानि यस्मात्तत्, पुनः कीदृक्?–साम्येन–समतया आप्तं शर्मणा–सुखानामद्वयम्–ऐक्यं येन तत्, समभावसुखस्यानुपमत्वादिति, एतद्विशेषणत्रययुक्तस्यैव मनसो भावनाश्रयणमिति ॥ १८२ ॥ १ ॥

तीर्णादयः के?

अथोद्दिष्टमेवार्थं पद्यद्वयेनाह—

स्वाध्यायमाधित्ससि न प्रमादैः, शुद्धा न गुप्तीः समितीश्च धत्से ।
तपो द्विधा नार्जसि देहमोहादल्पेऽपि हेतौ दधसे कषायान् ॥ १८३ ॥ २ ॥
परीषहान्नो सहसे न चोपसर्गान्न शीलांगधरोऽपि चासि ।
तन्मोक्षमाणोऽपि भवाब्धिपारं, मुने! कथं यास्यसि वेषमात्रात्? ॥ १८४ ॥ ३ ॥

धनवि०—हे मुने!—व्रतिन् प्रमादैः—मद्यादिभिर्हेतुभूतैः स्वाध्यायं—वाचनाप्रच्छनादिपंचविधं नाधित्ससि—नो आधातुं—कर्तुमिच्छसि; आङ्पूर्वकडुधांगक् धारणे इत्यस्य धातोः सनि आधित्ससीति, क्रियाकलापे उत्पत्त्यर्थे उक्तोऽपि प्रयोगो धातूनामनेकार्थत्वात्करणार्थे साधुः; देहलीप्रदीपन्यायेन प्रमादैरित्युभयत्र योज्यं, तेन प्रमादैः शुद्धा—निरतिचारा गुप्तीः—मनोगुप्त्यादिकाः, च पुनः समितीः—ईर्यासमित्यादिका न धत्से—न धरसि; च पुनर्देहमोहाद्—देहे—शरीरे मोहो—ममेदं शरीरं मा दुर्बलं भवत्विति मौढ्यं तस्माद्द्विधा—बाह्याभ्यंतरभेदेन द्विप्रकारं तपः—तपःकर्म नार्जसि—न करोषीत्यर्थः; च पुनरल्पेऽपि—तुच्छेऽपि हेतौ—कषायकारणे कषायान्—क्रोधादिकान् दधसे, दधि धारणे इत्यस्य धातोः प्रयोगः ॥ १८३ ॥ २ ॥

च पुनः परीषहान्—क्षुत्तृट्प्रमुखानुपसर्गांश्च—देवमनुष्यतिर्यक्कृतान् पराभवान्नो—नैव सहसे, षहि मर्षणे इत्यस्य क्षमसे इत्यर्थः;



---

रत्न०—अथ वेषमात्रेण मा रज्यखेति प्रकारान्तरेणोपदिशति—स्वाध्यायमाधित्ससि०, परीषहान्नो सहसे इति०, युग्मव्याख्या—

च पुनः **शीलांगधरोऽपि**—अष्टादशसहस्रशीलांगरथधारकोऽपि **नासि**—न भवसि; तानि चाष्टादशशीलांगसहस्राण्येवं "जोए करणे सन्ना इंदियभोमाइ समणधम्मे य। सीलंगसहस्साणं अट्ठारसगस्स निप्फत्ती ॥ १ ॥" [ योगाः करणानि संज्ञाः इंद्रियाणि भूम्यादि श्रमणधर्माः। शीलांगसहस्राणामष्टादशकस्य निष्पत्तिः ॥ १ ॥ ] इत्येवं स्थापनाम्नायः; भावना त्वियं—"मणेणं ण करेइ आहारसन्नाविप्पजढो इंदियसंवुटो खंतिसंपन्नो पुढविकायसंरक्खओ" [ मनसा न करोति विप्रत्यक्ताहारसंज्ञः संवृतेन्द्रियः क्षान्तिसंपन्नः पृथ्वीकायसंरक्षकः ] इत्यादि द्रष्टव्यमिति **यतिप्रतिक्रमणसूत्रावचूर्णौ**। **तत्**—तस्मात्कारणान्**मोक्षमाणोऽपि**—मुक्तिं गमिष्यन्नपि 'मुचृंती मोक्षणे' इत्यस्य, **वेषमात्रात्**—तपःसंयमादिरहितत्वेन केवलवेषा**द्भवाब्धिपारं**—संसारसमुद्रतीरं त्वं **कथं** ?—केन प्रकारेण **यासि**—प्राप्स्यसि ॥ १८४ ॥ ३ ॥

---

हे मुने! त्वं प्रमादात् स्वाध्यायं—जिनागमस्य पठितस्यापि गुणनं नाधित्ससि—न कर्त्तुमिच्छसि, तथा शुद्धा—निर्मला गुप्तीः—मनोवाक्कायनिरोधरूपाः न धत्से—न दधासि, च पुनः समितीः—ईर्याभाषैषणादाननिक्षेपपारिष्ठापनिकाः पंचापि ताः प्रति, न धत्से इति योज्यं, तथा तपो बाह्याभ्यन्तरभेदाद्द्विधा नार्जसि—स्वकीयत्वेन न करोषि, कस्माद् ?—देहे मोहो—मौढ्यं तस्मात्, मदीयो देहो मा कृशो भवत्विति देहमोहादित्यर्थः, तथा हि निश्चितं अल्पे हेतौ—निमित्ते कषायान् प्रति दधसे—धत्से, तथा परीषहान्—क्षुत्तृषाशीतोष्णादिलक्षणान् नो सहसे—न क्षमसे, तथा च पुनरुपसर्गान् परैः कृतताडनाक्रोशादिकान् न सहसे, देहमोहादितिग्राह्यं, तथा "जे नो करंति मणसा निज्जिये"त्याद्यार्योक्तानामष्टादशसहस्रप्रमाणशीलांगानां धरोऽपि नासि, तत्—तस्माद्धेतोस्त्वं मोक्षमाणोऽपि—मुक्तिमिच्छुरपि भवाब्धिपारं—ससारसमुद्रपरतटं लोकाग्रभागलक्षणं सिद्धस्थानं कथं यास्यसि ?, अपि तु न यास्यसि, यस्मात् ?—केवलं वेषो वेषमात्रं तस्माद्, भावचरणशून्यादित्यर्थः ॥ १८३–८४ ॥ ३ ॥ "युग्मं"

केवलवेषनैरर्थ्यं

पुनः केवलवेषस्याकिंचित्करत्वं दर्शयन्नुपदिशति—

आजीविकार्थमिह यद्यतिवेषमेष, धत्से चरित्रममलं न तु कष्टभीरुः।
तद्वेत्सि किं न? न बिभेति जगज्जिघृक्षुर्मृत्युः कुतोऽपि नरकश्च न वेषमात्रात् ॥ १८५ ॥ ४ ॥

धनवि०—यद्-यस्मादेष त्वमिह-जगति आजीविकार्थं-जठरमात्रपूर्त्तये यतिवेषं-रजोहरणादिलिङ्गं धत्से-धरसि, न तु कष्टभीरुः सन्-उपसर्गपरीषहसहनलक्षणकष्टभीरुकोऽमलं-निरतिचारं चरित्रं-चारित्रं न धत्से, तत्-तर्हि किं न वेत्सि?-न जानासि यज्जगज्जिघृक्षुः-विश्वं ग्रहीतुमिच्छुर्मृत्युः-यमः कुतोऽपि वेषान्न बिभेति-न भीतिं प्राप्नोति, च पुनर्नरको-निरयो वेषमात्राद्-ज्ञानदर्शनचारित्ररहितकेवलरजोहरणादिलिङ्गमात्रान्न बिभेतीति ॥ १८५ ॥ ४ ॥

---

रत्न०—पुनर्वेषमाश्रित्यैवोपदिशति-आजीविकार्थमिति०, व्याख्या—हे नामसाधो! इह जिनप्रवचने एष त्वं आजीविकायै-आजीविकार्थं यद्यतिवेषं धत्से-दधसे, तुरिति विशेषे, कष्टेभ्यो-लोचोष्णनीरपानादिभ्यो भीरुः सन् अमलं-निरतिचारसलं चरित्रं-चारित्रं न धत्से, तत्-तर्हि त्वं न वेत्सि-न जानासि?, काकूक्त्या व्याख्यानं, यत एष मृत्युः कुतोऽपि न बिभेति, धावमान आयास्यत्येव, च पुनर्नरकः केवलं वेषो वेषमात्रं तस्माद्, धर्मग्रहणे धर्मिग्रहणमिति न्यायात्केवलवेषधारिण इत्यर्थः, न बिभेति, किं०?—जगंति प्रति जिघृक्षुः-ग्रहीतुमिच्छुर्नरकोऽपि तथैव, प्रायेण भूयान् जनो नरकगाम्येव, तेन मृत्युरकांक्षमाणोऽपि आयास्यत्येव, वेषेण मुग्धजनविप्रतारणसमुत्थपापभरादकांक्षमाणो नरकोऽप्यायास्यत्येवेति केवलं वेषधारणं निरर्थकमेवेति ॥ १८५ ॥ ४ ॥

अथ विरतिविरहिते केवलवेषधारणे प्रत्युत दोषं दर्शयन्नुपदिशति—

वेषेण माद्यसि यतेश्चरणं विनाऽऽत्मन्!, पूजां च वांछसि जनाद्बहुधोपधिं च ।
मुग्धप्रतारणभवे नरकेऽसि गंता, न्यायं बिभर्षि तदजागलकर्त्तरीयम् ॥ १८६ ॥ ५ ॥

अजागल-कर्त्तरीयः

धनवि०—हे आत्मन्! त्वं चरणं—चारित्रं विना यतेर्वेषेण—मुनिलिङ्गेन माद्यसि—हृष्यसि, तत्र, 'मदैच् हर्षे' इत्यस्य 'शमसप्तकस्ये-(४-२-१११)ति दीर्घत्वे माद्यसीति साधुः, च पुनः पूजां—चंदनादिनाऽर्चां जनाद्—भक्तलोकाद्बहुधा—बहुप्रकारं नानाप्रकारं वस्त्रपात्रलक्षणमुपधिं वांछसि; अनंतरोक्ते फलं दर्शयति—मुग्धप्रतारणभवे—निर्विवेकवंचनोत्पन्ने नरके—दुर्गतिरूपे त्वं गंता—यावाऽसि, तत्—तस्मात्त्वमजागलकर्तरीयम्—अजागलकर्त्तरीसत्कं न्यायं—पंडितलोकप्रतिपादनव्यवहारं बिभर्षि—पुष्णासि धरसि वा । अजागलकर्त्तरीन्यायस्त्वयं—

---

रत्न०—पुनः केवलो वेषो न प्रमाणमिति भंग्योपदिशति—वेषेण माद्यसीति०, व्याख्या—हे आत्मन्! त्वं यतेर्वेषेण माद्यसि—हृष्यसि, कथं?—विना, किं?—चरणं—चारित्रं, च पुनस्त्वमभिगमवंदननमस्यनसत्कारादिका पूजां वांछसि, च पुनर्बहुधा—बहुप्रकारेणोपधिं—वस्त्रपात्रकंबलादिकं वांछसि, कस्माद्?—जनाद्दक्षादिलोकादित्यर्थः, परं त्वं पश्चान्नरके गंताऽसि, किंलक्षणे?—मुग्धानां श्राद्धानां प्रतारणं—वंचनं बकवत्कपटेर्यापथगमनमुखवस्त्रिकाकरणस्वाध्यायकरणादिका तस्माद्भवतीति मुग्धप्रतारणभवस्तस्मिन्, तत्—तर्हि त्वं अजागलकर्त्तरीति न्यायं बिभर्षि—धत्से, यथाऽजा नीलतृणादिकं भुंजानाः कंठे घुर्घरकं दधाना पादयोर्नूपुरे बिभ्राणा सती माद्यति, परं कदाचित् प्राघूर्णकेष्वागतेषु मम कंदले कर्त्तरी पतिष्यतीति न वेत्ति, तथा

यथा—काचिदजा शौनिकेन हननार्थं सज्जीकृता सहसा च भूपतितां धूलिपटलांतःप्रच्छन्नीभूतां कर्त्तरीं जातिस्वभावेन पादजनितभूखननादिना स्वयमेव स्वघातिकां प्रकटीकरोति, तथा त्वमपि चारित्रं विना केवलेन वेषेण पूजास्पृहयोपधिस्पृहया च स्वयमेव नरकमर्जसीति भावः ॥ १८६ ॥ ५ ॥

अथ प्रत्यक्षेण प्रतिदिनानुष्ठेयमपि तपःसंयमादि बहु सातिचारमकिंचित्करमित्युपदिशति—

**जाने(तो)ऽस्ति संयमतपोभिरमीभिरात्मन्नस्य प्रतिग्रहभरस्य न निष्क्रयोऽपि ।**
**किं दुर्गतौ निपततः शरणं तवास्ते?, सौख्यं च दास्यति परत्र किमित्यवेहि? ॥ १८७ ॥ ६ ॥**

धनवि०—हे आत्मन्नहमेवं जाने—मन्ये, तदेव ज्ञानं प्रकटीकरोति—**अमीभिः**—मनःशुद्धिरहितैः सातिचारैः लोकरंजनार्थं क्रियमाणैर्वा

---

त्वमपि निर्मलरजोहरणमुखवस्त्रिकाचोलपट्टादिवेषेण माद्यसि राजमहेभ्याभिगमनादिसत्कारं वांछसि मुग्धजनप्रतारणेनोपधिं मेलयसि परं धावदायास्यंतं नरकं न पश्यसीत्युपनयमात्रं, तदा (यद्वा) काचिज्जीववधकेन वधस्थानं नीता, स वधकोऽजापार्श्वे वधोपकरणं कर्त्तरीं मुक्त्वा कार्यार्थं गृहांतर्गतः, तयाऽजया पादाभ्यां भूमिं खनित्वा कर्त्तरी भूम्यंतर्निक्षिप्ता, परं कर्त्तरीधारोपरि स्थिता, अथ वधक आगतो, निक्षिप्तामिमां मा पश्यत्विति धिया तदुपरि शयानायास्तस्या गले कर्त्तरी समागता, सा मृता, कश्चिदनया रीत्या अजागलकर्त्तरीन्यायं वदति, अथोपनय उच्यते—त्वमजावदज्ञानान्नरकमाच्छादयसि परमवश्यंभाविभावत्वात्तव नरक आयास्यत्येवेति, ततस्त्वं प्रथममेवाजावदज्ञानो मा भव, किंतु सावधानो भवेति तात्पर्यार्थः ॥ १८६ ॥ ५ ॥

**रत्न०**—पुनरेतदेवाचष्टे—**जातोऽस्तीति०**, व्याख्या—अमीभिर्लोकरञ्जनार्थं किंचिद्—ईषत् संयमतपोभिरस्य प्रतिग्रहभरस्य—अशनपानखादि-

प्रत्यक्षेण दृश्यमानैः **संयमतपोभिरस्य** प्रत्यक्षेण दृश्यमानस्य **प्रतिग्रहभरस्य**—मनोवांछिताशनपानवस्त्रपात्रपीठफलकवसत्यादिग्रहणरूपस्य **निष्क्रयोऽपि**—भाटकमपि **नास्ति**, कुतस्तन्मूल्यस्य संभावनेति भावः; अत्र तदेति गम्यं तेन तदा **दुर्गतौ**—नरकादौ **पततः**—अधोगमनक्रियां कुर्वतस्तव **किं**—किंनामकं **शरणं**—तत्र पतननिवारणसमर्थं वस्त्वास्ते?, **च** पुनः **परत्र**—परलोके **सौख्यं**—सुखं **किं**—किंनामकं सुकृतं **दास्यति** ? **इति**—अमुना प्रकारेणोपदिष्टम**वेहि**—सम्यग्जानीहि ॥ १८७ ॥ ६ ॥

ननु सत्कारादिकमैहिकमेव तपःसंयमफलमस्त्वित्याशंकायामाह—

**किं लोकसत्कृतिनमस्करणार्चनाद्यै, रे मुग्ध! तुष्यसि विनाऽपि विशुद्धयोगान्।**
**कृंतन् भवांधुपतने तव यत्प्रमादो, बोधिद्रुमाश्रयमिमानि करोति पर्शून् ॥ १८८ ॥ ७ ॥**

धनवि०—**हे मुग्ध !**—हे अज्ञान **विशुद्धयोगान्**—सुप्रवृत्तमनोवाक्काययोगान् **विना लोकसत्कृतिनमस्करणार्चनाद्यैः**—जनकृतसत्कारवंदनपूजनादिभिः **किं तुष्यति ?**—हृष्यसि, **यद्**—यस्मात्**प्रमादः**—क्रियाशैथिल्यलक्षणो मद्यादि वा **भवांधुपतने**—संसारकूपपतने

---

भक्तादिमवधपात्रकम्बलपादप्रोञ्छनपूजासत्कारादिकस्य मुग्धजनवंचनप्राप्तस्य निष्क्रयोऽपि—मूल्यमपि न जातोऽस्ति, येन गृहस्थेभ्यो गृहीतप्रतिग्रहभरस्य ऋणमपि शुद्ध्यतीत्यर्थः, तत्तत्र दुर्गतौ निपततः सतः किं शरणमास्ते ?, अपि तु न किमपि, च पुनः परत्र—परभवे सौख्यं किं दास्यति ?, निष्क्रयादधिकं सुकृतमित्यध्याहार्यं, हे आत्मन् ! इत्यवेहि ॥ १८७ ॥ ६ ॥

रत्न०—अथ लोकसत्क्रियादिभिर्मा तुष्येत्युपदिशति—**किं लोकसत्कृतीति०**, व्याख्या—हे मुग्ध ! हे वेषयते लोकानां—वेषदर्शनरञ्जितानां

तव बोधिः—सम्यक्त्वावाप्तिः स एव द्रुमो—वृक्षः स एवाश्रयः—पतनसमयेऽवलंबनलक्षणस्तं बोधिद्रुमाश्रयं कृंतन्—छिंदन् इमानि लोकसत्कृतिनमस्करणादीनि पर्शून्—कुठारोपमानि करोति—सृजतीत्यर्थः; भावार्थस्तु अत्र प्रमादश्छेदकपुरुषस्थानीयो बोधिर्द्रुमस्थानीयो लोकसत्कृत्यादि पर्शुस्थानीयमित्यादियोजनया "जे बंभचेरभट्ठा पाए पाडंति बंभयारीणं । ते हुंति टुंटमुंटा बोही य सुदुल्लहा तेसिं" ॥१॥ [ये ब्रह्मचर्यभ्रष्टाः पादौ स्थापयन्ति ब्रह्मचारिणाम् । ते भवन्ति टुंटमुंटा बोधिरपि सुदुर्लभस्तेषाम् ॥ १ ॥] इति गाथाभावनया च स्पष्ट एवेति ॥ १८८ ॥ ७ ॥

अथ केवलवेषधरणे धूर्त्तसाम्यं दर्शयन्नुपदिशति—

**गुणांस्तवाश्रित्य नमंत्यमी जना, ददत्युपध्यालयभैक्ष्यशिष्यकान् ।**
**विना गुणान् वेषमृषेर्बिभर्षि चेत्, ततष्ठकानां तव भाविनी गतिः ॥ १८९ ॥ ८ ॥**

धनवि०—अमी प्रत्यक्षसिद्धा गुणानुरागिणो जना—लोकास्तव गुणानाश्रित्य—ज्ञानदर्शनचारित्रादिगुणवंतं त्वां ज्ञात्वेत्यर्थः नमंति—

---

सत्कृतिः—सत्कारोऽभ्युत्थानादिः नमस्करणं—क्षमाश्रमणादिना पञ्चाङ्गप्रणामः अर्चनं—श्रीखंडघुसृणादिना सुवर्णपुष्पादिनाणकैश्च तान्याद्यानि येषां तैः किं तुष्यसि ?—किं तोषं प्राप्नोषि, कथं ?, विना, कान् ?—विशुद्धा—दोषरहिता योगा—मनोवाक्कायप्रयोगलक्षणास्तान् यद्—यस्मात्कारणात्प्रमाद इमानि लोकसत्कृतिनमस्करणार्चनाद्यानि पर्शून्—कुठारान् करोति, किं कुर्वन् ?—कृंतन्—छिंदन्, कं ?—बोधिरेव द्रुमस्तस्याश्रयम्—आलंबनं प्रति, कस्मिन् ?—भव एवांधुः—कूपस्तस्मिन् पतनं तस्मिन्, यथा कस्यचित् कूपे पततस्तटस्थद्रुम आलम्बनं भवति तथा जीवस्य संसारे पततो बोधिरालम्बनं भवति, तं बोधिद्रुमाश्रयं प्रमादः कृंतन्निमानि पर्शून् करोतीति भावः ॥ १८८ ॥ ७ ॥

नमस्यंति, तथा उपध्यालयभैक्ष्यशिष्यकान्—वस्त्रपात्रवसत्यशनपानखादिमस्वादिमविनेयान्, स्वार्थे कप्रत्यये, अमी गुणानुरागिणो ददति—प्रयच्छंतीत्यर्थः, चेद्—यदि गुणान् विना ऋषेः—मुनेर्वेषं—रजोहरणादिलिङ्गं विभर्षि—धरसि ततस्तव ठकानां—धूर्त्तानां गतिः—नरकादिलक्षणा भाविनी—भवित्रीत्यन्वयः । अत्र ठकेति लोकप्रसिद्धो देशीशब्दो वा भावनीय इति ॥ १८९ ॥ ८ ॥

पुनश्चारित्राभावे प्रतिग्रहोऽपि नरकायैवेत्युपदिशति—

**नाजीविकाप्रणयिनीतनयादिचिंता, नो राजभीश्च भगवत्समयं च वेत्सि ।**
**शुद्धे तथाऽपि चरणे यतसे न भिक्षो !, तत्ते प्रतिग्रहभरो नरकार्थमेव ॥ १९० ॥ ९ ॥**

धन०—हे यते ! तवाजीविकाप्रणयिनीतनयादिचिंता नास्तीत्यन्वयः, अत्राजीविका—उदरपूरणोपायः प्रणयिनी च—कलत्रं तनयाश्च—अङ्गजास्ते आदौ येषां ते तथा तेषां चिंता—को व्यापारः कर्त्तव्यः ? कथं वा पाणिग्रहणं कर्त्तव्यं ? कथं वा ते आज्ञायां रक्षणीयाश्चेत्यादिका

---

रत्न०—पुनरेतदेव द्रढयति—गुणांस्तवाश्रित्येति०, व्याख्या—हे द्रव्ययते ! अमी धर्मार्थिनो जनाः संयमगुणानाश्रित्य तुभ्यं नमंति तथोपधिः—वस्त्रादिकस्तथा आलयो—वसतिर्भिक्षाणा समूहो भैक्ष्यं शिष्या एव शिष्यकाः, शिष्यत्वेन पुत्रा इत्यर्थः, द्वंद्वसमासे तान् प्रति ददति, हे ऋषे ! चेद्—यदि त्वं गुणान् विना वेषं विभर्षि—धत्से ततः—तस्मात्कारणात्तव ठगाना—लोकोक्त्या ठगारा इति प्रसिद्धानां गतिः—अवस्था भाविनीति, यथा ते वंचलोकान् वंचयित्वा दुर्गतौ यांति तथा त्वमपीति ॥ १८९ ॥ ८ ॥

रत्न०—अथ यतित्वे सुखं दर्शयति—नाजीविकाप्रणयिनीति०, व्याख्या—हे यते ! तवाजीविका—उदरभरणं प्रणयिनी—स्त्री तनयाः—पुत्रास्त आदौ येषां ते आजीविकाप्रणयिनीतनयादयस्तेषा चिंता नास्ति, आदिशब्देन भ्रात्रादिस्वजनग्रहणं, तथा राज्ञो भीः—भयं नास्ति, सकलपरिग्रहमुक्त-

मानसी पीडा नास्ति, अत्रादिपदाद् हट्टगृहादिकरणकुटुंबभरणपोषणादिपरिग्रहः, च पुनः राजभी–राजा सर्वस्वं ग्रहीष्यति राजदेयं वा-दातव्यं चेत्यादिका भीतिः नास्ति, च पुनर्भगवत्समयं–जैनसिद्धांतं वेत्सि–जानासि, 'धरसि चागमपुस्तकानी'ति पाठे आगमपुस्तकानि–सिद्धांतपुस्तकानि धरसि–धत्से, तथापि–एवं सत्यपि शुद्धे चरणे–निरतिचारचारित्रे न यतसे–न यत्नं कुरुषे इत्यर्थः; तत्–तस्मात्ते–तव भिक्षादिलक्षणः प्रतिग्रहभरो–दत्तस्वीकारभारो नरकार्थमेवावसेय इति ॥ १९० ॥ ९ ॥

अथ चरणसामग्र्यां सत्यामपि तत्राप्रवृत्तौ विकल्पेन कारणद्वयं दर्शयन्नुपदिशति—

**शास्त्रज्ञोऽपि धृतव्रतोऽपि गृहिणीपुत्रादिबंधोज्झितोऽप्यंगी यन्नतते प्रमादवशगो न प्रेत्यसौख्यश्रिये ।**
**तन्मोहद्विषतस्त्रिलोकजयिनः काचित्परा दुष्टता, बद्धायुष्कतया स वानरपशुर्नूनं गमी दुर्गतौ ॥ १९१ ॥ १० ॥**

धनवि०—यच्छास्त्रज्ञोऽपि–सिद्धांतवेत्ताऽपि धृतव्रतोऽपि–प्रतिपन्नमहाव्रतोऽपि गृहिणीपुत्रादिबंधोज्झितोऽपि–कलत्रपुत्रपुत्रीप्रभृतिबंधनमुक्तोऽपि प्रमादवशगो–मद्यादिप्रमादपरवशं गतः अङ्गी–प्राणी प्रेत्यसौख्यश्रिये–पारभविकसौख्यसुखसंपदे न यतते—

---

त्वात्, च पुनर्भगवतः–अर्हतः समयम्–आगमं वेत्सि–जानासि, तथा आगमानां–जिनागमानां पुस्तकानि धरसीति पाठान्तरं, हे भिक्षो! तथापि त्वं शुद्धे–निरतिचारे चरणे–चारित्रे न यतसे–न यत्नं करोपि तत्–तर्हि ते–तव प्रतिग्रहस्य भरः–समूहो गुणवद्बुद्ध्या भक्तजनसमर्पिताशनपानवस्त्रपात्रादिको नरकाय–नरकार्थमेव वर्त्तत इति ॥ १९० ॥ ९ ॥

रत्न०—अथ जीवं प्रति मोहवैरिणो ज्ञापयति–शास्त्रज्ञोऽपीति०, व्याख्या—यदङ्गी–प्राणी प्रमादवशवर्त्ती सन् प्रेत्य–परभवे सौख्यश्रिये—

नोद्यमं कुरुते, तत्रिलोकजयिनः—त्रैलोक्यजयनशीलस्य मोहद्विपतो—मोहनीयकर्मवैरिणः काचिद्—अनिर्वाच्या दुष्टता—दुष्कर्मकारिता परा—सर्वोत्कृष्टा वर्त्तते इत्येकं, वा—अथवा स नरपशुः—नर एव पशुर्मनुष्यरूपेण गौरित्यर्थः वद्धायुष्कतया—निकाचितनरकाद्यायुष्कतया नूनं—निश्चितं दुर्गतौ—नरकादिदुर्योनौ गमी—गमनशीलोऽवसेय इति द्वितीयं कारणमिति ॥ १९१ ॥ १० ॥

अथानंतरमुक्तं 'धृतव्रतोऽपी'ति तेन धृतव्रतत्वे तदनाचरणे दोषं दर्शयन्नुपदिशति—

**उच्चारयस्यनुदिनं न करोमि सर्वं, सावद्यमित्यसकृदेतदथो करोषि ।**
**नित्यं मृषोक्तिजिनवंचनभारितात्तत्, सावद्यतो नरकमेव विभावये ते ॥ १९२ ॥ ११ ॥**

---

सुगमपदे न यतते—न यत्नं करोति प्रेत्यसुखाय, धर्मकर्मणीत्यर्थः ?, कि० ?—शास्त्राणि लौकिकानि लोकोत्तराणि च जानातीति शास्त्रज्ञः, अनेन बालकत्वं निरस्तं, पुनः कीदृशः ?—धृतानि व्रतानि—अहिंसादीनि पच येन स धृतव्रतः, अत एव गृहिणी—स्त्री पुत्रो—नंदनः आदिशब्दात् पुत्रीभ्रातृभगिन्यादिग्रहणं, गृहिणी च पुत्रश्च गृहिणीपुत्रौ तावादी येषां ते गृहिणीपुत्रादयस्त एव वंधा इव वंधा—वधनानि तैरुज्झितः—त्यक्तः, अत्रापिशब्दा विशेषार्थद्योतकाः, ततो मोह एव द्विपन्—वैरी तस्य मोहद्विपतः काचिदवाच्यस्वरूपा परा—प्रकृष्टा दुष्टता—दौष्ट्यं वर्त्तते, किंभूतस्य ?—त्रिलोकजयिनः—स्वर्गमृत्यपाताललोकजयिनः, वेति विशेषे, स नर एव पशुः—तिर्यङ् नररूपेण पशुरित्यर्थः नूनमिति संभावनायां दुर्गतौ—नरकादौ गमी—गंता, कया ?—वद्धमायुर्येनार्वाग्दुर्गतेरेव स वद्धायुष्कस्तस्य भावो वद्धायुष्कता तया, अत्रार्थे मोहवराकः किं कुर्याद् ?, येनायुर्वद्धं तदन्यथा न भवतीत्यर्थः, स पुमान् वानरश्चासौ पशुश्च वानरपशुः, यथा वानरपशुः काचन मनुष्यचेष्टां कुर्वन्नपि पशुरेव भवति तथाऽसावपि, शेषं तथैवेत्यपि व्याख्यानं कर्त्तव्यं, क्वचिद्वंधूज्झित इति वा पाठः ॥ १९१ ॥ १० ॥

**धनवि०**—हे आत्मन्! त्वमनुदिनं—प्रतिदिनं प्रतिक्रमणादिक्रियासमये इति—अमुना प्रकारेणोच्चारयसि—भणसि, अत्रोत्पूर्वस्य 'चरण् संशये' इत्यस्य चौरादिकस्योच्चारयसीति साधुः, इतीति किं?—हे भगवन्नहं सर्वं सावद्यं—सपापं कर्म न करोमि, अथो इत्यनंतरोक्तभणनानंतरमसकृद्—वारं वारमेतत् सावद्यकर्म करोषि; तत्—तस्मान्नित्यं—प्रतिदिनं सावद्यतः—सावद्यव्यापारतस्ते—तव नरकमेव—परभवे नरकगमनमहं विभावये—संभावयामि, सावद्यतः कथंभूतात्?—मृषोक्त्या—अलीकवचनेन जिनवंचनेन—'भगवन्! सर्वं सावद्यं यावज्जीवं न करोमी'ति भणित्वा पुनः पुनस्तत्करणेन भगवद्वंचनं तेन भारिताद्—भारः संजातोऽस्येति भारितस्तस्मात्तथेति ॥ १९२ ॥ ११ ॥

अथ जिनविप्रतारणफलं दर्शयित्वा जनविप्रतारणफलं दर्शयन्नुपदिशति—

**वेषोपदेशाद्युपधिप्रतारिता, ददत्यभीष्टानृजवोऽधुना जनाः।**
**भुंक्षे च शेषे च सुखं विचेष्टसे, भवान्तरे ज्ञास्यसि तत्फलं पुनः ॥ १९३ ॥ १२ ॥**

**धनवि०**—हे आत्मन्! वेषोपदेशाद्युपधिप्रतारिताः—वेषश्च—यतिलिङ्गमुपदेशश्च—दानादिषु प्रवृत्त्युत्साहजनकं वचस्तौ आदौ—प्रथमं

---

**रत्न०**—अथ द्रव्ययतेः प्रतिदिनं मृषावादित्वं सूचयन्नाह—उच्चारयस्यनुदिनमिति० व्याख्या—हे वेषयते! त्वं लोकरञ्जनार्थमपि अनुदिनं प्रतिक्रमणं कुर्वन् सर्वं सावद्यं—सपापं कर्म सचित्तारंभादिकं न करोमीत्युच्चारयसि, चुरादेश्चरधातोरयं प्रयोगः, आलापकपाठतः पठसीत्यर्थः, अर्थो अथार्थेऽव्ययमेतत्सावद्यं कर्म सचित्तारंभादिकमसकृद्—वारंवारं करोषि, तदेव सावद्यं तत्सावद्यं तस्मात्तत्सावद्यत एव मृषासावद्यत इति, अन्यानि सावद्यानि दूरे आस्तामित्यर्थः, ते—तवाहं नरकं विभावये—संभावयामि, तत्सावद्यतः किंलक्षणाद्?—नित्यम्—अहरहर्मृषोक्तिः—मृषा जल्पनं तया च जनवंचनं—लोकविप्रतारणं तेन भारितात्—पुष्टीकृतान्निचयीकृताद्वेति ॥ १९२ ॥ ११ ॥

कृच्छ्रवतो भरः

येषां ते तथा, आदिपदाद्वाणसमितिगुप्तिपालनदर्शनादिपरिग्रहः ते च ते उपधयश्च—दंभास्तैः प्रतारिता—वंचिता इत्यर्थः जना ऋजवः—भरत्या अधुना—सांप्रतं वर्त्तमानभवेऽभीष्टान्—मनोवांछितान् आहारोपध्यादीन् ददति, प्रयच्छंतीत्यर्थः, च पुनस्त्वं सुखं यथा स्यात्तथा भुंक्षे—खादसि, च पुनः सुखं शेषे—स्वपिषि, सुखं विचेष्टसे—क्रीडसि; तत्फलं पुनः—जनवंचनजनितं दुःखानुभवफलं तु नरकादिवेदनालक्षणं भवान्तरे—परभवे ज्ञास्यसि—अनुभविष्यसीति ॥ १९३ ॥ १२ ॥

अथानंतरोक्तार्थमेव प्रकारान्तरेण विशेषतो द्रढयति—

**आजीविकादिविविधार्त्तिभृशानिशार्त्ताः, कृच्छ्रेण केऽपि महतैव सृजंति धर्मान् ।**
**तेभ्योऽपि निर्दय ! जिघृक्षसि सर्वमिष्टं, नो संयमे च यतसे भविता कथं ही ? ॥ १९४ ॥ १३ ॥**

---

रत्न०—पुनर्वेषगाथिलोपदिशति—वेषोपदेशाद्युपधीति० व्याख्या—हे वेषधूर्त्त ! अधुना ऋजवो जनास्ते—तवाभीष्टानि—वांछितानि शर्करापानपयःपानद्राक्षाविशालिनिस्तुपमुद्गदालिर्हैयंगवीनजीवंतीशाकप्रक्षिप्तमरिचचूर्णप्रलेपभोजनतत्तद्देशोद्भवांशुकनिजबालकपुत्रपुत्र्यादीनि वस्तूनि ददति, किंलक्षणाः ?—वेषश्चार्यपतेरेवोपदेशो—धर्मोपदेशः सुस्वरत्वेन वलतरागाद्यालापपूर्वकमित्यर्थः तावादी येषां ते वेषोपदेशादयः, आदिशब्देन मस्तकस्थैर्यापथगमनप्रवर्त्तनादिग्रहणं ते एवोपधयः—छद्मानि तैः प्रतारिताः सतः, तत एव च पुनस्त्वं सुखं भुंक्षे शर्करागुडादीनि, च पुनः शेषे—स्वपिषि मृदुपथिकच्छया विस्तीर्णायामपि, नवनीतवन्मृदुसंस्तारके इत्यर्थः, तथा सुखं यथा स्यात्तथा विचेष्टसे—व्यवहरसि, एतत्सुखशब्दप्रयोगेण व्यंजितं, पुनस्तेषां सुखं भोजनशयनविचेष्टनाना फलं भवान्तरे ज्ञास्यसि, यदा नरके तिस्रोऽपि गाढवेदनाः प्रत्यनुभविष्यसि तदेत्यर्थः, सांप्रतं प्रमादपतितस्य ता किं ब्रूम इति ? ॥ १९३ ॥ १२ ॥

धनवि०—केऽपि महानुभावा जना महतैव कृच्छ्रेण—गुरुतरकष्टेन धर्मान्—दानादिधर्मान् प्रतिक्रमणपौषधादिधर्मान् वा सृजंति—कुर्वंतीति, जनाः किंलक्षणाः ?—आजीविका—जीवनोपायः सा आदौ यासां ता आजीविकादयस्ताश्च ता विविधा—नानाप्रकाराश्चाजीविकादि-विविधास्ताश्च ता अर्त्तयश्चाजीविकादिविविधार्त्तयः ताभिर्भृशम्—अत्यर्थमनिशं च—निरन्तरमार्त्ताः—पीडिताः; हे निर्दय!—हे दयारहित तेभ्योऽपि—श्राद्धजनेभ्यः सर्वं वस्त्रपात्रादीष्टं वस्तु जिघृक्षसि—ग्रहीतुमिच्छसि, च पुनः संयमे—चारित्रे सप्तदशभेदे नो यतसे—न यत्नं कुरुषे, अत्र तत इत्यध्याहार्यं, तेन ततः कारणाद् हीति खेदे त्वं कथं भविता ?—केन प्रकारेण परभवे भविष्यसि ॥ १९४ ॥ १३ ॥

ननु श्राद्धेभ्योऽन्नादिग्रहणे श्राद्धा निस्तरिष्यन्ति तन्निस्तरणजनितं फलमस्माकमपि भविष्यतीत्यहंकारवतां वेषमात्रधारिणामहंकार-तिरस्कारायाह—

आराधितो वा गुणवान् स्वयं तरन्, भवाब्धिमस्मानपि तारयिष्यति ।
श्रयंति ये त्वामिति भूरिभक्तिभिः, फलं तवैषां च किमस्ति ? निर्गुण ! ॥ १९५ ॥ १४ ॥

---

रत्न०—पुनरेतदेव प्रकारान्तरेणोपदिशति—आजीविकादीति० व्याख्या—केऽपि श्रावकाः महता एव कृच्छ्रेण—कष्टेन धर्मान्—दानप्रभृतीन् चतुरः सृजति—कुर्वंति, यतः कि० ?—आजीविका—उदरभरणमादौ यासां ताः आजीविकादयः, आदिशब्दाद्वस्त्रपात्रपुत्रीभगिनीपरिणयनादयो गृह्यंते, आजीविकादयश्च ता विविधार्त्तयश्च ताभिर्भृशम्—अत्यर्थमनिशं—निरन्तरमृताः—पीडिताः व्याकुला इत्यर्थः, हे निर्दय! हे वेषधूर्त्तयते तेभ्योऽपि सर्वमिष्टं—वाञ्छितं जिघृक्षसि—ग्रहीतुमिच्छसि च पुनस्तेभ्यो गृहीतत्वादृणशुद्ध्यै संयमे—चारित्रे न यतसे, हीति पश्चात्तापे त्वं कथं भविता ?—भविष्णुः, परभवे इति पूर्वस्माद्ग्राह्यमिति ॥ १९४ ॥ १३ ॥

अंहो-भारिता

धनवि०—अत्र वाशब्द एवकारार्थः संभावनार्थो वा, तेनाराधित एव—आहारादिनोपचरित एव **गुणवान्**—ज्ञानादिगुणवान् मुनिः स्वयम्—आत्मना **भवाब्धिं**—संसारसागरं **तरन्**—संसारपारं गच्छन्नस्मानप्याराधकांस्तारयिष्यति—संसारपारं प्रापयिष्यति इति—एवं बुद्ध्या ये जनास्त्वां **भूरिभक्तिभिः**—बहुप्रकाराराधनैः **संश्रयंति**—सेवंते, एवं हे **निर्गुण !**—गुणवर्जित एषामाराधकानां च पुनस्तव निर्गुणाराध्यस्य **फलम्**—आयतिहितलक्षणं साध्यं किमस्तीति ? ॥ १९५ ॥ १४ ॥

अनन्तरं निर्गुणानां मुनीनां सगुणश्राद्धेभ्योऽन्नादिग्रहणे निष्फलत्वं पुण्योपार्जनलक्षणफलवर्जितत्वं च दर्शितं; अथ तत्रैव प्रत्युत पापोपार्जनलक्षणं फलं दर्शयन्नुपदिशति—

**स्वयं प्रमादैर्निपतन् भवाम्बुधौ, कथं स्वभक्तानपि तारयिष्यसि ? ।**
**प्रतारयन् स्वार्थमृजून् शिवार्थिनः, स्वतोऽन्यतश्चेति विलुप्यसेऽंहसा ॥ १९६ ॥ १५ ॥**

धन०—**स्वयम्**—आत्मना **प्रमादैः**—मद्यादिभिर्भवांबुधौ—संसारसागरे **निपतन्**—निमज्जन् **स्वभक्तान्**—स्वकीयाराधकानपि कथं ?—

रत्न०—अथ त्वमीदृशः सन् भवाब्धौ निमज्जसि तदा परान् दीक्षादानादिना कथं निमज्जयसीत्याह—**आराधितोऽयमिति०** व्याख्या—ः यतिवेषनट ! अयं ज्ञानदर्शनचारित्रगुणवान् संसाराब्धिं स्वयं तरन् आराधितः—पूजितः सन् अस्मानपि तारयिष्यति इतिहेतोर्ये त्वां भूरिभक्तिभिः श्रयंति हे निगुण !—हे ज्ञानादिगुणरहित तव च पुनरेषामाश्रितानां—शिष्यत्वेन श्रावकत्वेन वा प्रपन्नानां फलं किमस्ति ?, विचारयेति गम्यं, अपि तु न किमपीत्यर्थः, ततस्त्वं निमग्नः परानपि निमज्जयसीति भावः ॥ १९५ ॥ १४ ॥

रत्न०—अथ परोपकारनिष्णातः कविरेतदेवोपदिशति—**स्वयं प्रमादैरिति०** व्याख्या—हे वेषविडम्बक ! स्वयं—आत्मना प्रमादैर्भवाम्बुधौ

केन प्रकारेण त्वं तारयिष्यसि—पारं प्रापयिष्यसि; च पुनः शिवार्थिनो—मोक्षार्थिनः ऋजून्—सरलचित्तान् जनान् स्वार्थं—स्वसुखार्थं स्वाहाराद्यर्थं वा इति—अनया रीत्या प्रतारयन्—वंचयन् स्वतः—आत्मसकाशात्प्रमादाचरणैः च पुनरन्यतः—परतः शिवार्थिवंचनादिना जनितेनांहसा—पापेन विलुप्यसे—'विलुप् मोहने' इति धातोः कर्मणि विलुप्यसे इति साधुः, सद्गतिस्त्रीसंगायोग्यो भविष्यसीत्यर्थः ॥१९६॥१५॥

उक्तार्थमेव प्रकारान्तरेण दर्शयन्नुपदिशति—

**गृह्णासि शय्याहृतिपुस्तकोपधीन्, सदा परेभ्यस्तपसस्त्वियं स्थितिः।**
**तत्ते प्रमादाद्भरितात्प्रतिग्रहैः, ऋणार्णमग्नस्य परत्र का गतिः? ॥ १९७ ॥ १६ ॥**

धनवि०—शय्याहृतिपुस्तकोपधीन् सदा—सर्वकालं परेभ्यो—भक्तेभ्यस्त्वं गृह्णासि—लासि, तत्र शय्या च—वसतिराहृतिश्च—आहारः पुस्तकं च—ज्ञानोपकरणादि उपधिश्च—वस्त्रपात्रादिस्तान् शय्याहृतिपुस्तकोपधीनिति, तु पुनस्तपसो बाह्याभ्यन्तरभेदभिन्नस्येयं—

---

निपतन् स्वभक्तानपि त्वं कथं तारयसि ?, अपि तु न तारयिष्यसि, इति हेतोस्त्वं स्वतोऽन्यतश्चांहसा—पापेन विलुप्यसे—ग्रस्यसे, त्वं किं कुर्वन् ?—प्रतारयन्—वंचयन्, कान् ?—भक्तान् जनान्, किंभूतान् ?—ऋजून्—निष्कपटान्, पुनः किं०? शिवं—मोक्षमर्थयंते इत्येवंशीलास्तान्, किमर्थं ?—स्वार्थं—स्वस्मै, आहारोपधिपुस्तकशय्यापुत्रादिलक्षणस्वार्थायेत्यर्थः ॥ १९५ ॥ १५ ॥

रत्न०—गृह्णासीति० व्याख्या—हे वेषधूर्त्त ! त्वं परेभ्यो गृहस्थेभ्यः शय्याहृतिपुस्तकोपधीन् सदा—अहरहर्गृह्णासि, आहृतिराहारः, शेषं सुगमं, तुरितिविशेषे, तपसो धर्मस्येयं प्रत्यक्षतो दृश्यमाना स्थितिः—मर्यादा वर्त्तते, अतीवनिकृष्टेत्यर्थः, तत्—तस्मात्कारणात्ते—तव प्रमादात्—प्रमादाचरणा-

तद्दकरणलक्षणा प्रत्यक्षोपलभ्यमाना स्थितिः—व्यवस्था वर्त्तते; तत्—तस्मात्कारणात्ते—तव प्रतिग्रहैः—अन्नादिग्रहणैर्भरितात्—निचितात् प्रमादात्—विषयकषायादिहेतोः ऋणार्णमग्नस्य परत्र—परभवे का ?—दुष्टानिष्टत्वेनानिर्वाच्या गतिः कुगतिर्भविष्यति, तत्र ऋणं—देयं ऋनाध्ये ऋणं—देयमृणार्णम्—अतिशयेन ऋणं तत्र मग्नस्य—ब्रुडत इत्यक्षरयोजना; भावार्थस्त्वयं—चारित्रं गृहीत्वा प्रमादसेवनमेकमृणमपरं च तपःकरणमन्तरेण परेभ्यः शय्यादिप्रतिग्रहकरणमिति ॥ १९७ ॥ १६ ॥

नन्वहं गुणवान् मम प्रमादिनोऽप्यनंतरोक्तप्रतिग्रह ऋणं न भवति, पठितब्राह्मणस्य पापघटप्रतिग्रहवत्, परत्र च गुणैरेवाहमनंतं सुखं लभे इत्यहंकारकदर्थितमुपदेष्टुमाह—

न काऽपि सिद्धिर्न च तेऽतिशायि, मुने! क्रियायोगतपःश्रुतादि ।
तथाऽप्यहंकारकदर्थितस्त्वं, ख्यातीच्छया ताम्यसि धिग्मुधा किम् ? ॥ १९८ ॥ १७ ॥

धनवि०—हे मुने! ते—तव कापि ज्ञायमानाऽज्ञायमाना वा सिद्धिः—सुवर्णादिसिद्धिरणिमादिसिद्धिर्वा नास्ति—न वर्त्तते; च पुनस्ते—

ऋणस्य ऋणं ऋणार्णं, ऋणोपरि ऋणमित्यर्थः, तत्र मग्नस्य ते—तव परत्र—परलोके का गतिश्चतसृणां गतीनां मध्ये इत्यर्थः, अथवा का गतिः—अवस्था भाविनीति, प्रमादात्त्वयंभूतात् ?—भरितात्—निचितात्, कैः ?—प्रतिग्रहैः—गृहस्थगृहीतशय्याहृतिपुस्तकोपधिप्रभृतिकैः, प्रमादवतः सतः प्रतिग्रहग्राहिणस्तत एव ऋणार्णमग्नस्य तव का गतिर्भाविनीतिकथनेनाचार्यो दुष्टा गतिरेव भाविनीति सूचयतीति ॥ १९७ ॥ १६ ॥

रत्न०—अथ तादृगतिशायिगुणान् विनाऽहंकारवत्तया ख्यातिं किं वाञ्छसीत्युपदिशति—न काऽपि सिद्धिरिति० व्याख्या—हे मुने! त्वयि

तव **क्रियायोगतपःश्रुताद्यतिशायि**—सर्वेभ्योऽतिशयितं नास्ति, अत्र **क्रियाश्च**—सम्यक्क्षमाश्रमणवंदनादिका **योगश्च**—कालिकोत्कालिक-श्रुतोद्देशसमुद्देशानुज्ञाद्यनुष्ठानपूर्वकं तपश्चरणं **तपश्च**—नमस्कारपौरिष्यादिपाण्मासिकपर्यन्तं कालं यावदाहारादित्यागः **श्रुतं** च—अष्टप्रवचन-मातृज्ञानाद् द्वादशांगीज्ञानादिपर्यंतं ज्ञानं, तान्यादौ यस्य तत्तथेति । **तथापि**—सिद्ध्यभावेऽपि क्रियाद्यभावेऽपि च **त्वमहंकारकदर्थितः**—अभिमानविडंबितः **ख्यातीच्छया**—अयं गुणवानिति प्रसिद्धिवांछया **किं** प्रश्ने **मुधा**—वृथा **ताम्यसि**?—खिद्यसे इत्यर्थः, किं मुधा स्तवार्चादि वांछसीत्यर्थः; अत एव त्वां **धिगस्त्विति**, भावार्थस्तु तव सिद्ध्यादिगुणरहितत्वेन निर्गुणस्य प्रतिग्रहऋणमग्नस्य कथमुद्धारो भवितेति ?, अहं गुणवानिति कोऽहंकार इति ? ॥ १९८ ॥ १७ ॥

अनंतरं 'स्तवार्चावांछा मुधा न कार्ये'त्युक्तं तदेव द्रढयन्निष्फलस्तवार्चावांछायां त्रैकालिकं दोषं दर्शयन्नुपदिशति—

**हीनोऽप्यरे भाग्यगुणैर्मुधाऽऽत्मन्!, वांछन् स्तवार्चाद्यनवाप्नुवांश्च ।**
**ईर्ष्यन् परेभ्यो लभसेऽतितापमिहापि याता कुगतिं परत्र ॥ १९९ ॥ १८ ॥**

---

अष्टसिद्धीनां मध्ये न कापि सिद्धिरस्ति, तथा क्रिया—शीतातपादिसहनरूपा योगो—मनोवाक्कायानां शुभप्रवृत्तिलक्षणस्तपो—बाह्याभ्यन्तरभेदाद् द्वैधं श्रुतं—श्रुतज्ञानमेकादशांगीलक्षणं अतिशेते इत्येवंशीलमतिशायि, अतिशायिक्रियादिमतोऽहंकारोऽपि युक्तः, यथा पयस्विन्या धेन्वा लत्ताप्रहारोऽपि युक्त इति, तदपि नास्ति, तथाप्यहंकारेण कदर्थितस्त्वं ख्यातेः—प्रसिद्धेरिच्छया—वांछया धिग्मुधा—वृथा किं ताम्यसि ?—किं दुःखितो भवसि, अपितु मा ताम्य, धिगिति तिरस्कारार्थमव्ययं ॥ १९८ ॥ १७ ॥

धनवि०—अरे आत्मन्! त्वं भाग्यगुणैः—पुराचीर्णदानादिप्रभवसुकृतलक्षणगुणैर्हीनः—शून्योऽपि स्तवार्चादि—स्तुतिपूजादि वांछन्—अभिलषन् च पुनस्तमनाप्नुवन्—अलभमानश्च पुनस्तदनवाप्त्या परेभ्यः—आत्मव्यतिरिक्तेभ्य ईर्ष्यन्—क्रोधं कुर्वन्निहापि—इहलोकेऽप्यतितापम्—अतिशयेन संतापं लभसे—प्राप्नोषि, पुनः परत्र—परभवे कुगतिं—दुर्गतिं याता—गंतेति ॥ १९९ ॥ १८ ॥

अथ गुणविहीनस्य स्तवार्चाप्रतिग्रहेषु क्रियमाणेषु केवलमुत्तरकालेऽहितलक्षणं फलं दर्शयन्नुपदिशति—

गुणैर्विहीनोऽपि जनानतिस्तुतिप्रतिग्रहान् यन् मुदितः प्रतीच्छसि ।
लुलायगोऽश्वोष्ट्रखरादिजन्मभिर्विना ततस्ते भविता न निष्क्रयः ॥ २०० ॥ १९ ॥

धनवि०—यद्—यस्मात्त्वं गुणैर्विहीनोऽपि—ज्ञानादिसद्गुणरहितोऽपि जनेभ्य आनतिश्च—प्रणामः स्तुतिश्च—गुणोत्कीर्त्तनं प्रतिग्रहश्च—आहारादिग्रहणं ते तथा तान् जनानतिस्तुतिप्रतिग्रहान् मुदितो—हृष्टः सन् प्रतीच्छसि "इच्छियपडिच्छियमेयमिति" वचनादौत्सु-

---

रत्न०—एतदेव प्रकारान्तरेणाचष्टे—हीनोऽप्यरे इति० व्याख्या—अरे इति निंद्यसंबोधने अरे अभाग—अरे भाग्यरहित हे आत्मन्! त्वं गुणैः—ज्ञानदर्शनचरणैर्हीनोऽपि मुधा स्तवार्चादि वांछन् च पुनस्तत्प्रति अनवाप्नुवन्—अलभमानः परेभ्यो—गृहस्थेभ्यो गुणवत्साधुभ्यो वा ईर्ष्यन्—ईर्ष्यां कुर्वन् सन् अतितापं—अधिकसंतापमतिकष्टं वा लभसे—प्राप्नोषि, कथम्?—इहापि—इहलोकेऽपि, अपेर्डमरुकमणिन्यायेन योजनात् परत्रापि—परलोकेऽपि कुगतिं—नरकतिर्यग्लक्षणां याता—गंतेति ॥ १९९ ॥ १८ ॥

रत्न०—अथ सामान्यतः 'कुगतिं याते'त्युक्तौ अप्रतिबुध्यमानं यतिं प्रति कुगतिव्यक्तिप्रतिपादनेन प्रतिबोधयति—गुणैर्विहीनोऽपीति०

क्येन गृह्णासि, ततः कारणात्ते—तव लुलायश्च—महिषो गौश्च—बलीवर्दोऽश्वश्च—तुरंगमः उष्ट्रश्च—दीर्घग्रीवः खरश्च—गर्दभस्ते आदौ—प्रथमं येषान्ते तथा, आदिपदाद्भारवाहकगजमनुजादिपरिग्रहस्तेषां जन्मानि—अवतारास्तैर्विना—अन्तरेण निष्क्रयो—जनानत्यादेर्भाटकं मूल्यं वा न भविता—न भविष्यतीत्यर्थः ॥ २०० ॥ १९ ॥

उक्तमेवार्थं प्रकारान्तरेण दर्शयन्नुपदिशति—

**गुणेषु नोद्यच्छसि चेन्मुने ! ततः, प्रगीयसे यैरपि वंद्यसेऽर्च्यसे ।**
**जुगुप्सितां प्रेत्य गतिं गतोऽपि तैर्हसिष्यसे चाभिभविष्यसेऽपि वा ॥ २०१ ॥ २० ॥**

॥ ११६ ॥

व्याख्या—हे वेषवंचक! त्वं गुणैः ज्ञानादिजन्यैर्विहीनोऽपि सन् जनेभ्यो—लोकेभ्यः आनतिः—आनमनं पंचाङ्गप्रणामः स्तुतिः—गोयमसोहमजंबूपभवो इत्यादिरूपा प्रतिग्रहः—अन्नपानवस्त्रपात्रपुस्तकादिकस्तान् प्रति यन्मुदितः सन्—हर्षमापन्नस्सन् प्रतीच्छसि—गृह्णासि ततः—तस्मात्कारणात्तेषां—जनानतिस्तुतिप्रतिग्रहाणां ते—तव निष्क्रयो—मूल्यं धनिकानां मूल्यार्पणमित्यर्थः न भविता—न भविष्यति चारित्रादिगुणैर्हीनत्वात्, कथं ?—विना, कैः ?—लुलायो—महिषो जलाहरणादिक्रियासमर्थः गौः—बलीवर्दः कृषिक्रियाकरणभारोद्वहनेक्षुपीलनतिलादिपीलनशकटादिवहनारघट्टयंत्रवहनादिसमर्थः तथाऽश्वः—संग्रामादिकर्मसूपयोगी तथोष्ट्रो—भारवहनबहुक्रोशगमनसमर्थस्तथा खराः—जलानयनमृत्तिकेष्टकानयनक्रियाकारी वागडादिदेशे बहूपयोगी ते आदौ येषां ते लुलायगोऽश्वोष्ट्रखरादयः, आदिशब्देनाजोरभ्रादिग्रहणं, तेषां जन्मानि तैः, तेषां गृहे एतदुपयुक्तकार्यकरणात्तन्निष्क्रयो भावीत्यर्थः ॥ २०० ॥ १९ ॥

॥ ११६ ॥

धनवि०—हे मुने! चेद्—यदि गुणेषु—ज्ञानदर्शनचारित्रलक्षणेषु श्रमणगुणेषु नोद्यच्छसि—नोद्यमं कुरुषे, ततो गुणेपूद्यमाभावाद्यैरपि—यैरेव श्राद्धादिभिस्त्वमिदानीं प्रगीयसे गीतादिभिर्वंद्यसे शिरोनमनप्रभृतिभिरर्च्यसे सुवर्णपुष्पादिभिर्वस्त्राहारादिभिर्वा, अत्रापिशब्द एवकारार्थः, तेन च पुनस्तैरेव श्राद्धादिभिः प्रेत्य—भवान्तरे जुगुप्सितां—कुत्सनीयां गतिं—नरकतिर्यग्लक्षणां गतोऽपि—प्राप्त एव हसिष्यसे—त्वमसमृद्धिनिर्मितस्तुतिनतिपूजादिभिर्गौरवफलं प्राप्तमित्यादिवचनैर्हासविपयीकरिष्यसे, वा—अथवा तैरेवाभिभविष्यसे—पूर्वोक्तवचनैस्ताडनभारवाहनादिभिर्वा पराभवविपयीकरिष्यसे; अत्रापिशब्द एवकारार्थो ज्ञेय इति ॥ २०१ ॥ २० ॥

पुनस्तत्रैव दोषान्तरमाह—

दानमाननुतिवंदनापरैर्मोदसे निकृतिरंजितैर्जनैः।
न त्ववैपि सुकृतस्य चेल्लवः, कोऽपि सोऽपि तव लुव्यते हि तैः ॥ २०२ ॥ २१ ॥

---

रत्न०—अथ विपरीतफलप्रतिपादनेन गुणोद्यमं कुर्वित्युपदिशति—गुणेष्विति० व्याख्या—हे यते! चेद्—यदि गुणेषु—ज्ञानदर्शनचारित्रसंबंधिषु नोद्यच्छसि—नोद्यमं करोषि ततः—तर्हि यैस्त्वं श्राद्धलोकैः प्रगीयसे गीतादिना यैरपि वंद्यसे स्तूयसे गोयमसोहमेत्यादिना तथाऽर्च्यसे पुष्पचंदनविलेपनादिना तैस्त्वं प्रेत्य—परभवे जुगुप्सितां गतिं—कुरूपनिःस्वताद्युपेतां गतिं गतोऽपि सन्—प्राप्तोऽपि सन् हसिष्यसे— हासविपयीकरिष्यसे, च पुनस्तैरभिभविष्यसे, दासत्वाद्यापन्नः सन् कार्यकरणालस आक्रोशयष्टिलत्ताप्रहारादिनेत्यर्थः, अनया रीत्या त्वं तेषां निष्क्रयमर्पयिष्यसीति भावः ॥ २०१ ॥ २० ॥

हासाभिभवा

धनवि०—दानं च—वस्त्राहारादिवितरणं मानं च—सौवर्णपुष्पादिभिः पूजनमभ्युत्थानादिकं वा नुतिश्च—गोयमसोहमेत्यादिभिः स्तुतिवंदना च—द्वादशावर्त्तादिका तत्र पराः २ तैः तथाभूतैर्जनैर्हेतुभूतैस्त्वं मोदसे—हृष्यसीति, किंभूतैर्जनैः—निकृतिरंजितैः—निकृतिः—मलिनवेपवहनादिलक्षणा माया तया रंजिताः—स्ववशीकृतास्तैः, तथा तु पुनस्त्वमिति नावैपि—न जानासि, अत्रेतीत्यध्याहार्यं, चेद्—यदि तव कोऽपि सुकृतस्य पुण्यस्य लवो—लेशो वर्त्तते सोऽपि सुकृतस्य लवस्तैर्जनैर्हीति निश्चितं लुप्यते—निःसत्ताकीक्रियते ॥ २०२ ॥ २१ ॥

अथानंतरोक्तोपदेशनिर्गलितार्थं दर्शयन्नुपदिशति—

**भवेद्गुणी मुग्धकृतैर्नहि स्तवैर्न ख्यातिदानार्चनवंदनादिभिः ।**
**विना गुणान्नो भवदुःखसंक्षयस्ततो गुणानर्जय किं स्तवादिभिः ? ॥ २०३ ॥ २२ ॥**

धनवि०—मुग्धकृतैः—भद्रकजननिष्पादितैः स्तवैः—आरोपितगुणप्रशंसनैर्नहि कश्चित्पुमान् गुणी—गुणवान् भवेत्—स्यात्, च पुनः

---

रत्न०—अथ दानमानादिकरणैस्तवेपदपि सुकृतं यत्तत् ते गृह्णंतीति ज्ञापयति—दानमानेति० व्याख्या—हे मुने ! त्वमेवंविधैर्जनैर्मोदसे—हर्षं प्राप्नोषि, किंलक्षणैः ?—दानमन्नवस्त्रपात्रादीनां मानः—पूजा नुतिः—स्तुतिर्वंदना वंदनकादिदानेन द्वंद्वसमासे तास्तासु परा—आसक्तास्तैः, पुनः कि० ?—निकृत्या—मायया तव वेषोपदेशादिकया रंजिता—रागमापन्नास्तैः, पुनस्त्वं नावैपि—न जानासि, किमित्याह—चेद्—यदि तव सुकृतस्य—पुण्यस्य कोऽपि लवो वर्त्तते सोऽपि तैर्हि निश्चितं लुप्यते—आच्छिद्य गृह्यते, अधिकार्जने का वार्त्ता ?, सोऽपि तत्र यातीत्यर्थः, वृद्धिमिच्छतो मूलक्षितिर्जायत इति ॥ २०२ ॥ २१ ॥

रत्न०—अथ तेन स्तवादीच्छां विहाय गुणोपार्जनं कुर्वित्युपदिशति—भवेद्गुणीति० व्याख्या—हे मुने! मुग्धैः—अनभिज्ञैः ऋजुभि-

ख्यातिदानार्चनवंदनादिभिर्न कश्चिद्गुणी भवेद्, अत्र चशब्दोऽध्याहार्यः, आदिपदादभ्युत्थानासनदानादिपरिग्रहः; यतः कारणाद्गुणान्—ज्ञानदर्शनचारित्रान् विना—अन्तरेण भवदुःखसंक्षयः—सांसारिकदुःखविध्वंसो न भवेत्, ततः कारणाद्गुणान्—ज्ञानादीनर्जय—समुपार्जय; स्तवादिभिः—स्तवख्यातिदानार्चनादिभिः किं भवतीति ?, अपि तु किमपि न भवतीत्यर्थः ॥ २०३ ॥ २१ ॥

जनरंजन-निष्फलता

नन्वनंतरोक्तो दुःखसंक्षयो मा भवतु, जनरंजनमेव भवत्वित्याशंकायामुपदिशति—

अध्येपि शास्त्रं सदसद्विचित्रालापादिभिस्ताम्यसि वा समायैः ।
येषां जनानामिह रंजनाय, भवांतरे ते क ? मुने ! क ? च त्वम् ॥ २०४ ॥ २२ ॥

धनवि०—हे मुने ! इह भवे येषां जनानां रंजनाय सच्छास्त्रं—धर्मशास्त्रमसद्—वात्स्यायनादिशास्त्रं व्याकरणप्रमाणज्योतिःशास्त्रलक्षणं वा ग्रन्थमध्येपि—पठसि वा—अथवा येषां जनानां रंजनाय समायैः—सकपटैर्विचित्रालापादिभिः—नानाप्रकारसंभाषणादिभि-

---

रित्यर्थः कृतैः स्तवैः करणैर्हि निश्चितं गुणी—गुणवान्न भवेत्, तथा ख्यातिः—ज्ञानादिगुणैः प्रसिद्धिः, ख्यातिदानार्चनादिभिरपि गृहस्थकृतैर्गुणी—गुणवान्न भवेत्, तथा गुणान्—ज्ञानदर्शनचारित्रादिसत्कान् विना भवस्य—ससारस्य दुःखानां संक्षयः—सर्वथा निवृत्तिलक्षणो नो—नास्ति, ततो हेतोस्त्वं तान् गुणानर्जय—स्वनिष्ठान् कुरु, स्तवादिभिः किं ?, न किमपीत्यर्थः, आपातरम्यत्वादिति ॥ २०३ ॥ २२ ॥

रत्न०—अथ जनरंजनार्थं शास्त्रं पठसि, परं भवांतरे ते जनाः क ?, त्वं च केति ज्ञापयति—अध्येषि शास्त्रमिति० व्याख्या—हे मुने ! त्वमिह लोके येषां जनानां रंजनाय सत्—शोभनं जिनागमाद्यवितथवाक्यत्वादसद्—अशोभनं शाक्यादिविरचितं परस्पराहतवाक्यत्वाच्छास्त्रम-

स्ताम्यसि–खिद्यसि, अत्रादिपदाद्धर्मलाभाशीर्वाददानादिपरिग्रहः, ते जना भवान्तरे–परभवे क्व?–कुत्र, च पुनस्त्वं क्वेत्यक्षरयोजना, भावार्थस्त्वयं–येषां जनानां रंजनाय त्वमेतावदिह भवे करोषि ते जनाः स्वकृतकर्मवशगाः परभवे कस्यामपि गतौ गमिष्यंति, त्वं च कस्यामपि गमिष्यसीति किं जनरंजनेनेति ॥ २०४ ॥ २३ ॥

ननु भवान्तरे जनरंजनं निष्फलमपीहभवे धर्मोपकरणकारणं भवत्वित्याशंकायामुपदिशति—

**परिग्रहं चेद्व्यजहा गृहादेस्तत् किंनु धर्मोपकृतिच्छलात्तम् ।**
**करोषि? शय्योपधिपुस्तकादेर्गरोऽपि नामान्तरतोऽपि हंता ॥ २०५ ॥ २४ ॥**

**धनवि०**—**चेद्**–यदि **गृहादेः**–मंदिरादेर्यं **परिग्रहं व्यजहाः**–अत्याक्षीरित्यर्थः, अत्रादिपदाद् द्विपदचतुष्पदादिपरिग्रहः, व्यजहा इति विपूर्वस्य ओहाक् त्यागे इत्यस्य ह्यस्तनीयुष्मदर्थैकवचने साधुः, **तत्**–तदा **नु** वितर्के **धर्मोपकृतिच्छलाद्**–धर्मोपकरणमिषेण **शय्योपधिपुस्त**-

---

ध्येपि–पठसि, च पुनर्विचित्रालापादिभिः–नानाजल्पनादिभिस्त्वं ताम्यसि–कांक्षसि, किंलक्षणैः?–समायैः–मायासहितैरावर्जकार्थैरित्यर्थः, येषां जनानां रंजनायेति पदमिहापि योज्यं, परं भवांतरे ते जनाः क्व?, च पुनस्त्वं क्व?, द्वौ कशब्दौ अत्यंतासंगतिं ब्रूतः, न जाने ते जनाः परत्र कां गतिं गामिनः? त्वं च कां गतिं गमीति, तेन पररंजनप्रवृत्तो मा भव, स्वरंजनप्रवृत्तो भवेति भावः, अथवा सदसद्विचित्रालापादिभिरित्यखंडं पदं, अर्थतस्तु सुगममिति न व्याख्यातमिति ॥ २०४ ॥ २३ ॥

**रत्न०**—अथ गृहादिपरित्यागीभूय बहुधर्मोपकरणरक्षणेन परिग्रही किं भवसीत्याह–**परिग्रहमिति०** व्याख्या—हे मुने! त्वं गृहादेः

कादेः—वसतिवस्त्रपात्रप्रधानोपकरणादेस्त्वं परिग्रहं किं करोपि?, हि यतः कारणाद्गरो—विषं नामान्तरतोऽपि—नामान्तरेण प्रतिपादितोऽपि हंता—मारयिता भवतीति; भावार्थस्त्वयं—यथा मधुरादिनामान्तरेण प्रतिपादितो गरो वत्सनागादिर्हंता भवति तथा मूर्च्छया शय्यादिपरिग्रहो धर्मोपकरणमितिनाम्नाऽपि हंता भवतीति ॥ २०५ ॥ २४ ॥

नामान्तरता

अथ धर्मोपकरणबाहुल्यलक्षणपरिग्रहोऽनिष्टफलाय न भवतीत्याशंकायामुपदिशति—

परिग्रहात् स्वीकृतधर्मसाधनाभिधानमात्रात् किमु मूढ ! तुष्यसि ? ।
न वेत्सि हेम्नाऽप्यतिभारिता तरी, निमज्जयत्यंगिनमम्बुधौ द्रुतम् ॥ २०६ ॥ २५ ॥

धनवि०—हे मूढ ! स्वीकृतधर्मसाधनाभिधानमात्रात्परिग्रहात् किमु प्रश्ने–किं तुष्यसि?, अत्र स्वीकृतम्—अंगीकृतं धर्मसाधनमित्यभिधानमात्रं—नाममात्रं यस्य स तथा तस्मात्तथेति परिग्रहस्य विशेषणं, त्वमिति न वेत्सि?—न जानासि, अत्रेतीत्यध्याहार्यं, हेम्नाऽपि—

---

परिग्रहं व्यजहाः—अत्याक्षीः नुर्वितर्कैः तत्—तर्हि धर्मोपकृतिच्छलाद्—धर्मोपकरणमिषतः शिष्यो(शय्यो)पधिपुस्तकादेः परिग्रहं किं करोपि ?, शय्योपधिपुस्तकाद्यपि अधिकं निरर्थकं च ममतया रक्षितं सत् परिग्रह एवेतिभावः, तत्रार्थे दृष्टांतमाह—हि यस्मात्कारणात् नामांतरतोऽपि गरो—विषं हंता—मारकः, विषस्य गुड इत्यादिनामांतरन्यासेऽपि विषं हंत्येवेति, अधिकस्य ममत्वेन रक्षितस्य परिग्रहस्य गरोपमानं, सोऽपि त्वां दुर्गतौ प्रक्षेप्स्यतीत्युपनयः ॥ २०५ ॥ २४ ॥

रत्न०—एतदेव दृष्टान्तान्तरेण व्याख्याति—परिग्रहादिति० व्याख्या—हे मूढमुने ! त्वं परिग्रहात्—परिग्रहं प्राप्येत्यर्थः किमु ?—किं

सुवर्णेनाप्यतिभारिता—अतिशयेन भारो जातोऽस्यां सा तरी—यानपात्रविशेषः अम्बुधौ—सागरेऽङ्गिनं—देहिनं द्रुतं—शीघ्रं निमज्जयति—ब्रुडयतीत्यर्थः; भावार्थस्तु यथा सुवर्णेनातिभारिता तरी तत्रारूढं नरं निमज्जयति तथा धर्मोपकरणेनातिभारितो यतिः स्वं परञ्च निमज्जयतीति ॥ २०६ ॥ २५ ॥

अथ धर्मोपकरणानामपि मूर्च्छादिदोषेण परिग्रहरूपतां समर्थयन्नुपदिशति—

येऽहःकषायकलिकर्मनिबंधभाजनं, स्युः पुस्तकादिभिरपीहितधर्मसाधनैः ।
तेषां रसायनवरैरपि सर्पदामयैरार्त्तात्मनां गदहतेः सुखकृन्नु किं भवेत् ? ॥ २०७ ॥ २६ ॥

धनवि०—ये यतयः ईहितो—वांछितो धर्मो—ज्ञानादिस्तस्य साधनैः—हेतुभिः धर्मोपकरणैः पुस्तकादिभिरंहश्च—लिखनारंभादिजन्यं पापं पुस्तकादिबन्धने कुंथ्वादिजीवघातजनितं वा पातकं कषायाश्च—मूर्च्छोत्पन्नाः क्रोधमानमायालोभाः कलिश्च—कषायप्रभवो वाग्वादः

---

तुष्यसि—हर्षं प्राप्नोषि, अपि तु मा तुष्य, किल० ?—केवलमभिधानमभिधानमात्रं स्वीकृतं धर्मसाधनं—धर्मस्य—चारित्रधर्मस्य साधनं—कारणमित्यभिधानमात्रं यस्य स तस्मात्, एतदेव दृष्टांतदानेन दृढयति—हे मूढ ! त्वं न वेत्सि ?, अपि तु वेत्स्येव, हेम्ना—सुवर्णेनाप्यतिभारिता तरी—बेडा अङ्गिनं—प्राणिनमम्बुधौ—समुद्रे द्रुतं निमज्जयति—बोलयति, धर्मोपकरणाभिधानाधिकपरिग्रहस्य सुवर्णातिभारिततर्युपमानमिति, तेन त्वामपि धर्मसाधनाभिधानोऽप्यतिपरिग्रहो निमज्जयिष्यत्येवेति धर्मोपकरणमप्यधिकं मा कुर्वित्यर्थः ॥ २०६ ॥ २५ ॥

रत्न०—अथाधिकधर्मोपकरणविषये नानायुक्त्योपदिशति—येऽहःकषायेति० व्याख्या—ये मुनयः पुस्तकादिभिः अंहः—पापं कषायाः—क्रोधादयः कलिः—कलहस्तैर्हेतुभिः कर्मणां—ज्ञानावरणीयादीनामष्टानां आयुषो बंधस्य कादाचित्कत्वात् सप्तानां वा निबंधो—बंधनं गाढनिकाचना-

कर्माणि च—कलहप्रभवाण्यशुभकर्माणि तेषां निबंधनं निबंधो—बीजं मूर्च्छा तस्य भाजनं—पात्रं स्युः—भवेयुरित्यर्थः, तेषां यतीनां नु वितर्के सुखकृत्किं भवेत् ?, अपितु न किंचिदिति; अत्र यथेत्यध्याहारो, यथा आर्तात्मनां—रोगपीडितानां रसायनवरैः—गन्धकपारदसुवर्णभस्मादिभिरपि हेतुभूतैः स्वपुराकृतकर्मदोषेण सर्पदामयैः—प्रसरद्रोगैर्गदहतेः—रोगहरणात्सुखकृत्—सुखसाधनं नु इति वितर्के किं भवेत् ?—स्यादिति; भावार्थस्तु यथा येषां रोगिणां रसायनैरपि रोगवृद्धिर्भवति तेषां सुखकृत्किमपि न भवति तथा येषां व्रतिनां धर्मोपकरणैः पुस्तकादिभिरपि मूर्च्छया पापवृद्धिर्भवति तेषां सुखकृत्किमपि न भवतीति ॥ २०७ ॥ २६ ॥

शस्त्रदुष्प्रयोगः

अथ धर्मोपकरणेषु मूर्च्छाकरणे दोषमुपदर्शयन्नुपदिशति—

**रक्षार्थं खलु संयमस्य गदिता येऽर्था यतीनां जिनैर्वासःपुस्तकपात्रकप्रभृतयो धर्मोपकृत्यात्मकाः ।**
**मूर्च्छन्मोहवशात्त एव कुधियां संसारपाताय धिक्, स्वं स्वस्यैव वधाय शस्त्रमधियां यद्दुष्प्रयुक्तं भवेत् ॥ २०८ ॥**

धनवि०—खल्विति—निश्चये ये धर्मोपकृत्यात्मका—धर्मोपकरणरूपा वासःपुस्तकपात्रकप्रभृतयोऽर्थाः—पदार्था यतीनां—साधूनां

---

दिखस्य भाजनं—पात्रं स्युः—भवेयुः, किंलक्षणैः ?—ईहितं—वांछितं धर्मस्य—चारित्रधर्मस्य साधनं येभ्यस्तैः, कथमपि तेषां मुनीनां सुखकृत् किं भवेत् ?, सुखकृत् किंचनापि न स्यादित्यर्थः, तेषा किं० ?—आर्त्तः—पीडितः आत्मा येषां ते आर्त्तात्मानस्तेषां नित्यदुःखितानामित्यर्थः, अत्र दृष्टांतमाह—यथा सर्पतो—व्याप्तिमंतः आमया—रोगा येभ्यस्तै रसायनवरैरपि कृत्वा आर्त्तात्मनां रोगिणां गदहते—रोगापनयनात् सुखकृन्नु किं स्यात् ?, अथ भावार्थो लिख्यते—यथा सर्पदामयै रसायनवरैरप्यार्त्तात्मनां रोगिणां पीडितचेतसां सुखकृन्नु किं भवेत् ?, शास्त्रे अन्नजानां रोगाणां प्रतीकारो वर्त्तते, परमविधिकृतरसायनोत्थरोगाणां प्रतीकारो नास्तीत्युपनयः स्वबुद्ध्या गम्यः ॥ २०७ ॥ २६ ॥

संयमस्य—चारित्रस्य रक्षार्थं जिनैः—भगवद्भिरर्हद्भिर्गदिताः—प्ररूपिताः, तत्र वासांसि च—वस्त्राणि पुस्तकं च—लिखितपत्रसंचयः पात्रकाणि-भाजनानि तानि प्रभृतयः—प्रमुखा येषां ते तथा, अत्र प्रभृतिपदेन स्थपनिकास्थापनाचार्यादिपरिग्रहः, त एव धर्मोपकरणलक्षणाः पदार्थाः कुधियां—कुबुद्धीनां मूर्च्छन्मोहवशात् संसारपाताय—भवपतनाय भवेयुरित्यन्वयः, अत्र मूर्च्छन्—समुच्छ्रायं गच्छन् 'मूर्च्छा मोहसमुच्छ्राययो'रिति वचनाद्वृद्धिं गच्छन् यो मोहो—मोहनीयं कर्म तस्य वशः—परतंत्रता तस्मादित्यर्थः, "मूर्च्छामोहवशादि"ति पाठे तु मूर्च्छा—धर्मोपकरणेषु गृद्धिस्तज्जनितो मोहो—मौढ्यं तद्वशादित्यर्थः, अत एव धिगस्तु, यद्—यस्मादधियां—निर्बुद्धीनां दुष्प्रयुक्तम्—अकुशलतया व्यापारितं स्वं—स्वकीयं शस्त्रं—प्रहरणं स्वस्य—आत्मनो वधाय—विनाशाय भवेत्—स्यादित्यर्थः ॥ २०८ ॥ २७ ॥

अथ मूर्च्छयाऽधिकधर्मोपकरणरक्षणे दोषं दर्शयन्नुपदिशति—

**संयमोपकरणच्छलात् परान्, भारयन् यदसि पुस्तकादिभिः ।**
**गोखरोष्ट्रमहिषादिरूपभृत्तच्चिरं त्वमपि भारयिष्यसे ॥ २०९ ॥ २८ ॥**

---

रत्न०—पुनरेतदेव विवृणोति—रक्षार्थं खल्विति० व्याख्या—येऽर्थाः खलु—निश्चितं जिनैः—अर्हद्भिर्यतीनां संयमस्य—चारित्रस्य रक्षार्थं गदिता—उक्ताः, अर्थाः के के इत्याह—वासो—वस्त्रं पुस्तकम्—आगमवर्णलिपीरूपं पात्रं—पतद्ग्रहादि, प्रभृतिशब्दात्कंबलादीनां ग्रहणं, किंलक्षणाः !—धर्मस्य—चारित्रधर्मस्योपकृतिः—उपकरणमेवात्मा—स्वरूपं येषां ते, धिग् यथा स्यात्तथा, त एवार्था वासःपुस्तकप्रभृतयः कुधियां—कुबुद्धीनां संसारपाताय भवेयुः, कस्मात् !—मूर्च्छन्—वृद्धिं गच्छन् यो मोहस्तस्य वशस्तस्माद्, एतदेव दृष्टांतेन निर्दिशति—यदिति दृष्टांतोपन्यासे अधियां—बुद्धिवर्जितानां स्वं—स्वकीयं शस्त्रं दुष्प्रयुक्तं सत् स्वस्यैव—आत्मन एव वधाय भवेद्, अयं दृष्टांतोऽत्रापि ज्ञेय इति ॥ २०८ ॥ २७ ॥

॥ १२० ॥

धनवि०—हे आत्मन्! संयमोपकरणच्छलात्—चारित्रोपकरणमिषाद्, यद्—यस्मात्पुस्तकादिभिः, आदिशब्दात्स्थपनिकादिभिः, परान्—भारवाहकादीन् भारयन्—भारवहनविपर्याकुर्वन्नसि, तत्—तस्मात्कारणात्त्वमपि तैः परभवे गौश्च—बलीवर्दः खरश्च—रासभः उष्ट्रश्च—करभो महिषश्च—कासरस्ते आदौ येषां ते तथा तेषां रूपं बिभर्त्तीति गोखरोष्ट्रमहिषादिरूपभृद्, आदिपदाद्गजतुरगादिपरिग्रहः, चिरं—चिरकालं भारयिष्यसे—भारवहनविपर्यीकरिष्यसे ॥ २०९ ॥ २८ ॥

नन्वपि संयमोपकरणमधिकशोभार्थं स्यादित्याशंकायामुपदिशति—

वस्त्रपात्रतनुपुस्तकादिनः, शोभया न खलु संयमस्य सा ।
आदिमा च ददते भवं परा, मुक्तिमाश्रय तदिच्छयैकिकाम् ॥ २१० ॥ २९ ॥
तां तदत्र परिहाय संयमे, किं यते ! न यतसे ? शिवार्थ्यपि" इति चोत्तरार्द्धे

---

रत्न०—अथ दृष्प्रयुक्तत्वेनैव वातःप्रभृतीना ज्ञापयन्नाह—संयमोपकरणच्छलादिति० व्याख्या—हे मुने ! त्वं परान् भारवाहकगोकरभोष्ट्राश्वतरादीन् पुस्तकादिभिः हेतुभिर्भारयन्नसि—भारितान् कुर्वन्नसि, कस्मात्?—संयमस्योपकरणानि २ तेषां छलं—मिषं तस्माद्, इमानि संयमस्योपकरणानि सन्तीति वाहितानि शुद्ध्यंतीति दंभतः, ततो हेतोस्त्वमपि भारयिष्यसे, त्वं किंलक्षणः?—गोखरोष्ट्रमहिषादीनां पशूना रूपं बिभर्त्तीति गोखरोष्ट्रमहिषादिरूपभृत् तेषामवतारं प्राप्तस्सन्नित्यर्थः, कथं?—चिरं—चिरकालं, बहूनवतारान् यावदित्यर्थः, मानुष्यात्पातेन मा, तैरेवेति शेषंपदं गम्यं ॥ २०९ ॥ २८ ॥

**धनवि०**—**वस्त्रपात्रतनुपुस्तकादिनः**—चीवरभाजनशरीरपुस्तकादिवस्तुनः **शोभया**—विभूपया **खलु** निश्चितं **संयमस्य सा शोभा न भवति**—न स्यादिति; **आदिमा**—प्रथमा वस्त्रपात्रतनुपुस्तकादिशोभा **भवं**—संसारं **ददते**—ददाति, अत्र ददि दाने इत्यस्य ददते इति साधुः । **च** पुनः **परा**—द्वितीया संयमस्य शोभा **मुक्तिं**—निर्वृतिं ददते; **तत्**—तस्मादिच्छया—यथेच्छं **एकिकां**—एकैवैकिका तां वस्त्रादिशोभां संयमशोभां वा एकामाश्रय—**भजेति** ॥ २१० ॥ २९ ॥ अत्रोत्तरार्द्धे पाठान्तरं पूर्वोक्तव्यत्ययर्थमाह—**वस्त्र० शोभ०**—**तां तदत्रेति हे यते !**—हे मुने **तत्**—तस्मात्कारणादत्र—इह भवे **तां** वस्त्रादिशोभां **विहाय**—त्यक्त्वा **शिवार्थ्यपि**—मोक्षर्थ्यपि सन् **संयमे**—चारित्रमार्गे **किं न यतसे ?**—किं न यत्नं कुरुषे; अत्रापिशब्दो विरोधाभासद्योतकः, स च विरोधो यो मोक्षार्थी भवति स संयमे यतते, त्वं मोक्षार्थ्यपि सन् संयमे न यतसे इतीति **वोत्तरार्द्धपाठ** इति स्पष्टं ।

---

**रत्न०**—अथ वस्त्रादिभिः संयमस्य शोभा न भवतीत्याह—**वस्त्रपात्रेति०** व्याख्या—हे मुने ! वस्त्रपात्रतनुपुस्तकादिनः संबंधिन्या शोभया कृत्वा खलु—निश्चितं सा शोभा संयमस्य—चारित्रस्य नास्ति, किंतु अशोभैव वर्त्तते, अत्युद्भटवेषधरणमशोभैवेत्यर्थः, अमुमेवार्थं द्रढयति—वेति विशेषे, आदिमा वस्त्रपात्रतनुपुस्तकादिसंबंधिनी शोभा भवं—संसारं ददते, परा—अन्या संयमस्य शोभा अष्टप्रवचनमातृपालनादिका मुक्तिं—मोक्षं ददते, तत्कारणादिच्छया एकिका—द्वयोर्मध्ये एकां मुने ! त्वं भज—श्रय, यदि भवमिच्छसि तदा प्रथमां भज, यदि च मुक्तिमिच्छसि तदाऽन्यां भजेत्यर्थः, तां तदत्रेति वोत्तरार्द्धपाठः, पूर्वार्द्धं तदेव, तेन व्याख्यापि तथैव, तत्कारणात्तां वस्त्रपात्रतनुपुस्तकादिनः शोभां परिहाय—त्यक्त्वा हे यते !—संयत संयमेऽर्हत्प्ररूपिते किं न यतसे ?, किंलक्षणः ?—शिवं—मोक्षमर्थयसे इत्येवंशीलः शिवार्थी कथमपीत्युत्तरार्द्धपाठान्तरव्याख्या ॥ २१० ॥ २९ ॥

ननु वस्त्रादियाचुल्यं शोभार्थं मा भवतु, शीतातपादिदुःसहपरीपहनिवारणार्थं भवत्वित्याशंकायामुपदिशति—

**शीतातपाद्यान्न मनागपीह, परीपहाँश्चेत् क्षमसे विपोढुम् ।**
**कथं ततो नारकगर्भवासदुःखानि सोढासि भवान्तरे त्वम् ! ॥ २११ ॥ ३० ॥**

धनवि०—चेद्—यदीहभवे मनागपि—किंचनापि शीतातपाद्यान् परीपहान् "खुहापिवासा"दिगाथासूचितान् विपोढुं—विशेषेण क्षंतुं न क्षमसे—न समर्थो भवसि, ततः—तदा भवान्तरे—परभवे नारकगर्भवासदुःखानि—नरकजननीजठराभ्यन्तरस्थितिदुःखानि कथं ?—केन प्रकारेण त्वं सोढासि—क्षंतासि, सहिष्यसीत्यर्थः ॥ २११ ॥ ३० ॥

नन्वेवं परीपहसहने स्वशरीरदौर्बल्यं स्यादिति कः परीपहसहनादौ प्रवर्त्तते ? इत्याशंकायामाह—

**मुने ! न किं नश्वरमस्वदेहमृत्पिंडमेनं सुतपोव्रताद्यैः ।**
**निपीड्य भीतीर्भवदुःखराशेर्हित्वाऽऽत्मसाच्छैवसुखं करोषि ? ॥ २१२ ॥ ३१ ॥**

---

रत्न०—अथ परीपहसहनमाश्रित्योपदिशति—**शीतातपाद्यानिति०** व्याख्या—हे मुने ! इह प्रवचने संयमे वा चेद्—यदि मनागपि परीपहान् द्वाविंशति प्रति विपोढुं—सहनाय न क्षमसे—न सक्तो भवसि, परीपहान् कान् ?—शीतातपाद्यान्—शीतातपप्रमुखान् ततः—तर्हि नारकस्य तथा गर्भवासस्य च दुःखानि प्रति भवान्तरे त्वं कथं सोढासि ?—सहिष्यसि, इहत्यशीतातपेभ्यो बहुगुणत्वात्तेषां, तत एव परीसहदुःखाना सहनमेव वरं मन्यस्वेति ॥ २११ ॥ ३० ॥

धनवि०—हे मुने!—हे साधो एनं प्रत्यक्षं नश्वरं—विनाशशीलमस्वः—अनात्मीयश्चासौ परभवे सहगमनाभावात् देहमृत्पिंडश्च—शरीररूपमृत्तिकासंघातस्तमस्वदेहमृत्पिंडं निपीड्य—नितरां पीडाविषयं विधाय भवदुःखराशेः—सांसारिकदुःखसमूहाद्भीतीः—भयानि हित्वा—त्यक्त्वा शैवसुखं—मोक्षसंबंधि सुखमात्मसाद्—आत्मायत्तं किं न करोषि?, कैर्हेतुभूतैः?—सुतपांसि च—षष्ठाष्टमादीनि व्रतानि च—हिंसाविरमणादीनि तान्याद्यानि—प्रथमानि येषां ते तथा तैः सुतपोव्रताद्यैराचारैरितियावद्, अत्राद्यपदेनोपसर्गपरीषहादिसहन-परिग्रहः ॥ २१२ ॥ ३१ ॥

नन्वनंतरं 'सुतपोव्रताद्यैर्देहपीडनं विधेय'मित्युक्तं, तच्चातीव दुस्सहमनिष्टं चेति कस्तत्र प्रवर्त्तेत ? इत्याशंकायामुपदिशति—

यदत्र कष्टं चरणस्य पालने, परत्र तिर्यङ्नरकेषु यत्पुनः ।
तयोर्मिथः सप्रतिपक्षता स्थिता, विशेषदृष्ट्याऽन्यतरज्जहीहि तत् ॥ २१३ ॥ ३२ ॥

---

रत्न०—अथ मुनिं प्रति तपोव्रतादिषूद्यमयति—मुने! न किमिति० व्याख्या—हे मुने! त्वं शिवस्येदं शैवं तच्च सुखं च शैवसुखं प्रति आत्मसाद्—आत्मायत्तं किं न करोषि?, अपितु कुरु, किं कृत्वा?—निपीड्य—पीडयित्वा, कं?—देह एव मृत्पिंडः स्वः—स्वकीयः न स्वः अस्वः अस्वश्चासौ देहमृत्पिंडश्चास्वदेहमृत्पिंडस्तमेनं प्रत्यक्षतो दृश्यमानं, कीदृशं?—नश्वरं—नाशशीलमत एवास्वं, यः कश्चन स्वामिनं मुक्त्वा याति स स्वः कथमुच्यते? इत्यस्वेति विशेषणं युक्तं, कैः?—तपश्च व्रतानि च तपोव्रतानि सु—सुष्ठु च तपोव्रतानि च सुतपोव्रतानि सुतपोव्रतानि आद्यानि येषु तैः, जिनाज्ञासंयुक्ततपोव्रताद्यैरित्यर्थः, सुशब्दग्रहणेनाज्ञानकष्टेन शरीरपीडनं निरस्तं, पुनः किं कृत्वा?—त्यक्त्वा, काः प्रति?—भीतीः—भयानि प्रति, कस्य?—भवदुःखराशेः—संसारदुःखसमूहस्येति ॥ २१२ ॥ ३१ ॥

सुखप्रति-
पक्षता

धनवि०—अत्र-इह भवे चरणस्य-चारित्रस्य पालने-आचरणे यत्कष्टं-पीडोद्भवः पुनः परत्र-परभवे तिर्यङ्नरकेषु-तिर्यङ्नरकभवेषु यत्कष्टं भवति तयोः-चारित्रव्रतपालनकष्टयोस्तिर्यङ्नरकभवभाविकष्टयोर्मिथः-परस्परं सप्रतिपक्षता-यत्र जीवे ऐहिकचारित्रपालनकष्टसहनं तत्र पारभविककष्टसहनं न भवति, यत्र जीवे पारभविककष्टसहनं तत्रैहिकचारित्रपालनकष्टं न भवतीतिरूपा विरोधिता स्थिता; तत्-तस्मात्कारणाद्विशेषदृष्ट्या-गौरवलाघवपर्यालोचनरूपया विचार्यान्यतरत्-तयोरन्यतरदैहिकं पारभविकं वा कष्टं जहीहि-त्यजेत्यर्थः ॥ २१३ ॥ ३२ ॥

अथ परीषहासहने ऐहिकसुखस्य परीषहसहने च पारलौकिकसुखस्य च परस्परं विशेषमुपदर्शयन्नुपदिशति—

शमत्र यद्बिंदुरिव प्रमादजं, परत्र यच्चाब्धिरिव द्युमुक्तिगम् ।
तयोर्मिथः सप्रतिपक्षता स्थिता, विशेषदृष्ट्याऽन्यतरद्गृहाण तत् ॥ २१४ ॥ ३३ ॥

धनवि०—अत्र-इह भवे यत्प्रमादजं-विषयादिजनितं शं-सुखं बिंदुरिव-जलकण इव वर्त्तते, च पुनर्यत्परत्र-परभवे द्युमुक्तिगं-

---

रत्न०—एतदेव प्रकारान्तरेणाचष्टे-यदत्र कष्टमिति० व्याख्या—हे मुने ! अत्र जिनप्रवचने चरणस्य-चारित्रस्य पालने यत्कष्टं वर्त्तते च पुनर्यद् परभवे-तिर्यग्नरकेषु कष्टं वर्त्तते तयोर्मिथः-परस्परं सप्रतिपक्षताऽस्ति, यदि प्रथमं कष्टं तदा परं कष्टं न, यदि च परं कष्टं तदा प्रथमं कष्टं नेति सप्रतिपक्षतेत्यर्थः, तत्-तस्मात्कारणाद्विशेषदृष्ट्या-विशेषदर्शनेन तयोर्मध्ये एकम्-अन्यतरत्प्रति जहाहि-त्यजेत्यर्थः ॥ २१३ ॥ ३२ ॥

रत्न०—अथ दुःखयोर्यत्नेन जहीहीत्युक्ते ततो वैपरीत्यदर्शनेन सुखयोरुपादेयतां प्रतिपादयन्नाह—शमत्र यद्बिंदुरिति० व्याख्या—

स्वर्गापवर्गगं शं-सुखमब्धिरिव-समुद्र इव वर्त्तते, **तयोः**-प्रमादजसुखस्वर्गापवर्गसुखयोर्मिथः-परस्परं **सप्रतिपक्षता**, यत्र प्रमादजं सुखं न तत्र स्वर्गापवर्गगं सुखं, यत्र स्वर्गापवर्गगं सुखं न तत्र च प्रमादजं सुखमितिरूपा विरोधिवा **स्थितेति**, **तत्**-तस्मात्कारणाद्विशेषदृष्ट्या-विवेकदृष्ट्याऽन्यतरत्-प्रमादजं सुखं स्वर्गापवर्गगं वा सुखं **गृहाण**-स्वीकुर्वित्यर्थः ॥ २१४ ॥ ३३ ॥

अथोक्तार्थमेव प्रकारान्तरेणोपदिशति—

**अथवा-नियंत्रणा या चरणेऽत्र तिर्यक्स्त्रीगर्भकुंभीनरकेषु या च ।**
**तयोर्मिथः सप्रतिपक्षभावाद्विशेषदृष्ट्याऽन्यतरां गृहाण ॥ २१५ ॥ ३४ ॥**

**धनवि०**—अथवेति स्पष्टं, तदेव दर्शयति-**अत्र**-इह भवे **चरणे**-चारित्रे **या नियंत्रणा**-गाढव्रतबंधनेनावस्थानरूपा वर्त्तते, **च** पुनर्या परभवे **तिर्यंचो**-गोमहिष्यादयः **स्त्रीगर्भश्च**-स्त्रीजठरान्तस्तदङ्गजतया वसनं **कुंभीनरकाश्च**-कुंभीपाकोपलक्षिता नरकावासास्ते तथा

---

हे मुने! अत्र जिनप्रवचनसंयमे यत्प्रमादजं शर्म-सुखं तद्बिंदुरिव वर्त्तते, तथा संयमपालनतः प्रमादपरित्यागतश्च परत्र-परभवे यच्छर्म-सुखं तदब्धिरिव वर्त्तते, शर्म किल० ?-द्युमुक्तिगं-स्वर्गशिवसंबंधि, एतेन चारित्रस्य स्वर्गमुक्तिलक्षणे द्वे फले एवमुक्ते, अप्राप्तक्षपकश्रेणि-चारित्रं स्वर्गफलं प्राप्तक्षपकश्रेणिचारित्रं मुक्तिफलमित्यर्थः, तयोः शर्मणोर्मिथः सप्रतिपक्षता स्थिता, तद्धेतोर्विशेषदृष्ट्या अन्यतरद्गृहाणेति व्याख्या पूर्ववत् ॥ २१४ ॥ ३३ ॥

**रत्न०**—सूत्रे अथवेतिकथनेन एतदेव भंग्यंतरेणाह-**नियंत्रणा येति०** व्याख्या—हे मुने ! अत्र जिनप्रवचनस्य चरणे-चारित्रे या नियंत्रणा

तेषु तिर्यक्स्त्रीगर्भकुंभीनरकेषु नियंत्रणा वर्त्तते तयोर्नियंत्रणयोर्मिथः—परस्परं सप्रतिपक्षभावात्—प्रतिपक्षतासाहित्याद्विरोधावित्यर्थः विशेषदृष्ट्या—विवेकदृष्ट्याऽन्यतरां—चरणनियंत्रणां तिर्यगादिनियंत्रणां वा गृहाणेति ॥ २१५ ॥ ३४ ॥

माध्यस्थ्येन परीषहसहनमुपदिश्य विशेषत उपदिशति—

**सह तपोयमसंयमयंत्रणां, स्ववशतासहने हि गुणो महान्।** "शिवं गुणः" इति वा०
**परवशस्त्वतिभूरि सहिष्यसे, न च गुणं बहुमाप्स्यसि कंचन ॥ २१६ ॥ ३५ ॥**

धनवि०—तपांसि च—बाह्याभ्यन्तरभेदभिन्नानि तपःकर्माणि यमाश्च—व्रतानि संयमाश्च—सप्तदशभेदास्तैर्यंत्रणां—बंधनमिति सह—क्षमस्वेति, हि यतः कारणात्स्ववशतासहने—स्वायत्ततया सहने महान्—मोक्षप्राप्तिलक्षणो गुण—उपकारो भवतीत्यन्वयः, महान् गुण इति

---

गुरुपारतंत्र्यादिभवा वर्त्तते च पुनस्तिर्यंचश्च स्त्रीगर्भश्च तथाऽतीव सकटमुखानि मृन्मयभाजनानि कुंभ्य उच्यंते इति कुंभ्याकारा नरकाः कुंभीनरकाः ते च २ तेषु तिर्यक्स्त्रीगर्भकुंभीनरकेषु या नियंत्रणा वर्त्तते तयोर्नियंत्रणयोर्मिथः सप्रतिपक्षभावाद्विशेषदृष्ट्या अन्यतरां—तयोर्मध्ये त्वमेकां गृहाणेति सुगमं, तिर्यग्ग्रहणेन सूक्ष्मबादरनिगोदयोरपि नियंत्रणा गृहीता ॥ २१५ ॥ ३४ ॥

रत्न०—अथ परवशतया सहनतः स्ववशतया सहनस्य सुंदरतां दर्शयति—सह तपोयमेति० व्याख्या—हे मुने ! तपसां—चतुर्थादीनां यमाना—विकृतिप्रत्याख्यानादिनियमाना संयमः—पंचमहाव्रतरूपस्तेषां यंत्रणां सह—क्षमस्व, हि यस्माद्धेतोः स्ववशतया सहने सति महान् गुणो

स्वाधीन-सहनं

स्थाने शिवं गुण इति पाठे शिवं—मोक्षः, शेषं पूर्ववत्, तु पुनः परवशः—परायत्तः सन् एकेंद्रियादिष्वकामनिर्जराया अतिभूरि—अतिशयेन प्रचुरं सहिष्यसे, च पुनः कंचन—कमपि बहुं—मनाश्रिंतितं गुणं—मोक्षप्राप्तिलक्षणमुपकारं नाप्स्यसि ॥ २१६ ॥ ३५ ॥

अथ परीषहसहने एव शुभफलं दर्शयन्नुपदिशति—

**अणीयसा साम्यनियंत्रणाभुवा, मुनेऽत्र कष्टेन चरित्रजेन च ।**
**यदि क्षयो दुर्गतिगर्भवासगासुखावलेस्तत्किमवापि नार्थितम् ? ॥ २१७ ॥ ३६ ॥**

**धनवि०—हे मुने!** अत्र—इह भवेऽतिशयेनाण्वणीयस्तेनाणीयसा—अत्यल्पेनेत्यर्थः **साम्यनियंत्रणाभुवा कष्टेन च पुनश्चारित्रजेनाणीयसा कष्टेन** परीपहसहनलक्षणेन **यदि**—चे**द्दुर्गतिगर्भवासगासुखावलेः क्षयो**—विनाशो **भवे**दिति, साम्यनियंत्रणाभुवा—समतालक्षणमनोनिरोधलक्षणनियंत्रणाजन्येनेत्यर्थः, दुर्गतिगर्भवासगासुखावलेः—दुर्गतिश्च—तिर्यग्नरकगतिलक्षणा गर्भवासश्च—स्त्रीकुक्षौ गर्भतया स्थिति-

---

वर्त्तते, अथवा शिवं मोक्ष एव गुणो वर्त्तते, तुरिति विशेषे, त्वं परेषां वशः—अधीनः सन्नतिभूरि—घनं यथा स्यात्तथा सहिष्यसि च पुनः कंचन बहुं गुणं नाप्स्यसि—न लप्स्यसे ॥ २१६ ॥ ३५ ॥

**रत्न०—**पुनः प्रकारान्तरेणैतदेवाचष्टे—**अणीयसेति०** व्याख्या—हे मुने! अत्र भवे अतिशयेनाणु—अल्पमणीयस्तेनाणीयसा कष्टेन दुर्गतिगर्भवासगासुखावलेः—दुर्गतिगर्भवासगदुःखावलेरित्यर्थः क्षयः—आत्यंतिकी निवृत्तिलक्षणो वर्त्तते, कष्टेन किंल० ?—साम्यं—समता तदेव नियंत्रणा

सद्गता याऽसुखानां–दुःखानामावलिः–श्रेणिस्तया इत्यर्थः, तत्–तदाऽनन्तरोक्तेनाणीयसा कष्टेन किमर्थितं–वांछितं नावापि–न प्राप्तम्?, अपितु सर्वं प्राप्तमित्यर्थः ॥ २१७ ॥ ३६ ॥

अथ परीषहसहनाभावेऽशुभफलमुपदर्शयन्नुपदिशति—

**त्यज स्पृहां स्वःशिवशर्मलाभे, स्वीकृत्य तिर्यङ्नरकादिदुःखम् ।**
**सुखाणुभिश्चेद्विषयादिजातैः, संतोष्यसे संयमकष्टभीरुः ॥ २१८ ॥ ३७ ॥**

धनवि०—यद्वा तिर्यङ्नरकादिदुःखं स्वीकृत्य स्वःशिवशर्मलाभे–स्वर्गापवर्गसुखप्राप्तौ स्पृहाम्–अभिलापं त्यज–मुंच, अत्र तिर्यञ्चश्च–जलचरस्थलचरखेचरभेदा मत्स्यश्वानकाकादयः नरकाश्च–नारकास्ते आदौ येषां ते २ तेषां दुःखं, आदिपदान्मनुष्यभवगतगर्भ-

---

यदवा तेन नियंत्रणा तया सुखा–जनितेन, पुनः कीदृशेन?–चरित्रात्–चारित्रपालनाज्जातं तेन, तत्–तर्हि अर्थितं–कामितं त्वया किं नावापि?–न प्राप्तं, अपितु सर्वमप्यवापीति ॥ २१७ ॥ ३६ ॥

रत्न०—अथाचार्यः प्रमादिनं यतिं दृष्ट्वा असूयावचनमाह–त्यज स्पृहामिति० व्याख्या—हे यते ! त्वं तिर्यग्नरकादीनां दुःखं स्वीकृत्य स्वः–स्वर्गस्य शिवस्य–मोक्षस्य शर्मणां–सुखानां लाभे स्पृहा–वांछा त्यज–जहीहि, चेद्–यदि त्वं सुखाणुभिः संतोष्यसे–संतोषं प्राप्यसे, अतीवाल्पत्वादेशप्रमाणसुखमानं, यतः किं०?–विषयाः–शब्दादयस्ते आदौ येषां २ तेभ्यो जातैः–समुत्पन्नैः, आदिशब्दाद्विषयसाधनवीणा-

वासजरामरणादिपरिग्रहः, **चेद्**—यदि **संयमकष्टभीरुः** सन्—चारित्रपालनजनितकष्टभीतः सन् त्वं **विषयादिजातैः**—विषयकषायप्रभवैः **सुखाणुभिः**—सुखलेशैः **संतोष्यसे**—हृष्यसे इति कर्मोक्तौ ॥ २१८ ॥ ३७ ॥

अथ परीषहसहने इहलोके परलोके च शुभफलं दर्शयन्नुपदिशति—

**समग्रचिंतार्त्तिहृतेरिहापि, यस्मिन् सुखं स्यात्परमं रतानाम् ।**
**परत्र चेंद्रादिमहोदयश्रीः, प्रमाद्यसीहापि कथं चरित्रे ? ॥ २१९ ॥ ३८ ॥**

धनवि०—**यस्मिन् चरित्रे रतानाम्**—आसक्तानां प्राणिनामिहापि—इहलोकेऽपि **समग्रचिंतार्त्तिहृतेः परमं**—प्रकृष्टं **सुखं स्याद्**—भवति, अत्र समग्राः—सकलाश्च ताश्चिताश्च—राजचौरादिभयलक्षणा अर्त्तयश्च—स्वपरोदरभरणपूरणलक्षणास्तासां हृतेः—हरणादभावादित्यर्थः **च** पुनः **परत्र**—परलोके **इंद्रादिमहोदयश्रीः**—इंद्र आदौ येषां ते इंद्रादयो—महर्द्धिका देवाः, आदिपदादहमिंद्रादयस्ते च महोदयश्च—

---

ललनारूपकमलशर्करादुकूलादीनां ग्रहणं, त्वं किलक्षणः ?—संयमस्य—चारित्रस्य कष्टेभ्यो भीरुः—भयवान्, अनेन पूर्वोक्ता परस्परं सप्रतिपक्षता व्यंजितेति ॥ २१८ ॥ ३७ ॥

**रत्न०**—अथ यत् पूर्वोक्तं साम्यसुखानामानंत्यं तदेव स्पष्टयति—**समग्रचिंतेति०** व्याख्या—यस्मिन् चारित्रे—चरणे रतानां—रागमापन्नानामिहापि—इहलोकेऽपि परमम्—उत्कृष्टं सुखं स्यात्, कस्य हेतोः ?—समग्राणां वस्तुनां चिंतया कृत्वा आर्त्तीनां—पीडानां हृतिः—हरणं तस्याः, च पुनः परत्र—परलोके इंद्रादीनां महोदयस्य च—मोक्षस्य च श्रीः—लक्ष्मीर्भवति हे यते ! तेनेहापि चरित्रे—संयमे कथं प्रमाद्यसि ?—प्रमादवान्

मोक्षस्तेषां श्रीः—संपत्तिः स्याद्, अत्र तत इत्यध्याहार्यं तेन ततः कारणादिहापि—अस्मिन्नप्यैहिकपरमसुखसाधने पारलौकिकइंद्रत्वाहमिंद्र-स्वर्गमोक्षसुखसाधने च चरित्रे—चारित्रे कथं—कुतो हेतोः प्रमाद्यसि ?—प्रमादं गच्छसि, भावार्थस्तु—"न च राजभयं न च चौरभयं, अर्थाधिकरं नरदेयनतम् । इहलोकसुखं परलोकहितं, श्रमणत्वमिदं रमणीयतरम्" ॥१॥ इति सूक्तभावनया स्पष्ट एवेति ॥ २१९ ॥ ३८ ॥

अथ परीषहादिकष्टसहनासमर्थानां जनानां प्रकारान्तरेण सुखसाध्यं धर्मोपदेशमुपदर्शयन्नाह—

**महातपोध्यानपरीषहादि, न सत्त्वसाध्यं यदि धर्त्तुमीशः ।**
**तद्भावनाः किं समितीश्च गुप्तीर्धत्से शिवार्थिन्न मनःप्रसाध्याः ? ॥ २२० ॥ ३९ ॥**

धनवि०—यदि—चेत् सत्त्वसाध्यं—सत्त्वेन—शारीरमानसपराक्रमेण साध्यं—गम्यं **महातपोध्यानपरीषहादि धर्तुं न ईशो**—न समर्थो भवसि, अत्र महान्ति च तानि तपांसि च—मासक्षपणादीनि ध्यानानि—महाप्राणादीनि च परीषहाश्च—द्वाविंशतिसंख्याकाः प्रसिद्धास्ते

---

भवसि, अपितु मा प्रमाद्य, यत उक्तं—देवलोगसमाणो य, परियाओ महेसिणं । रयाणं अरयाणं च, महाणरयसालिसोत्ति ॥ १ ॥ [ देवलोक-समानः पर्यायो महर्षीणाम् । रतानां अरतानां च महानिरयसदृशः ॥ १ ॥ ] तया केवलं रतानामित्युक्तं; 'न च राजभयं न च चौरभयं, न च वृत्तिभयं न वियोगभयम् । इहलोकसुखं परलोकहितं, श्रमणत्वमिदं रमणीयतरम् ॥ १ ॥ इति ॥ २१९ ॥ ३८ ॥

रत्न०—अथ बहुकष्टसाध्यं सयमकार्यं साधयितुमसमर्थं यतिं प्रति सुखसाध्ये कार्ये प्रवर्त्तयन्नाह—**महातपोध्यानेति०** व्याख्या—हे यते ! यदि महातपो—मासक्षपणादिकं ध्यानं—प्राणायामादि परीसहाः द्वाविंशति ते आदौ यस्य तन्महातपोध्यानपरीषहादि प्रति धर्त्तुं—धरणाय

'आदौ यत्र तत्तथा, चरित्रमित्यर्थः, अत्रादिपदादुपसर्गपरिग्रहः, हे **शिवार्थिन् !**—मोक्षार्थिन् **तत्**—तदा **मनःप्रसाध्या**—मनोमात्रगम्याः सुखसाध्या इत्यर्थः **भावना**—अनित्यताद्याः बोधिपर्यंता द्वादश च पुनः **समितीः**—ईर्याद्याः **पंच गुप्तीः**—मनोगुप्त्याद्यास्तिस्रः **किं न धत्से ?**—न धरसि ॥ २२० ॥ ३९ ॥

अथानंतरोक्तां मनःप्रसाध्यां भावनामादावुपदिशति—

**अनित्यताद्या भज भावनाः सदा, यतस्व दुःसाध्यगुणेऽपि संयमे ।**
**जिघत्सया ते त्वरते ह्ययं यमः, श्रयन् प्रमादान्न भवाद्बिभेषि किम् ?** ॥ २२१ ॥ ४० ॥

**धनवि०—अनित्यताद्या भावनाः सदा**—निरंतरं **भज**—श्रय, अत्रानित्यता आद्या—प्रथमा यासां ता भाव्यते—वास्यते धर्मध्यानेन संस्क्रियते आत्मा याभिरिति भावनाः, अत्राद्यपदेन शेषैकादशभावनापरिग्रहो, भावनाविस्तरो योगशास्त्रादवसेयः; अत्रापिशब्दश्चार्थस्तेन

---

ईशः—समर्थो न भवसि, किंलक्षणं ?—सत्त्वेन 'धर्मग्रहणे धर्मिग्रहण'मितिन्यायात् सत्त्ववता पुरुषेण साध्यं—साधनीयं हे शिवार्थिन् !—हे मोक्षाभिलाषिन् तत् तर्हि भावना द्वादशानित्यत्वादिकास्तथैकैकस्य महाव्रतस्य पंचपंचसद्भावात् पञ्चविंशतिर्वा, ताः प्रति किं न धत्से ?—न दधसे, तथा च पुनः समितीः—पंचेर्याप्रभृतीः प्रति, चस्योभयत्रापि योजनात् च पुनस्तिस्रो गुप्तीः—मनोगुप्त्याद्याः प्रति किं न धत्से ?, यतः किंलक्षणाः ?—मनसा एव प्रसाध्यंते ता मनःप्रसाध्याः, एताश्चाल्पसत्त्ववताऽपि पुरुषेण साध्यास्ततः साधयेत्यर्थः ॥ २२० ॥ ३९ ॥

**रत्न०**—पुनरपि प्रकारान्तरेण तदेव ज्ञापयन्नाह—**अनित्यताद्या इति०** व्याख्या—हे यते ! अनित्यताद्या भावना द्वादश प्रति सदा—

च पुनर्दुःसाध्यगुणे–दुःसाध्या मूलगुणा उत्तरगुणाश्च यस्य तस्मिन् संयमे यतस्व–यत्नं कुरु; हि यतः कारणात्ते–तव जिघत्सया–अत्तुमिच्छयाऽयं सर्वलोकप्रसिद्धो यमः–कृतांतस्त्वरते–उत्सुको भवतीत्यर्थः, अत्रायं यम इतिस्थानेऽसंयम इति पाठः, स च प्रसिद्धार्थ एवेति, ततः प्रमादान्–मद्यादीन् श्रयन्–भजन् भवात्–संसारात्किं न बिभेषि ?–किं न भयं यासि ॥ २२१ ॥ ४० ॥

अथानंतरोक्तं मनःप्रसाध्यं गुप्तित्रयमुपदिशति—

हतं मनस्ते कुविकल्पजालैर्वचोऽप्यवद्यैश्च वपुः प्रमादैः ।
लब्धीश्च सिद्धीश्च तथापि वांछन्, मनोरथैरेव हहा हतोऽसि ॥ २२२ ॥ ४१ ॥
"दग्धं मनो मे कुविकल्पजालैः–मनोरथैरेव हहा विहन्ये" इति वा ॥

धनवि०—ते–तव मनः–चित्तं कुविकल्पजालैः–स्त्रीसेवाचिंतनादिदुर्ध्यानसमूहैर्हतं–हतप्रायं जातं, वचोऽपि ते–तवावद्यैः–अलीकभाषणादिभिः पापैर्हतम्–अशुभं जातं, च पुनः शरीरं प्रमादैः–प्रमादाचरणैर्हतम्–अशुभं जातं; तथापि–एवं गुप्तित्रयाभावेऽपि

---

निरन्तरं भज, तथा मा सुकुमारो भव, अपि तु कर्कशो भूत्वा दुःसाध्या मूलगुणा उत्तरगुणाश्च यस्य सः तस्मिन्नपि संयमे–चारित्रे यतस्व–यत्नं कुरु, हि बलात्कारणादयं यमो–मृत्युर्जनमते आयुःक्षयलक्षणस्ते–तव जिघत्सया–खादितुमिच्छया त्वरते–त्वरां कुरुते, दिनं दिनं प्रति समीपमायातीति, हे यते!–त्वं प्रमादान्–निद्रादीन् प्रति श्रयन् किं न भवाद्बिभेषि ?–न भयमाप्नोषि, किं तु भेतुं युक्तमिति ॥ २२१ ॥ ४० ॥

रत्न०—अथ यांता महती सामग्री तु तथाविधा नेति यतिनं ज्ञापयन्नाह–हतं मनस्ते० व्याख्या—हे मुने! ते–तव मनः कुविकल्पानां

मनोरथघातः

लब्धीश्च—गौतमादेरिवामर्षौषध्यादिकाः सिद्धीश्च—लघिमादिका वांछन्—अभिलषन् हहा इति खेदे मनोरथैरेव—लब्धिसिद्धिवांछालक्षणैरेव हतः—तिरस्कारविषयीभूतोऽसि ॥ २२२ ॥ ४१ ॥ अत्रोक्तार्थे पाठान्तरं दर्शयति—"दग्धं मनो मे कुविकल्पजालैर्वचोऽप्यवद्यैश्च वपुः प्रमादैः। लब्धीश्च सिद्धीश्च तथापि वांछन्, मनोरथैरेव हहा विहन्ये ॥ १ ॥" इति रूपं पाठान्तरं ज्ञेयम्, अत्र दग्धमिति—विनष्टं, विहन्य इति हन् हिंसागत्योरित्यस्य वर्त्तमानात्मनेपदास्मदर्थैकवचनान्तस्य साधुरिति, शेषं स्पष्टं पूर्ववद्, अत्र पाठद्वयेऽपि युष्मदर्थास्मदर्थकृतो विशेष इति ॥ २२२ ॥ ४१ ॥

अथ गुप्तित्रये मनोगुप्तिमेव केवलामुपदिशति—

**मनोवशस्ते सुखदुःखसंगमो, मनो मिलेद्यैस्तु तदात्मकं भवेत्।**
**प्रमादचौरैरिति वार्यतां मिलच्छीलांगमित्रैरनुषंगयानिशम् ॥ २२३ ॥ ४२ ॥**

धनवि०—ते—तव सुखदुःखसंगमः—सुखदुःखप्राप्तिर्मनोवशः—चित्ताधीनोऽस्ति, मनसः शुभाशुभव्यापारैः शुभाशुभकर्मबंधस्तेन च

---

जालानि २ तैर्हतं च पुनर्वचोऽपि—वागप्यवद्यैः, अवद्यकारणत्वान्मृषाभाषाद्यैर्हतं तथा वपुः—शरीरं प्रमादैः—प्रमादासेवनैर्हतं—विनाशितमित्यर्थः, एतत्कथनेन तिसृणां गुप्तीनां खंडनमुक्तं, तथा गुप्तीर्विनाऽप्यामर्षौपध्यादिका लब्धीः प्रति च पुनर्मंत्रविद्यादिकाः सिद्धीः प्रति वांछन् हाहा इति खेदे मनोरथैरेव—मनोरथकरणैरेवेत्यर्थः हतोऽसि—पीडितोऽसि, तंदुलदुग्धघृतशर्करासामग्रीमन्तरा पायसभोजनेच्छावन्मुधैव लब्धिसिद्ध्यादिवांछेत्यर्थः ॥ २२२ ॥ ४१ ॥ दग्धं मनो मे इति पाठान्तरव्याख्या—प्रथमा त्रिपदी दग्धं मनो मे इतिकथनात् अस्मच्छब्दप्रयोगेण

शीलांगमित्रं

सुखदुःखप्राप्तिरिति परम्परया मनोवशः सुखदुःखसंगम इत्यर्थः; तु पुनर्मनो यैः पदार्थैः सह मिलेत्—संयुक्तं भवेत्तदात्मकं—तत्पदार्थमयं भवेदिति हेतोः प्रमादचौरैः—विषयादितस्करैर्मिलत्—संयुक्तं भवन्मनो वार्यतां—निवार्यतामिति कर्मोक्तौ, च पुनः शीलांगमित्रैः अष्टादशसहस्रशीलांगलक्षणैः सुहृद्भिः सह—अनिशं—निरंतरं स्वं मनोऽनुषंगय—संयोजय, अष्टादशसहस्रशीलांगानि च—जे नो करंति मणसा णिज्जियआहारसन्नसोइंदी। पुढवीकायारंभं खंतिजुआ ते मुणी वंदे ॥ १ ॥[1] खंती १ अज्जव २ मद्दव ३ मुत्ती ४ तव ५ संजमे य ६ बोद्धव्वे। सच्चं ७ सोयं ८ आकिंचणं ९ च बंभं च १० जइधम्मो ॥ २ ॥ इत्यादिगाथासूचितानि, शीलांगस्योपलक्षणत्वेन सयमादिशेपसप्तदशकपरिग्रहः तद्विस्तरश्च पंचाशकादिभ्योऽवसेयः ॥ २२३ ॥ ४२ ॥

---

व्याख्यातव्या तथाऽप्यहं लब्धीः सिद्धीश्च वाञ्छन् हहा इति खेदे मनोरथैरेव विहन्ये, विहतः—पीडितः परं लब्धिसिद्धयो न प्राप्ताः इति चतुर्थपदव्याख्यानं, दग्धमितिकथनेन कविना कुविकल्पजालानामग्निवद्दुष्टत्वं ज्ञापितमिति ॥ २२२ ॥ ४१ ॥

रत्न०—अथ सुखदुःखयोर्मनसोऽधीनत्वेन तत्संगतावेव मनो योजनीयमित्युपदिशति—मनोवशस्ते इति० व्याख्या—हे मुने! सुखदुःखाभ्यां संगमो—मीलनं मनसो वशः—आयत्तोऽस्ति तुरितिविशेषे तन्मनो यैः सह मिलेत्तदात्मकं भवेत्—तत्स्वरूपकं भवेद्, दुष्टैः सह मिलद्दुष्टं भवेत्, साधुभिः सह मिलत्साधु भवेत्, अनिलवद्, यथाऽनिलः कनकतरुपुष्पैर्मिलत्तद्गंधवासितो भवेच्चंपकादिपुष्पैश्च मिलन् तद्गंधवासितो भवेदित्यर्थः, इति हेतोस्त्वन्मनः प्रति प्रमादा एव चौराः संयमधनापहारित्वात्तैः सह मिलद्वार्यतां। तद्वारणोपायमाह—तथा शीलस्य—संयमस्याङ्गानीव शीलाङ्गानि

---

१ ये न कुर्वन्ति मनसा निर्जिताहारसंज्ञाश्रोत्रेन्द्रियाः। पृथ्वीकायारम्भं क्षान्तियुक्तास्तान् मुनीन्वन्दे ॥ १ ॥ क्षान्तिरार्जवं मार्दवं मुक्तिः तपः संयमश्च बोद्धव्यः। सत्यं शौचमाकिञ्चन्यं च ब्रह्म च यतिधर्माः ॥ २ ॥ २ पंचाशके चतुर्दशपंचाशकं शीलाङ्गप्रकरणम्।

अथ वचनगुप्तिमेव केवलामुपदिशति—

**ध्रुवः प्रमादैर्भववारिधौ मुने !, तव प्रपातः परमत्सरः पुनः ।**
**गले निबद्धोरुशिलोपमोऽस्ति चेत्, कथं तदोन्मज्जनमप्यवाप्स्यसि ? ॥ २२४ ॥ ४३ ॥**

धनवि०—हे मुने !—हे साधो ! प्रमादैर्हेतुभूतैर्भववारिधौ—संसारसमुद्रे तव प्रपातः—पतनं ध्रुवो—निश्चलोऽस्ति, चेद्—यदि पुनर्द्वितीयः परमत्सरः—परेषु—आत्मव्यतिरिक्तेषु मत्सरः—असूयाकरणमुरुशिलोपमः—उर्वी चासौ शिला च—स्थूलोपलस्तत्समानो गले—कंठे निबद्धो—नियंत्रितोऽस्ति तदा भववारिधावुन्मज्जनमपि—पुनरुपरितरणमपि कथं ?, केनावाप्स्यसि—लप्स्यसे ॥ २२४ ॥ ४३ ॥

---

तान्येव मित्राणि तैः शीलाङ्गमित्रैः—अष्टादशसहस्रप्रमाणैः सहानुषंजय—संगं—मैत्रीं कारय, कथं ?—अनिशं—निरन्तरं, यथा तव सुखेनैव संगमो भवेदिति ॥ २२३ ॥ ४२ ॥

रत्न०—अथ प्रमादपरिहारं भंग्यन्तरेणोपदिशति—ध्रुवः प्रमादैरिति० व्याख्या—हे मुने ! तव प्रमादैर्हेतुभिर्भववारिधौ—संसारसमुद्रे प्रपातः—प्रपतनं ध्रुवो—निश्चितोऽस्ति, अवश्यंभावीत्यर्थः, प्रमादसंसारपातयोर्धूमवह्न्योरिव व्याप्तिमत्त्वात्, पुनरन्यः प्रमादोपरीत्यर्थः, चेद्—यदि परेषु मत्सर—ईर्ष्या परमत्सरोऽस्ति, कस्य ?—तव, किल० ?—गले—कंठे निबद्धा या उरुः—महती शिला तया उपमायते यः सः तदा उन्मज्जनं—निमग्नस्य जलोपर्यागमनमपि केन प्रकारेणाप्स्यसि ?, तेन प्रमादं परमत्सरं च जहाहीत्युपदेशः ॥ २२४ ॥ ४३ ॥

कष्टसहनं विडंबकः

अथ केषाञ्चित् कायगुप्तिमुपदिशति—

महर्षयः केऽपि सहंत्युदीर्याप्युग्रातपादीन्यपि निर्जरार्थम् ।
कष्टं प्रसंगागतमप्यणीयोऽपीच्छन् शिवं किं सहसे न? भिक्षो! ॥ २२५ ॥ ४४ ॥

धनवि०—केऽपि जगदद्भुतचरित्रा महर्षयो—महामुनयः उदीर्यापि—उदीरणं कृत्वाऽप्युग्रातपादीन्यपि ग्रीष्मकाले, आदिपदाच्छीत-
काले शीतवातादीन्यपि, कष्टानि निर्जरार्थं—कर्मक्षयार्थं सहंति, तदा हे भिक्षो!—मुने त्वं शिवं—मोक्षमिच्छन्—वांछन् प्रसंगागतमपि—
स्वभावत एवोपस्थितमप्यतिशयेनाप्यणीयः कष्टं—शारीरं दंशमशकमलादिजनितं किं न सहसे?—किं न क्षमसे ॥ २२५ ॥ ४४ ॥

अथ परीषहसहने एव तत्त्वतो यतिस्वरूपं भवतीति दर्शयन्नुपदिशति—

यो दानमानस्तुतिवंदनादिभिर्न मोदतेऽन्यैर्न तु दुर्मनायते ।
अलाभलाभादिपरीषहान् सहन्, यतिः स तत्त्वादपरो विडंबकः ॥ २२६ ॥ ४५ ॥

धनवि०—यः पुमान् दानमानस्तुतिवंदनादिभिः प्रसिद्धैः, आदिपदात्पादसंवाहनादिभिः, न मोदते—न हृष्यति, तु पुनरन्यैः—

---

अथ महत्कष्टसहनासामर्थ्ये सति प्रसंगागतकष्टसहनमुपदिशति—महर्षय इति० व्याख्या—केऽपि महर्षयः पूर्वं श्रीभद्रबाहुस्वामिप्रभृ-
तयश्चतुर्गृहिण्यपुत्राद्याः शीतातपादिसोढारः उदीर्यापि उग्रातपशीतादीन्यपि निर्जरार्थं सहंति—क्षमंते, हे भिक्षो! त्वं प्रसंगागतमणीयोऽपि कष्टं कदा-
चित् क्षुत्पिपासाशीतातपादिकं किं न सहसे?, अपितु सहस्व, किं कुर्वन् सन्?—शिवं—मोक्षमिच्छन् कथमपि, तच्छिवं कथं प्राप्स्यसीति ॥ २२५ ॥ ४४ ॥

तत्प्रतिपक्षभूतैरप्राप्तिकर्कराहननगालिप्रदानतिरस्कारादिभिर्न **दुर्मनायते**—अदुर्मना दुर्मना भवतीति क्यङि दुर्मनायते इति साधुः, किं कुर्वन् ?—**अलाभलाभादिपरीषहान्** 'खुहा १ पिवासा २ सी ३ उण्हं ४, दंसा ५ चेला ६ रइ ७ त्थिओ ८। चरिया ९ निसीहिया १० सिज्जा ११, अक्कोस १२ वह १३ जायणा १४ ॥ १ ॥ अलाभ १५ रोग १६ तणफासा १७, मल १८ सक्कारपरीसहा १९। पन्ना २० अन्नाण २१ संमत्तं २२, इय बावीस परीसहा ॥ २ ॥'[1] इत्यादिगाथासूचितान् द्वाविंशतिपरीषहान् **जयन्**—अभिभवन् सहन्नित्यर्थः, **स पुमान् तत्त्वतः**—परमार्थतो **यतिः**—साधुर्भवतीति, **अपरः**—एतद्विपरीतलक्षणः पुमान् **विडंबको**—वेषमात्रधरणेन नरो भवतीत्यर्थः ॥ २२६ ॥ ४५ ॥

---

**रत्न०**—अथ यतित्वायतित्वयोर्भेदं निरूपयन्नाह—**यो दानमानेति०** व्याख्या—यो दानमानस्तुतिवंदनादिभिः श्राद्धकृतैः सद्भिर्न मोदते—हर्षं न प्राप्नोति, किंत्वेतत्सर्वं चारित्रस्य करोति, यदि ममैव कुर्यात्तदा चारित्ररहितानामन्येषामपि कुर्यादिति भावयेत्, च पुनरन्यैर्दानमानस्तुतिवंदनादिभिरकृतैस्तथा तेभ्यो विपरीतैः कृतैर्न दुर्मनायते—दुर्मना न भवति दुः—दुष्टं मनो यस्य स दुर्मनाः अदुर्मना दुर्मना भवतीति दुर्मनायते 'च्व्यर्थे भृशादेः स्तो'रिति ( ३–४–३१ ) सलोपे क्यङ्प्रत्यये दीर्घे च कृते दुर्मनायते इति सिद्धं, किं कुर्वन् ?—अलाभः—अप्राप्तिर्लाभः—प्राप्तिस्तावादौ येषां ते अलाभलाभादयस्ते च ते परीषहाश्च तान् प्रति जयन् सन् स तत्त्वात्—परमार्थतो यतिः स्याद्, परो दानमानस्तुतिवंदनादिभिर्मोदमानस्तदभावे च तद्विपरीतकरणे च दूयमानः अलाभलाभादिपरीषहान् अजयंश्च सर्वोऽपि विडम्बको यतिवेषभृन्नटवद्भवतीति ॥२२६॥४५॥

---

[1] क्षुधा पिपासा शीतमुष्णं दंशाः अचेलः अरतिः स्त्रियः। चर्या निषद्या शय्या आक्रोशो वध याचना अलाभो रोगः तृणस्पर्शो मलः सत्कारः परिषहाः। प्रज्ञा अज्ञानं सम्यक्त्वमेते द्वाविंशतिः परिषहाः ॥ ( नवतत्वप्रकरणम् गा. २७–२८ )

अथ या[illegible]यगुप्तिमूलमनोगुप्तिरक्षणाय यतिर्गृहस्थतप्तिर्न विधेयेति दर्शयन्नुपदिशति—

दधद्गृहस्थेषु ममत्वबुद्धिं, तदीयतप्त्या परितप्यमानः ।
अनिर्वृतांतःकरणः सदा स्वैस्तेषां च पापैर्भ्रमिता भवेऽसि ॥ २२७ ॥ ४६ ॥

धनवि०—गृहस्थेषु—अगारिषु ममत्वबुद्धिं—ममायं भक्त इत्यादिमतिं दधत्—धरन् तदीयतप्त्या—गृहस्थसुखदुःखचिंतया परितप्यमानः—परितापं कुर्वन् अनिर्वृतांतःकरणः—अनिर्वृतम्—असुखितमंतःकरणं—चित्तं यस्य स तथा सन्, सदा—सर्वकालं स्वैः—आत्मीयपापैश्च पुनस्तेषां गृहस्थानां पापैः—दुष्कृतैर्भवे—संसारे भ्रमितासि—भ्रमणकर्त्ताऽसीत्यर्थः ॥ २२७ ॥ ४६ ॥

अथानंतरोक्तायाः परतप्तेरकरणमेव द्रढयन्नुपदिशति—

त्यक्त्वा गृहं स्वं परगेहचिंतातप्तस्य को नाम ? गुणस्तवर्षे ! ।
आजीविकाऽऽस्ते यतिवेषतोऽत्र, सुदुर्गतिः प्रेत्य तु दुर्निवारा ॥ २२८ ॥ ४७ ॥

रत्न०—अथ गृहस्थानां तप्तिं कुर्वाणं यतिं प्रति काव्यद्वयेन किंचिदुपदिशन्नाह—दधद्गृहस्थेष्विति० त्यक्त्वा गृहमिति० व्याख्या— हे यते! गृह[illegible]र्थः, त्वं ममत्वबुद्धिम्—एते मदीया गृहस्थाः इति ममताधियं दधद्—दधानः सन् तत एव तदीयया गृहस्थसंबंधिन्या तप्त्या—[illegible]तनिधनसद्भावाभावतज्जनितसुखदुःखादिचिंतया परितप्यमानः—सुखदुःखकरणनिवारणासामर्थ्ये सति संतापं भजन् तत एव सदा—निरन्तरमनिर्वृतं—निर्वृत्तिमनापन्नमंतःकरणं यस्य सः, एवंविधः सन् स्वैः—स्वकीयैश्च पुनस्तेषां—गृहस्थानां पापैर्भवे—संसारे भ्रमिताऽसीति, मुधा गृहस्थेषु ममत्वं तेषां च तप्तिं मा कृथा इत्यर्थः ॥ २२७ ॥ ४६ ॥ हे ऋषे ! त्वं स्वं—स्वकीयं गृहं त्यक्त्वा परेषां—गृहस्थाना गेहानां—गृहाणां

धनवि०—हे ऋषे!—हे मुने स्वम्—आत्मीयं गृहम्—अगारं त्यक्त्वा—विमुच्य परगेहचिंतातप्तस्य नामेति कोमलामंत्रणे तव कः?—किंनामा गुणः—उपकारः, स्वसुखदायक इत्यर्थः; नन्वाजीविकालक्षणो गुणोऽस्त्येवेत्याशंकायामाह—आजीविकेति, यद्यप्याजीविका—उदरपूरणोपायलक्षणो गुणोऽत्र—इह भवे यतिवेषतः—रजोहरणादियतिलिङ्गधरणतः आस्ते—वर्त्तते, तु पुनस्तथापि प्रेत्य—परभवे सुष्ठु—अतिशयेन दुर्गतिः—नरकादिलक्षणा दुर्निवारा—दुःखेन नितरां वार्यते—निराक्रियते इति दुर्निवारा आस्त इति ॥ २२८ ॥ ४७ ॥

अथ कायगुप्तिमतामपि स्वार्थे सावद्ये चिंतने भाषणे च दोषं दर्शयन्नुपदिशति—

**कुर्वे न सावद्यमिति प्रतिज्ञां, वदन्नकुर्वन्नपि देहमात्रात् ।**
**शय्यादिकृत्येषु नुदन् गृहस्थान्, हृदा गिरा वाऽपि कथं मुमुक्षुः? ॥ २२९ ॥ ४८ ॥**

धनवि०—अहं सावद्यं—सपापं कर्म न कुर्वे "करेमि भंते! सामाइयं सव्वं सावज्जं जोगं पच्चक्खामि जावज्जीवाए"[1] इत्यादिपाठा-

---

चिन्तया—सुखदुःखादिचिंतनरूपया तप्तस्य सतोऽपि तस्य नामेति कोमलामंत्रणे तव को गुणो वर्त्तते?, अपि तु न कोऽपीत्यर्थः, स्वं गृहं त्यक्त्वा बहूनां गृहाणां चिंताकरणं विडम्बनैवेति, ततस्तवात्र—इहलोके केवलं यतिवेषतः आजीविका—उदरभरणरूपा आस्ते—वर्त्तते, तुरिति विशेषे, प्रेत्य—परभवे तु दुर्गतिः—अतिशयेन दुर्गतिर्दुर्निवारा—वारयितुं दुःशक्येत्यर्थः ॥ २२८ ॥ ४७ ॥

रत्न०—अथेतिहेतोस्त्वं कायेन मुमुक्षुरसि, नतु मनसा वाचा, इति यतिनं ज्ञापयन्नाह—कुर्वे न सावद्यमिति० व्याख्या—हे मुमुक्षो!

---

१ करोमि! भगवन्! सामायिकं सर्वं सावद्यं योगं प्रत्याख्यामि—यावज्जीवम्...(सामायिकप्रत्याख्यानगाथा)

संघसावद्यं

द्विनेति प्रतिज्ञाम्—अङ्गीकारं वदन्—मनःपूर्वं वचसा प्रतिपादयन् देहमात्रात्—केवलकायात्सावद्यं योगमकुर्वन्नपि शय्यादिकृत्येषु—उपाश्रयादिकार्येषु गृहस्थान्—सागारिकान् हृदा—मनसा गिरा—वाचा नुदन्—प्रेरयन् कथं ?—केन प्रकारेण मुमुक्षुः—सत्यवक्ता वक्तिरसि—भवसीति ॥ २२९ ॥ ४८ ॥

अथ मनोगुप्त्यधिकाराद्धर्मनिरपेक्षं परार्थं सावद्यचिन्तने दोषं दर्शयन्नुपदिशति—

**कथं महत्त्वाय ममत्वतो वा, सावद्यमिच्छस्यपि संघलोके ? ।**
**न हेममय्यप्युदरे हि शस्त्री, क्षिप्ता क्षणोति क्षणतोऽप्यसून् किम् ? ॥ २३० ॥ ४९ ॥**

धनवि०—महत्त्वाय—आत्मनो गौरवायाथवा ममत्वतो—ममत्वबुद्ध्या संघलोकेऽपि—साधुसाध्वीश्रावकश्राविकालक्षणचतुर्विधसंघेऽपि

---

रत्नं प्रत्यहमावश्यकं कुर्वन् सामायिकोच्चारे 'मनसा वाचा कायेन सर्वं सावद्यमहं न कुर्वे' इति प्रतिज्ञाम्—अङ्गीकारं वदन् केवलं देहो देहमात्रं तस्मादकुर्वन्नपि, सावद्यमिति ग्राह्यं, पर शय्या—वसतिः सा आदौ येषां तानि शय्यादीनि तानि च तानि कृत्यानि तेषु गृहस्थान् याहि इदमानयेदं कुर्वित्यादि नुदन्—प्रेरयन् सन् हृदा—मनसा गिरा—वचसा मोक्षमिच्छुर्मुमुक्षुरिति सान्वर्थनामा कथमसि ?, अपितु तत्त्वदृष्ट्या विचार्यमाणे कायेन मुमुक्षुरसि, पर मनसा वाचा नास्येव, आदिशब्देन चैत्यादिग्रहणं; अत्र नुदन्नित्यादेशविषयकं प्रेरणं ग्राह्यं, श्राद्धानामेतत्करणीयं दृश्यते, पूर्वमपि ये श्राद्धा अभूवन् तैरपि कृतमिति विधिरूपं तु दृश्यत एवेति, यतः—“जुत्तमेयं सूरियाभा ! १ पुराणमेयं सूरियाभा ! २ करणिज्जमेयं सूरियाभा ! ३ आइण्णमेयं सूरियाभा ! ४ अब्भणुण्णायमेयं सूरियाभा ! ५ जीयमेयं सूरियाभा ! ६” इति सूर्याभदेवताद्यधिकारे श्रीराजप्रश्नीयोपाङ्गे विधिवाक्यानां दृश्यमानत्वादिति ॥ २२९ ॥ ४८ ॥

सावद्यं—सपापं कर्म मूलकर्मादिद्रव्यप्राप्तिपुत्रप्राप्त्याद्युपायभूतं कथमिच्छसि ?—वांछसि; हि—यतः कारणाद्धेममयी—सुवर्णमयी शस्त्री—कृपाणिका उदरे—जठरे क्षिप्ता—प्रक्षिप्ता क्षणतोऽपि—क्षणादप्यसून्—प्राणान् किं न क्षणोति ?—न हिनस्ति। अत्र संघलोकः सुवर्णस्थानीयस्तस्य स्वमहत्त्वार्थं ममताबुद्ध्या च सावद्यकर्मचिंतनं शस्त्रीस्थानीयं संयमजीवितं च प्राणस्थानीयमिति दृष्टांतदार्ष्टांतिकयोजना ॥ २३० ॥ ४९ ॥

अनंतरं समितिगुप्तिशिक्षामुपदिश्यात्मगतौद्धत्यपरिहारार्थमुपदिशति—

रंकः कोऽपि जनाभिभूतिपदवीं त्यक्त्वा प्रसादाद्गुरो-
र्वेषं प्राप्य यतेः कथंचन कियच्छास्त्रं पदं कोऽपि च।
मौखर्यादिवशीकृतर्जुजनतादानार्चनैर्गर्वभा-
गात्मानं गणयेन्नरेंद्रमिव धिग्गंता द्रुतं दुर्गतौ ॥ २३१ ॥ ५० ॥

---

रत्न०—पुनरेतदेव विवृणोति—**कथं महत्त्वायेति०** व्याख्या—हे यते! त्वं संघलोकेऽपि—श्रावकश्राविकालक्षणेऽपि कथं सावद्यमिच्छसि ?—वांछसि, कस्मै ?—महत्त्वाय, एते यदि चैत्यादि कुर्वंति तदा मम महत्त्वं वर्द्धते, अस्मिन् सतीदं चैत्योपाश्रयसाधर्मिकवात्सल्यादिकं जातमित्यर्थः। वा—अथवा ममत्वतः—ममत्वबुद्ध्या पूर्वमिदं मदीयं गृहमासीत्तेन मदीयमेतच्चैत्यं भवतु, अथवा मया गृहिदशायां चैत्यादि कारितं तेन मदीयं चैत्यादि सज्जीकारयाम्येवेतिलक्षणतः, ननु पुण्यकार्यं कथं सावद्यं भवतीति दृष्टांतेनाह—हि यस्मात्कारणाद्धेममयी—सुवर्णविकारापि शस्त्री—असिधेनुरुदरे क्षिप्ता सत्यसून्—प्राणान् प्रति क्षणतः—क्षणमात्रतः किं न क्षणोति ?—न हिनस्ति, अपितु क्षणोति, एतत्सर्वमादेशदानेऽनधिकारित्वादसंयतिवद्गृहस्थानां यथा तथा प्रवर्त्तनाकरणेन च सावद्यतयोक्तं, परं विधितयोपदिशतः सतः सावद्यं नेति प्रतिभाति ॥ २३० ॥ ४९ ॥

धनवि०—गृहस्थावस्थायां कोऽपि—अनिर्दिष्टनामा रंको—दरिद्रः पुमान् जनाभिभूतिपदवीं—जनेभ्योऽभिभूतेः—पराभवस्य पदवीं—पद्धतिं भिक्षयवागित्यर्थंस्त्यक्त्वा—परिहृत्य गुरोः प्रसादाद्—गुरुकृपावशात्कथंचन—केनचिदुपायेन यतेः—मुनेर्वेषं—रजोहरणादिलिङ्गं प्राप्य—अधिगत्य मौखर्यादिवशीकृतर्जुजनतादानार्चनैर्गर्वभाग्—मदवानात्मानं—स्वं नरेंद्रमिव—राजानमिव गणयेत्—चिंतयेत्, च पुनः कोऽपि पुमान् गुरोः प्रसादात् शास्त्रं—व्याकरणप्रमाणसिद्धांतादिग्रन्थानां सूत्रमर्थं च प्राप्य मौखर्यादिवशीकृतर्जुजनतादानार्चनैर्गर्वभागात्मानं नरेंद्रमिव गणयेत्, च पुनः कोऽपि पुमान् गुरोः प्रसादात्पंडितादिपदवीं प्राप्य मौखर्यादिवशीकृतर्जुजनतादानार्चनैर्गर्वभागात्मानं नरेंद्रमिव गणयेत्, अत्र मुखरस्य भावो मौखर्यं—वाचालतेत्यर्थस्तदादौ—प्रथमं यस्य तत्तथा, आदिपदात्सकपटवैराग्यमुद्रादिपरिग्रहः, तेन वशीकृता—रंजिता चासौ ऋजुजनता च—भद्रकजनसमूहस्तया विहितानि दानार्चनादीनि प्रसिद्धानि तैस्तथेति, त पुरुषं धिगस्तु, यतः स पुरुषो द्रुतं—निश्चितं दुर्गतौ—नरकादिगतौ गंता—गमनशील इति ॥ २३१ ॥ ५० ॥

---

रत्न०—अथात्मनो रंकत्वादिदूषितां पूर्वावस्थां विलोक्य संयमावस्थायां संपदं प्राप्तोऽपि गर्वं कृत्वा दुर्गतौ गन्ताऽसीति कथयन्नाह—रंकः कोऽपीति० व्याख्या—कश्चिद्गृहस्थवासमाश्रित्य निःस्वतया रंकः स एवात्मानं नरेन्द्रमिव गणयन् धिग्—निंदितं यथा स्यात्तथा द्रुतं—शीघ्रं दुर्गतौ गंता, किं कृत्वा?—वेषं प्राप्य, कस्य?—यतेः, यतिसंबंधिनमित्यर्थः, किं कृत्वा?—त्यक्त्वा, कां?—जनानामभिभूतिः—पराभवो यस्यां सा चासौ पदवी च तां, तथा कथंचन—महता कष्टेन कियच्छास्त्रमिति—शास्त्राध्ययनं प्राप्य, तथा तन्मध्ये कोऽपि वाचनाचार्यः पण्डित उपाध्याय आचार्यः इतिरूपं पदं—बिरुदं प्राप्य, एतत्सर्वं गुरोः प्रसादात् प्राप्येत्यर्थः, गर्वं भजतीति गर्वभाक्, कैः?—मुखरस्य भावो मौखर्यं तदादि यस्य तेन वशीकृता या ऋजुः—सरला जनता—जनसमूहस्तया दानं वस्त्रपात्रादीनां अर्चनं चंदनादिभिस्तैरिति ॥ २३१ ॥ ५० ॥

अथानंतरोक्तं विशेषतो निर्दिशति—

**प्राप्यापि चारित्रमिदं दुरापं, स्वदोषजैर्यद्विषयप्रमादैः ।**
**भवांबुधौ धिक् पतिताऽसि भिक्षो !, हतोऽसि दुःखैस्तदनंतकालम् ॥ २३२ ॥ ५१ ॥**

**धनवि०**—हे भिक्षो !—हे साधो—यद्—यस्मात्कारणाद्दुरापं—दुर्लभं चेदं पंचमहाव्रतादिरूपेण प्रत्यक्षं **चारित्रं**—संयममार्गं **प्राप्यापि**—लब्ध्वाऽपि **स्वदोषजैः**—स्वकीयरागद्वेषलक्षणदोषजन्यैर्विषयप्रमादैः प्रसिद्धैर्**भवांबुधौ**—संसारसागरे **पतिता**—पतनशीलोऽसि, **तत्**—तस्मादनंतकालं यावद्दुःखैः—चातुर्गतिकैः प्रतिकूलवेद्यैर्हतोऽसि; अतस्त्वां **धिग**स्त्विति ॥ २३२ ॥ ५१ ॥

अथानंतरोक्तामेव चारित्रस्य दुरापतां दृष्टांतप्रदर्शनेन द्रढयन्नुपदिशति—

**कथमपि समवाप्य बोधिरत्नं, युगसमिलादिनिदर्शनाद्दुरापम् ।**
**कुरु २ रिपुवश्यतामगच्छन्, किमपि हितं लभसे यतोऽर्थितं शम् ॥ २३३ ॥ ५२ ॥**

**धनवि०**—**कथमपि**—कथंचित्कष्टसहनजनिताकामनिर्जरादियोगाद्**युगसमिलादिदृष्टांतात्** सिद्धांतप्रसिद्धाद्**दुरापं**—दुर्लभं **बोधिरत्नं**—

---

**रत्न०**—अथ चारित्रस्य दुष्प्रापतया विषयप्रमादानां प्रकारान्तरेण त्यागमुपदिशन्नाह—**प्राप्यापीति०** व्याख्या—हे भिक्षो ! इदं दुरापं—दुष्प्राप्यं चारित्रं प्राप्यापि चेद्—यदि त्वं विषयैः प्रमादैश्च हेतुभिर्धिग्—निन्दितं यथा स्यात्तथा भवाम्बुधौ—संसारसमुद्रे पतिताऽसि तत्—तर्ह्यनन्तं कालं यावत्त्वं दुःखैर्हतोऽसि, विषयप्रमादैः क० ?—स्वस्य—आत्मनो दोषास्तेभ्यो जायंते इति स्वदोषजास्तैरिति ॥ २३२ ॥ ५१ ॥

**रत्न०**—अथ बोधिरत्नस्य दुष्प्रापतां वदन् यतिजनं हितार्थे प्रवर्त्तयन्नाह—**कथमपीति०** व्याख्या—हे यते ! त्वं कथमपि महता कष्टेन बोधि-

जिनधर्मप्राप्तिरूपं मणिविशेषं समवाप्य–प्राप्य रिपुवश्यतां–वैरिवशतामगच्छन्–अनाप्नुवन् किमपि हितं–किंचित्सुखसाधनं कुरु २–साधयेरिति; यतो हितसाधनादर्थितं–प्रार्थितं शं–सुखं मोक्षलक्षणं लभसे। अत्र बोधिकारणानि "अणुकंप १ ऽकामनिज्जर २ बालतवे ३ दाण ४ विणय ५ विब्भंगे ६। संजोगविप्पओगे ७ वसणू ८ सव ९ इड्ढि १० सक्कारे ११ ॥ विज्जे १ मिंठे २ तह इंदनाग ३ कयउन्न ४ पुप्फसालसुए ५। सिव ६ महुरवणियभाउय ७-८ आभीर ९ दसन्नि १० लापुत्ते ११ ॥" इति गाथाद्वयसूचितानि सद्यातान्यावश्यकवृत्त्यादिभ्यः समवसेयानि। युगसमिलादिदृष्टांताश्च–"चुल्लग १ पासग २ धन्ने ३ जूए ४ रयणे ५ य सुमिण ६ चक्के ७ य। धम्मा ८ जुगे ९ परमाणू १० दस दिट्ठंता मणुअलंभे ॥ १ ॥ पुव्वंते हुज्ज जुगं अवरंते तस्स हुज्ज समिला उ। जुगछिद्दम्मि पवेसो इय संसइओ मणुअलंभो ॥ २ ॥ जह समिला पब्भट्ठा सायरसलिले अणोरपारम्मि। पविसिज्ज जुगच्छिद्दं कहवि भमंता भमंतम्मि ॥ ३ ॥ सा चंडवायवीईपणुल्लिआ अवि लभिज्ज जुगछिद्दं। नय माणुसाउ भट्ठो जीवो पडिमाणुसं लहइ ॥ ४ ॥ [अनुकंपाऽकामनिर्जराबालतपोदानविनयविभंगाः। संयोगविप्रयोगव्यसनोत्सवर्द्धिसत्काराः ॥ १ ॥ वैद्यो मेठस्तथेन्द्रनागः कृतपुण्यः पुष्पशालसुतः। शिवो मथुरावणिग्भ्रातरौ आभीरा दशार्ण इलापुत्रः ॥ २ ॥ चोल्लकः पाशका धान्यानि द्यूतं रत्नानि स्वप्नश्चक्रं। चर्म (कूर्मः) युगं परमाणुः दश दृष्टान्ता मनुजत्वलाभे ॥१॥ पूर्वान्ते भवेद्युगं अपरान्ते भवेत्तस्य समिला तु। युगच्छिद्रे प्रवेश एवं संशयितो मनुजत्वलाभः ॥ २ ॥ यथा समिला प्रभ्रष्टा सागरसलिलेऽनर्वाक्पारे। प्रविशेत् युगच्छिद्रं कथमपि भ्राम्यन्ती भ्राम्यति ॥ ३ ॥ सा

रत्नं–सम्यक्त्वरत्नं समवाप्य किमपि तद्धितं कुरु, अत्यंतादरख्यापनार्थं वीप्साया द्विर्वचनं, किंलक्षणं ?–दुरापं–दुष्प्राप्यं, कैः ?–युगसमिलादिनिदर्शनानि "चुल्लगपासगधन्ने" इतिगाथोक्तानि तैः, किं कुर्वन् ?–अगच्छन्, का ?–रिपूणाम्–अन्तरङ्गाणां षण्णां कषायादीनां वश्यतां–पराधीनतां,

चण्डवातवीचिप्रणुन्ना अपि लभेत युगच्छिद्रं । नतु मनुजत्वात् भ्रष्टो जीवः प्रतिमानुष्यं लभते ॥ ४ ॥] इत्यादिगाथासूचिता आवश्यकोपोद्घातनिर्युक्तिवृत्त्यादिशास्त्रेभ्यः सविस्तरा ज्ञेया इति ॥ २३३ ॥ ५२ ॥

अनंतरं 'रिपुवश्यतामगच्छ'न्नित्युक्तमत एव तत्त्वतो रिपून् दर्शयन्नुपदिशति—

**द्विषस्त्विमे ते विषयप्रमादा, असंवृता मानसदेहवाचः ।**
**असंयमाः सप्तदशापि हास्यादयश्च बिभ्यच्चर नित्यमेभ्यः ॥ २३४ ॥ ५३ ॥**

**धनवि०**—**तुः** पुनरर्थे वाक्यालंकारार्थे वा **ते**—तव **इमे**ऽनुभवप्रत्यक्षा **विषयप्रमादाः**—विषयाश्च प्रमादाश्च २, तथा **असंवृताः**—संवररहिता **मानसदेहवाचो**—मनोवचनकायाः, **च** पुनः **सप्तदश**—सप्तदशभेदा **असंयमाः**—पृथिव्याद्यसंयमव्यापाराः **च** पुनः **हास्यादयो**—हास्यरत्यरतिशोकभयजुगुप्सारूपा **द्विषः**—अंतरंगारयस्संति; एभ्योऽनंतरेभ्यो द्विड्भ्यो **नित्यं**—सर्वकालं **बिभ्यद्**—भयं गच्छन् **चर**—संयममार्गे गच्छेत्यर्थः ॥ २३४ ॥ ५३ ॥

---

यतो हि तावत्त्वमर्थितं शं—सुखं वांछितं मोक्षसुखमित्यर्थः लभसे—प्राप्नोषि ॥ २३३ ॥ ५२ ॥

**रत्न०**—अथ द्विषां नामज्ञापनपूर्वमेतेभ्यो बिभ्यत्तिष्ठेत्युपदिशति—**द्विषस्त्विमे ते०** व्याख्या—हे यते ! ते—तवैते तुरिति विशेषज्ञापने विषयाः प्रमादाश्च विषयप्रमादाः प्रत्येकं पञ्च २ द्विषो—वैरिणः संति, च पुनर्मानसदेहवाचो—मनःकायवचनानि, किंल० ?—असंवृताः—चपलतया मुक्ता इत्यर्थः, संवृतास्तु धर्मसाधनं भवंतीत्यसंवृता इति विशेषणं सार्थकं, च पुनः सप्तदशाप्यसंयमाः—प्राणातिपात १ मृषावाद २ अदत्तादान-

प्रेत्यहित-
यत्नः

अनंतरं 'चरे'त्यादिना भयजनिकाऽसंयममार्गप्रवृत्तिरुपदिष्टा, अथ च शेषसकलसामग्रीसन्निधानजनितां संयमप्रवृत्तिमुपदिशति—

गुरूनवाप्याप्यपहाय गेहमधीत्य शास्त्राण्यपि तत्त्ववांचि ।
निर्वाहचिंतादिभराद्यभावेऽप्यृपे ! न किं प्रेत्यहिताय यत्नः ? ॥ २३५ ॥ ५४ ॥

धनवि०—हे ऋपे !–हे साधो गुरूनपि–शुद्धमार्गोपदेशकानप्यवाप्य–प्राप्य गेहमपि–सकलसंगमूलं गृहमप्यपहाय–त्यक्त्वा तत्त्ववांचि–तत्त्वप्रतिपादकानि शास्त्राण्यपि–आचारांगादीन्यधीत्य–पठित्वा निर्वाहचिंतादिभराद्यभावेऽपि प्रेत्यहिताय–परलोकसुखाय किं प्रश्ने यत्नः–उद्यमोऽर्थात्संयमे नास्ति ?, अत्र निर्वाहः–सुखाजीविका तस्याश्चिंता–चिंतनं सा आदौ–प्रथमं यासां पुत्रचिंतापुत्रीचिंता-

---

३ मैथुन ४ परिग्रहविरमण ५ श्रोत्र १ चक्षु २ घ्राण ३ रसन ४ स्पर्शनेंद्रियानिग्रह १० क्रोध ११ मान १२ माया १३ लोभाजय १४–मनोवचःकायदुष्प्रवर्त्तना १७ लक्षणाः, तथा हास्यादयो–हास्य १ रति २ अरति ३ शोक ४ भय ५ जुगुप्सा ६ लक्षणाः षट्, द्विषः संति, तेन त्वमेतेभ्यो रिपुभ्यो बिभ्यद्–भयं गच्छन् चर–विहर, बिभ्यन्ने(दे)व सर्वं कुर्विति ॥ २३४ ॥ ५३ ॥

रत्न०—अथ सर्वस्या सामग्र्या सत्यां हितं किं न करोपीत्युपदिशति–गुरूनवाप्येति० व्याख्या—हे ऋपे ! त्वं निर्वाहो– निर्वहणमुदरभरणादिकस्तस्य चिंता यत्र उदरभरणं कथं करिष्यामीत्यादिरूपा सैवादौ यस्य तन्निर्वाहचिंतादि तस्य भरः–समूहः स आदौ यस्य तन्निर्वाहचिंतादिभरादि तस्याभावे सत्यपि, उदरभरणवस्त्रपात्रपुस्तकादिचिंताराजभयचौरभयेहलोकभयाद्यभावे सतीत्यर्थः, प्रेत्य–परभवे हिताय यत्नः किं न क्रियते ?, अपितु कर्त्तुं युक्त इति, किं कृत्वा ?–अवाप्य, कान् ?–गुरून् प्रति, किं कृत्वा ?–अपहाय–त्यक्त्वा, किं ?–गेहम्, अपि पुनरर्थे,

कलत्रचिंतागृहचिंताराज्यचिंतादीनां ता निर्वाहचिंतादयस्तासां भरः–समूहः स आदौ येषां ते निर्वाहचिंतादिभरादयस्तेषामभावे–असत्त्वेऽपि, अत्रापिशब्दाद्गृहव्यापारराज्यव्यापारयानपात्रव्यापारभरादिपरिग्रहः ॥ २३५ ॥ ५४ ॥

अनंतरं 'प्रेत्यहिताय संयमे यत्नं कुर्वि'त्यर्थादुपदिष्टं, तेन संयमविराधनायाः फलं दर्शयन्नुपदिशति—

**विराधितैः संयमसर्वयोगैः, पतिष्यतस्ते भवदुःखराशौ ।**
**शास्त्राणि शिष्योपधिपुस्तकाद्या, भक्ताश्च लोकाः शरणाय नालम् ॥ २३६ ॥ ५५ ॥**

धनवि०—**संयमसर्वयोगैः**–संयमस्य सकलव्यापारैः समितिगुप्तिसत्यापनप्रभृतिभिर्**विराधितैः**–खंडितैर्**भवदुःखराशौ**–सांसारिकदुःखसमूहे **पतिष्यतः**–अधो गमिष्यतस्तव **शास्त्राणि**–आचारांगादीनि व्याकरणादीनि वा, पठितानीति गम्यं, **च** पुनः **शिष्योपधिपुस्तकाद्याः** प्रसिद्धाः च पुनर्**भक्ताः** श्रावकश्राविकाः **शरणाय**–भवदुःखराशौ पतिष्यतस्त्राणाय **नालं**–न समर्था भवंतीति ॥ २३५ ॥ ५५ ॥

---

पुनः किं कृत्वा?–अधीत्य–पठित्वाऽपीत्यर्थः, कानि?–शास्त्राणि, किं०?–तत्त्वप्ररूपिका वाचो येषु तानि तत्त्ववाञ्चि, आगमशास्त्राणीत्यर्थः, इयत्यां सामग्र्यां मिलितायां सत्यां यत्र हितं करोषि तदयुक्तं करोषीत्युपदेशः ॥ २३५ ॥ ५४ ॥

**रत्न०**—अथ संयमं गृहीत्वा संयमविराधनायै मा प्रवर्त्तस्वेत्युपदिशति०–**विराधितैरिति०** व्याख्या—हे यते! विराधितैः संयमस्य–चारित्रस्य सर्वयोगा–मूलगुणोत्तरगुणादिकास्तैर्हेतुभिस्ते–तव दुःखराशौ पतिष्यतः सतः शास्त्राणि आगमादीनि शिष्या उपधयो–वस्त्रपात्रादयः पुस्तकम्–अक्षरन्यासरूपं तान्याद्यानि येषां ते, आद्यशब्देन हिंगुलहरितालझलमलिपट्टिकापृष्ठकादीनां पुस्तकोपकरणानां संग्रहः, च पुनर्भक्ता लोकाः–श्रावकश्राविकादयः शरणाय–शरणं दातुं नालं–समर्थाः, किन्तु निःशरण एकाक्येव दुःखराशौ पतिष्यसीतिभावः ॥ २३६ ॥ ५५ ॥

अथ प्रमादेन संयमविराधनायामेतावती शुभफलहानिः स्यादित्युपदिशति—

यस्य क्षणोऽपि सुरधामसुखानि पल्यकोटीर्नृणां द्विनवतिं ह्यधिकां ददाति ।
किं हारयस्यधम! संयमजीवितं तद्?, हा हा प्रमत्त! पुनरस्य कुतस्तवाप्तिः? ॥ २३७ ॥ ५६ ॥

धनवि०—नृणां—मनुष्याणां यस्य संयमजीवितस्य क्षणोऽपि—मुहूर्त्तोऽपि सुरधामसुखानि—देवलोकसुखान्यधिकां—समधिकां द्विनवतिं—द्विनवतिसंख्याः पल्यकोटीः—पल्योपमकोटीर्यावद्ददाति—प्रयच्छति, एतदुक्तार्थसंवादश्चायं—"सामाइयं कुणंतो समभावं सावओ घडियदुगं । आउं सुरेसु बंधइ इत्तियमित्ताइं पलिआइं ॥ १ ॥ बाणवई कोडीओ लक्खा गुणसट्ठि सहस पणवीसं । नवसय पणवीसाए सतिहा अडभागपलिअस्स" ॥ २ ॥ अंकतोऽपि ९२५९२५९२५।$\frac{3}{8}$, इति प्रतिक्रमणसूत्रवृत्तौ ॥ हे अधम!—हे नीच तत्संयमजीवितं कथं—कस्माद्धेतोः हारयसि?—अज्ञानतो मुधा त्यजसि; हा हा इति खेदे हे प्रमत्त!—हे प्रमादिन् पुनः—द्वितीयवारमस्य संयमजीवितस्याप्तिः—लाभः कुतो हेतोः?, भविष्यसीति शेषः ॥ २३७ ॥ ५६ ॥

---

रत्न०—अथ मुहूर्त्तमात्रं संयमजीवितस्य फलं वदन् प्रमादं मा कार्षीरित्युपदिशन्नाह—यस्य क्षणोऽपीति० व्याख्या—हे यते! यस्य संयमजीवितस्य क्षणोऽपि—मुहूर्त्तोऽपि घटिकाद्वयमपि सुरधाम्नः—स्वर्गस्य सुखानि ददाति, कथं?—यावत्काः कर्मतापन्नाः भामेत्युक्ते सत्यभामेत्यादिवत् पल्यानां—पल्योपमानां कोटीः प्रति, कियतीः?—द्विनवतिं—द्वाभ्यामधिका नवतिर्द्विनवतिस्ता, किंलक्षणाम्?—अधिका लक्षादिभिरंकैरित्यर्थः,

क्षणधर्म-फले

अथैतद्द्वारमुपसंजिहीर्षुर्मंगलार्थं संयमाराधनायां शुभफलं दर्शयन्नुपदिशति—

**नाम्नाऽपि यस्येति जनेऽसि पूज्यः, शुद्धात्ततो नेष्टसुखानि कानि ? ।**
**तत्संयमेऽस्मिन् यतसे मुमुक्षोऽनुभूयमानोरुफलेऽपि किं न ? ॥ २३८ ॥ ५७ ॥**

**धनवि०—यस्य संयमस्य नाम्नाऽपि**—संयमवानित्यभिधानेनापि **जने**—लोक इति—अमुना प्रकारेण वस्त्रपात्रादिभिः **पूज्यः**—अर्चनीयोऽसि, **ततः शुद्धाद्भावसंयमादिष्टसुखानि कानि न भवंति ?**, अपि तु सर्वाण्यभिलपितसुखानि स्वर्गापवर्गराज्यादीनि भवंतीत्यर्थः; **तत्**—

---

यदुक्तमागमे—"वाणवई कोडीओ लक्खा गुणसट्ठि सहस्सपणवीसं । नवसय पणवीसाए सतिहा अडभागपलियस्से ॥ १ ॥"ति, हे अधम ! तत्संयमजीवितं त्वं किं हारयसि ?, अपि तु मा हारय, हाहेति खेदे, हे प्रमत्त !—हे प्रमादिन् पुनरस्य संयमजीवितस्य कुतस्तवाप्तिः—लाभो वर्त्तते ?, अपितु नास्तीति, दुष्प्रापा चेति ॥ २३७ ॥ ५६ ॥

**रत्न०**—अथ यस्य नाम्नाऽपि पूजां प्राप्नुवन्नसि तस्मिन् परिणामसुंदरेऽपि कि संयमे नोद्यमं कुरुषे ? इत्युपदिशन्नाह—**नाम्नाऽपि यस्येति०** व्याख्या—हे मुमुक्षो !—हे यते यस्य संयमस्य नाम्नाऽपि जने—लोके इति—अमुना प्रकारेण प्रत्यक्षतो दृश्यमानेन पूज्योऽसि तर्हि—ततः शुद्धात्संयमादिष्टानि—वांछितानि च तानि सुखानि चेष्टसुखानि कानि न भवंति ?, अपितु सर्वाण्यपि भवंति, तत्—तस्मात्कारणादस्मिन्संयमे किं न यतसे ?—यत्नं न करोषि, अपि तु यत्नः कर्त्तुं युक्त इति, येन किल० ?—अनुभूयमानमुरु—महत्फलं यस्य स तस्मिन्, किमपि यस्य फलं साक्षा-

तस्माद्धि मुमुक्षो–हे मुनेऽनुभूयमानोरुफलेऽपि–प्रत्यक्षोपलभ्यमानमहाफलेऽप्यस्मिन् प्रसिद्धे संयमे–चारित्रे किं न यतसे?–कथं नोद्यमं कुरुषे ॥ २३८ ॥ ५७ ॥

उरुफलः संयमः

इति श्रीतपा० महोपाध्यायश्रीकल्याणविजयगणिशिष्योपाध्यायश्रीधनविजयगणि-
विरचितायां यतिशिक्षानाम्नी त्रयोदशी पदपद्धतिः ॥ १३ ॥

## १४ मिथ्यात्वादिसंवरोपदेशाधिकारः ।

अथानन्तरद्वारे केवलसर्वविरतिधारियतियोग्यमुपदेशमुपदिश्य सामान्यतः सर्वविरतिधारिदेशविरतिधारिणोर्योग्यमुपदेशमुपदेष्टुं मिथ्यात्वादिसंवरोपदेशद्वारं दर्शयन्नाह—

दनुभूयमानं महच्च भवति तस्मिन् शर्करादाविव यत्नः कर्तुं युक्त एवेति, मोक्षमिच्छो मुमुक्षो! इतिसंबोधनं साभिप्रायमिति ॥ २३८ ॥ ५७ ॥

इति त्रयोदशोऽधिकारः ॥

श्रीशान्तिचंद्रवरवाचकदुग्धसिंधुलब्धप्रतिष्टवरवाचकरत्नचंद्रः । अध्यात्मकल्पफलदस्य चकार वृत्तिं, तत्र त्रयोदश इति प्रथितोऽधिकारः ॥१३॥

अथ सामान्यतो यतीन् विशेषतो धर्मसद्गृहिणश्चाश्रित्य मिथ्यात्वादिसंवरोपदेशाख्यश्चतुर्दशोऽधिकारो विवरीतुं प्रक्रम्यते—तत्र प्रथमं बंधहेतुसंवरमाह—

**अथ सामान्यतो यतीन् विशेष(तो)धर्मस्थगृहिणश्चाश्रित्य मिथ्यात्वादिसंवरोपदेशः ।**

धनवि०—अथेत्यानंतर्ये सामान्यतः—साधारण्येन यतीन्—संयमिनः च पुनर्विशेषधर्मस्थगृहिणः—सम्यक्त्वमूलद्वादशव्रतधारिश्रावकानाश्रित्य—उद्दिश्य मिथ्यात्वादिसंवरोपदेशो—मिथ्यात्वाविरतिकषाययोगनिरोधोपदेशः, प्रदर्श्यते इति शेषः । अथास्मिन् द्वारे पूर्वोद्दिष्टत्वेन पूर्वं मिथ्यात्वादिसंवरमुपदिशन्नाह—

**मिथ्यात्वयोगाविरतिप्रमादानात्मन्! सदा संवृणु सौख्यमिच्छन् ।**
**असंवृता यद्भवतापमेते, सुसंवृता मुक्तिरमां च दद्युः ॥ २३९ ॥ १ ॥**

धन०—हे आत्मन्! त्वं सौख्यमिच्छन्—सुखमभिलषन् मिथ्यात्वयोगाविरतिप्रमादान् सदा—सर्वकालं संवृणु—संकोचविषयीकुर्वित्यन्वयः, तत्र मिथ्यात्वं च "दुविहं लोइयमिच्छं देवगयं गुरुगयं मुणेयव्वं । लोउत्तरं च दुविहं देवगयं गुरुगयं चेव" ॥१॥ 'चउभेयं मिच्छत्त'मित्यादि ॥ अथवा मिथ्यात्वं पंचविधं, यदाह—अभिगहियमणभिगहियं च तह अभिनिवेसियं चेव। संसइयमणाभोगं मिच्छत्तं पंचहा होई ॥ १ ॥ अत्राभिग्रहिकं पाखंडिनां स्वस्वशास्त्रनियंत्रितविवेकालोकानां परपक्षप्रतिक्षेपदक्षाणां १, अनाभिग्रहिकं च प्राकृतजनानां सर्वे देवा वंद्याः, न निंद्याः, एवं सर्वे गुरवः सर्वे धर्माश्चाराध्या इति २, आभिनिवेशिकं च यथास्थितं वस्तु जानतोऽपि दुरभिनिवे-

रत्न०—मिथ्यात्वयोगाविरतीति० व्याख्या—हे आत्मन्! मिथ्यात्वयोगाविरतिप्रमादान् चतुरोऽपि बंधहेतून् त्वं सदा संवृणु, किं कुर्वन्?—

१ द्विविधं लौकिकं मिथ्यात्वं देवगतं गुरुगतं ज्ञातव्यम् । लोकोत्तरं च द्विविधं देवगतं गुरुगतं चैव ॥ १ ॥ चतुर्भेदं मिथ्यात्वम् ॥ २ आभिग्रहिकमनाभिग्रहिकं च तथाऽऽभिनिवेशिकं चैव । सांशयिकमनाभोगं मिथ्यात्वं पञ्चधा भवति ॥

दशूवित्तधियो गोष्ठामाहिलादेरिवेति ३, सांशयिकं च देवगुरुधर्मेष्वयमयं वेति संशयानस्येति ४, अनाभोगिकं च विचारशून्यस्यैकेंद्रियादेर्विशेषज्ञानविकलस्येति ५; अविरतिश्च—विरतिराहित्यं; योगाश्च—अशुभमनोवाक्कायव्यापाराः; प्रमादाश्च—विषयकषायादयः; ततो द्वंद्वः। यद्—यस्मात्कारणादसंवृता—अनिरुद्धा एते मिथ्यात्वादयो भवतापं—संसारस्य परितापं दद्युः—प्रयच्छंति स्म; च पुनः सुसंवृता—निरुद्धा एते मिथ्यात्वादयो मुक्तिरमां—मोक्षलक्ष्मीं दद्युः—प्रयच्छंति स्म ॥ २३९ ॥ १ ॥

यतिश्रावकयोः प्रायो मिथ्यात्वासंभवेन मिथ्यात्वमुपेक्ष्य योगनिरोधमुपदिशन् पूर्वं मनोयोगनिरोधमुपदिशति—

**मनः संवृणु हे विद्वन्नसंवृतमना यतः। याति तंदुलमत्स्यो द्राक्, सप्तमीं नरकावनीम् ॥ २४० ॥ २ ॥**

धनवि०—हे विद्वन्!—हे धीमन् त्वं मनो—मानसं संवृणु—दुष्टविषयेभ्यो निवर्तय; यतः कारणादसंवृतमना—अनिरुद्धचित्तस्तंदुलमत्स्यः—तंदुलनाम्ना प्रसिद्धो मत्स्यो—मीनो द्राक्—शीघ्रं सप्तमीं नरकावनीं—महातमःप्रभानाम्नीं सप्तमनरकपृथ्वीं याति—गच्छति।

---

इत्यर्थः, भि०—सौख्यं, यद्—यस्मात्कारणादेते चत्वारोऽप्यसंवृताः संतो भवस्य—संसारस्य तापं—कष्टं दद्युः—ददति स्म, च पुनरेते सुसंवृताः सतो मुक्तिरमा—मोक्षलक्ष्मीं दद्युरिति ॥ २३९ ॥ १ ॥

रत्न०—अथ सर्वत्र मनसः प्राधान्यात् मनःसंवरमाह—मनः संवृण्विति० व्याख्या—हे विद्वन्!—हे पण्डित त्वं मनः प्रति संवृणु, यतः कारणादसंवृतं मनो येन सः असंवृतमनाः तंदुलप्रमाणो मत्स्यस्तंदुलमत्स्यो द्राक्—शीघ्रं सप्तमीं नरकावनीं—नरकपृथिवीं याति, तत्र मन एव मूलं निमित्तं, सप्तमपृथिव्यागतो महामत्स्याक्षिस्थितमत्सीगर्भजोऽन्तर्मुहूर्त्तायुष्को महामत्स्यप्रसारितास्यान्निर्गच्छतो बहून् मत्स्यान् दृष्ट्वा यद्येतादृश-

अथ सामान्यतो यतीन् विशेष(तो)धर्मस्थगृहिणश्चाश्रित्य मिथ्यात्वादिसंवरोपदेशः ।

धनवि०—अथेत्यानंतर्ये सामान्यतः—साधारण्येन यतीन्—संयमिनः च पुनर्विशेषधर्मस्थगृहिणः—सम्यक्त्वमूलद्वादशव्रतधारिश्रावकानाश्रित्य—उद्दिश्य मिथ्यात्वादिसंवरोपदेशो—मिथ्यात्वाविरतिकषाययोगनिरोधोपदेशः, प्रदर्श्यते इति शेषः ।

अथास्मिन् द्वारे पूर्वोद्दिष्टत्वेन पूर्वं मिथ्यात्वादिसंवरमुपदिशन्नाह—

मिथ्यात्वयोगाविरतिप्रमादानात्मन्! सदा संवृणु सौख्यमिच्छन् ।
असंवृता यद्भवतापमेते, सुसंवृता मुक्तिरमां च दद्युः ॥ २३९ ॥ १ ॥

धन०—हे आत्मन्! त्वं सौख्यमिच्छन्—सुखमभिलषन् मिथ्यात्वयोगाविरतिप्रमादान् सदा—सर्वकालं संवृणु—संकोचविषयीकुर्वित्यन्वयः, तत्र मिथ्यात्वं च "दुविहं लोइयमिच्छं देवगयं गुरुगयं मुणेयवं । लोउत्तरं च दुविहं देवगयं गुरुगयं चेव" ॥१॥ 'चउभेयं मिच्छंत्त'[1]मित्यादि ॥ अथवा मिथ्यात्वं पंचविधं, यदाह—अभिगहियमणभिगहियं च तह अभिनिवेसियं चेव । संसइयमणाभोगं मिच्छत्तं पंचहा होई ॥ १ ॥ अत्राभिग्रहिकं पाखंडिनां स्वस्वशास्त्रनियंत्रितविवेकालोकानां परपक्षप्रतिक्षेपदक्षाणां १, अनाभिग्रहिकं च प्राकृतजनानां सर्वे देवा वंद्याः, न निंद्याः, एवं सर्वे गुरवः सर्वे धर्माश्चाराध्या इति २, आभिनिवेशिकं च यथास्थितं वस्तु जानतोऽपि दुरभिनिवे-

रत्न०—मिथ्यात्वयोगाविरतीति० व्याख्या—हे आत्मन्! मिथ्यात्वयोगाविरतिप्रमादान् चतुरोऽपि बंधहेतून् त्वं सदा संवृणु, किं कुर्वन्?—

१ द्विविधं लौकिकं मिथ्यात्वं देवगतं गुरुगतं ज्ञातव्यम् । लोकोत्तरं च द्विविधं देवगतं गुरुगतं चैव ॥ १ ॥ चतुर्भेदं मिथ्यात्वम् ॥ २ आभिग्रहिकमनाभिग्रहिकं च तथाऽऽभिनिवेशिकं चैव । सांशयिकमनाभोगं मिथ्यात्वं पञ्चधा भवति ॥

ध्यायन् धर्मतत्त्ववित् ॥ राजगृहश्मशाने स, कायोत्सर्गेण तस्थिवान् ॥ ४ ॥ तदा तमोरिपुर्वीरस्तत्रापि समवासरत् । वंदारुर्निर्ययौ लोकः, कोकवत्प्रीतमानसः ॥ ४ ॥ क्षितिप्रतिष्ठिवात्तत्रायातौ द्वौ च वणिग्वरौ । प्रसन्नचंद्रराजर्षिं, दृष्ट्वा मार्गसमीपगम् ॥६॥ एकोऽभाषिष्ट मुदः सन्, धन्यात्मा प्रभुरेप नः । राज्यलक्ष्मीं परित्यज्य, स्वीचकार तपःश्रियम् ॥७॥ द्वितीयः स्माह धन्यत्वं, कुतोऽमुष्य महामुनेः ? । योऽसंजातबलं पुत्रं, कृत्वा राज्येऽग्रहीद्व्रतम् ॥ ८ ॥ वराकः सोऽधुना डिंभो, दायादैः परिभूयते । उपद्रुतं पुरं लोको, दुःखे बहुरपालयत ॥ ९ ॥ तद्द्रष्टव्य एवायमित्याकर्ण्याकुपन्मुनिः । दध्यौ पुत्रं मयि सति, दुर्धीरपकरोति कः? ॥१०॥ महासंग्राममारूढं, श्रेणिकः क्ष्माभृदीयिवान् । स दृष्ट्वा तमवंदिष्ट, कायोत्सर्गधरं मुनिम् ॥ ११ ॥ तं नेपदपि दृष्ट्वाऽपि, स पुनः समभावयत् । श्रेणिकोऽचिंतयन्नूनं, शुक्लध्याने स्थितोऽस्त्ययमौ ॥ १२ ॥ ततः श्रीश्रेणिको वीरं, नत्वाऽप्राक्षीज्जगत्प्रभो! । प्रसन्नचंद्रराजर्षिर्यादृग्ध्यानो मया नतः ॥ १३ ॥ तत्र कालं स चेत्कुर्यात्तस्य जायेत का गतिः ? । बभाषे भगवान् वीरः, सप्तम्यामवनौ गतिः ॥ १४ ॥ तच्छ्रुत्वा श्रेणिको दध्यौ, हा किमेतन्मया श्रुतम् ? । अत्रान्तरेऽस्य राजर्षेः, समामारूढचेतसः ॥ १५ ॥ प्रधानरिपुणैकेन, युद्ध्यमानस्य निर्भयम् । निष्ठां गतानि शस्त्राणि, शिरस्त्राणे करं न्यधात् ॥ १६ ॥ एतेनैतं हनिष्यामि, हताः सर्वे परेऽरयः । यावत्पस्पर्श मौलिं स, तावदग्रेऽस्ति लुंचितम् ॥ १७ ॥ ततः संवेगमापन्नो, राजर्षिर्द्ध्यिवानिदम् । आः किं चक्रे मया धिग् धिग्, विराद्धं प्रथमं व्रतम् ॥ १८ ॥ शुद्ध्यमानाशयो भूपः, स्वं निंदत्यतिचारिणम् । मनोपखानि कर्माणि, मनसैव क्षिपंस्तदा ॥ १९ ॥ श्रेणिकः पुनरप्राक्षीत्, स राजर्षिः प्रभोऽधुना । यादृग्ध्यानोऽस्ति तत्रैव, मृतो गच्छति कां गतिम् ? ॥ २० ॥ स्वाम्यूचे संप्रति मृतोऽनुत्तरेषु सुरो भवेत् । अथोचे श्रेणिकः स्वामिन्!, पूर्वमन्यत् प्र(न्य)रूपि किम्! ॥ २१ ॥ किं माऽन्यथा मयाऽश्रावि ?, स्वाम्याह न मयाऽन्यथा । ऊचे त्वयाऽन्यत्राश्रावि, श्रेणिकः स्माह तत्कथम् ? ॥ २२ ॥ स्वाम्यथो-

अत्र तंदुलमत्स्यस्वरूपं चेदं; तंदुलमत्स्यः पुनर्यो महामत्स्यस्य चक्षुःपक्ष्मणि तंदुलप्रमाणोऽन्तर्मुहूर्त्तायुरुपजायते, तथाविधदारुणपरिणामेन चांतर्मुहूर्तेन तादृगायुर्बद्ध्वा सप्तमं नरकं गच्छतीत्युपदेशरत्नाकरे द्वितीयतटे तृतीयांशे नवमगाथायां; पुनरुपदेशरत्नाकरे एव यथा तंदुलमत्स्यः प्रसुप्तमहामत्स्यविकस्वरवदने जलोर्मिवशात्प्रविशतो निर्यतश्च बहून् मत्स्यान् वीक्ष्य तद्ग्रासाध्यावसायभृदिति मध्याधिकारे पंचमतरंगे इति ॥ २४० ॥ २ ॥

पुनर्मनोयोगसंवरं दृष्टांतपूर्वकमुपदिशति—

**प्रसन्नचंद्रराजर्षेर्मनःप्रसरसंवरौ। नरकस्य शिवस्यापि, हेतुभूतौ क्षणादपि ॥ २४१ ॥ ३ ॥**

**धनवि०—प्रसन्नचंद्रराजर्षेः**—श्रीसोमचंद्रनृपसूनोर्मनःप्रसरसंवरौ—चित्तप्रवृत्तिनिवृत्ती **नरकस्य**—निरयस्यापि—पुनः **शिवस्य**—मोक्षस्य **क्षणादपि**—स्तोककालादपि **हेतुभूतौ**—हेतू एव हेतुभूतौ भवतः—स्यातां। प्रसन्नचंद्रराजर्षिचरितं चेदं—“क्षितिप्रतिष्ठितपुरं, जगच्चित्तप्रतिष्ठितम्। प्रसन्नचंद्रस्तत्रासीत्, पृथिवीपाकशासनः ॥ १ ॥ श्रीवीरः समवासार्षीत्तत्र नंतुमगान्नृपः। श्रुत्वा धर्मं प्रबुद्धः सन्, सुतं राज्ये न्यवेशयत् ॥ २ ॥ प्रव्रज्यादाय शिक्षे द्वे, स गीतार्थोऽभवन्मुनिः। अन्यदा जिनकल्पं स, प्रतिपित्सुर्महामुनिः ॥ ३ ॥ सप्तभिर्भावनाभिस्तं,

---

महाकायोऽहमभवं तदैतान् सर्वान् एकहेलमेवौष्ठपुटमीलनेन कवलीकरोमीति दुर्ध्यानपरो मृत्वा पुनरंतर्मुहूर्त्तांतरेण सप्तमीं नरकपृथिवीं यातीत्यागमः, एवं कायवचोभ्यामशक्तो मनोव्यापारत एव दुर्गतिं यातीति ॥ २४० ॥ २ ॥

**रत्न०**—पुनस्तत्र दृष्टांतगर्भं श्लोकमाह—**प्रसन्नचंद्रराजर्षेरिति०** व्याख्या—हे देहिन्! प्रसन्नचंद्रराजर्षेर्मनसः प्रसरो—दुर्ध्यानतया व्याप्ति-

ध्यायिनो—ध्यानकर्तॄन् वयं स्तुमः—स्तुतिगोचरान् कुर्म इति, अत्र धर्मेणोपेतं धर्म्यं, ध्यानस्वरूपं च "जं थिरमज्झवसाणं तं झाणं ज च॰ तयं चित्तं । तं हुज्ज भावणा वा अणुपेहा वा अहव चिंता ॥ १ ॥ अंतोमुहुत्तमित्तं चित्तावत्थाणमेगवत्थुम्मि । छउमत्थाणं झाणं जोगनिरोहो जिणाणं तु ॥२॥ अंतोमुहुत्तपरओ चिंता झाणंतरं च हुज्जाहि । सुचिरंपि हुज्ज बहुवत्थुसंकमे झाणसंताणो ॥ ३ ॥ अट्टं १ रुद्दं २ धम्मं ३ सुक्कं ४ झाणाइं तत्थ अंताइं । निव्वाणसाहणाइं भवकारणमट्टरुद्दाइं ॥ ५ ॥ इत्यादिगाथास्वरूपं सप्रपंचं श्रीआवश्यकवृत्तिगतध्यानशतकवृत्तितोऽवसेयं, विस्तरभयान्नेह प्रतन्यते इति ॥ २४२ ॥ ४ ॥

अथ मनःस्थैर्याधिकारागतं धर्मध्यानस्वरूपं निरूपयन् धर्मध्यायिनः स्तौति—

**सार्थं निरर्थकं वा यन्मनः सुध्यानयंत्रितम् । विरतं दुर्विकल्पेभ्यः, पारगांस्तान् स्तुवे यतीन् ॥ २४३ ॥ ५ ॥**

धनवि॰—यन्मनो—येषां चित्तं सार्थं—सफलं वा—अथवा निरर्थकं—निष्फलं सुध्यानयंत्रितं—शुभकार्यकरणमनोरथेन नियंत्रितं—संकलितं सत्, सद्ध्यानपाठे तूत्तमं ध्यानं पूर्ववदेव, दुर्विकल्पेभ्यः—अशुभकार्यकरणमनोरथेभ्यो विरतं—निवृत्तं भवति, अत्र सार्थकता

---

ध्यानम्—आर्त्तरौद्रधर्मशुक्लरूपं नास्ति, आदिशब्देन द्वींद्रियत्रींद्रियचतुरिंद्रियासंज्ञिपंचेंद्रियादिग्रहणं, तेन कारणेन, तुरिति विशेषे तन्मनः प्रति प्राप्य, धर्मं॰तुल्यात्मं शुक्लपुद्गलोपमानत्वाच्छुक्लं धर्मं च शुक्लं च धर्मशुक्ले ताभ्यां हेतुभ्यां मनसः स्थैर्यं—मनोनिरोधलक्षणं भजंतीति धर्मशुक्लमनःस्थैर्यभाजस्तान् प्रति वयं स्तुमः—स्तुतिविषयीकुर्मः, किंलक्षणान् ?—ध्यायंतीति ध्यायिनस्तान् ध्यायिनो, ध्यानवत इत्यर्थः ॥ २४२ ॥ ४ ॥

रत्न॰—सार्थमिति॰ व्याख्या—यन्मनः सहार्थेन वर्त्तते तत्सार्थं, तथा निर्गतोऽर्थः—प्रयोजनं यस्मात्तन्निरर्थकं, प्रवृत्तिमदित्यध्याहार्य-

वाच तद्वृत्तं, सर्वं श्रेणिकभूभुजे । प्रसन्नचंद्रराजर्षेः, पार्श्वेऽभूद्दुंदुभेर्ध्वनिः ॥ २३ ॥ देवैः कलकलश्चक्रे, राजोचे किं महः? प्रभो ! । स्वाम्याह तस्य राजर्षेः, शुद्ध्यमानात्मनोऽधुना ॥ २४ ॥ कुर्वंति केवलोत्पत्तौ, महिमानं सुरासुराः । दृष्टांतोऽभूत्तदेकोऽयमुत्सर्गे द्रव्य-भावयोः ॥ २५ ॥ इति **श्रीऋषिमंडलवृत्त्यनुसारेण** लिखितं ॥ २४१ ॥ ३ ॥

अथ पवनसाधनाधिकारिकृतमनोरोधस्याकिंचित्करत्वं धर्मध्यानाधिकारिकृतमनोरोधस्य च साधकत्वं दर्शयन्नुपदिशति—

**मनोऽप्रवृत्तिमात्रेण, ध्यानं नैकेंद्रियादिषु । धर्म्यशुक्लमनःस्थैर्यभाजस्तु ध्यायिनः स्तुमः ॥ २४२ ॥ ४ ॥**

**धन०—मनोऽप्रवृत्तिमात्रेण**—चेतसः प्रवृत्त्यभावमात्रेण संज्ञिपंचेंद्रियातिरिक्तेषु प्राणिषु मनसोऽभावान्मनःप्रवृत्त्यभावादे**केंद्रियादिषु**—पृथिवीकायिकाप्कायिकतेजःकायिकवायुकायिकवनस्पतिकायिकेषु, आदिपदाद् द्वींद्रियत्रींद्रियचतुरिंद्रियेषु मनोऽप्रवृत्तिरूपं **ध्यानं**—योगांगं न भवति, किंच—प्रत्युत पवनसाधनेन मनोरोधस्य धर्मध्यानशुक्लध्यानान्तरायकारित्वादकिंचित्करत्वम्, अत एव **श्रीहेमसूरिकृतश्रीयोगशास्त्रे** पंचमप्रकाशे "न च प्राणायामो मुक्तिसाधने ध्याने उपयोग्यसौमनस्यकारित्वाद्, यदाहुः—ऊसासं न निरुंभइ आभिग्गहिओवि किमुय चेट्ठाए ? । सज्जमरणं निरोहे सुहुमोसासं तु जयणाए ॥१॥ [उच्छ्वासं न निरुणद्धि आभिग्रहीकोऽपि किमुत चेष्टायां ? । सद्योमरणं नीरोधे सूक्ष्मोच्छ्वासं तु यतनया ॥ १ ॥] इत्यादि, **तु** पुन**र्धर्म्यशुक्लमनःस्थैर्यभाजो**—धर्म्यशुक्लध्यानाभ्यां मनःस्थैर्यं भजति तथा तान्

स्तथा संवरो—दुर्ध्यानप्रसरनिवारणलक्षणस्तौ क्षणादपि—क्षणमात्रतोऽपि यथाक्रमं नरकस्य शिवस्य—मोक्षस्यापि हेतुभूतौ जाताविति, तत्र दृष्टांतविस्तरः **श्रीहेमसूरिकृतपरिशिष्टपर्वतो**ऽवसेय इति ॥ २४१ ॥ ३ ॥

**रत्न०—मनोऽप्रवृत्तिमात्रेणेति०** व्याख्या—मनसोऽप्रवृत्तिः—अप्रवर्त्तनं केवलमप्रवृत्तिरप्रवृत्तिमात्रं तेन मनोऽप्रवृत्तिमात्रेणैकेंद्रियादिषु

ध्यायिनो—ध्यानकर्तॄन् वयं स्तुमः—स्तुतिगोचरान् कुर्म इति, अत्र धर्मेणोपेतं धर्म्यं, ध्यानस्वरूपं च "जं थिरमज्झवसाणं तं झाणं जं चलं तयं चित्तं । तं हुज्ज भावणा वा अणुपेहा वा अहव चिंता ॥ १ ॥ अंतोमुहुत्तमित्तं चित्तावत्थाणमेगवत्थुम्मि । छउमत्थाणं झाणं जोगनिरोहो जिणाणं तु ॥२॥ अंतोमुहुत्तपरओ चिंता झाणंतरं च हुज्जाहि । सुचिरंपि हुज्ज बहुवत्थुसंकमे झाणसंताणो ॥ ३ ॥ अट्टं १ रुद्दं २ धम्मं ३ सुक्कं ४ झाणाइं तत्थ अंताइं । निव्वाणसाहणाइं भवकारणमट्टरुद्दाइं ॥ ५ ॥ इत्यादिगाथास्वरूपं सप्रपंचं श्रीआवश्यकवृत्तिगतध्यानशतकवृत्तितोऽवसेयं, विस्तरभयान्नेह प्रतन्यते इति ॥ २४२ ॥ ४ ॥

अथ मनःस्थैर्याधिकारागतं धर्मध्यानस्वरूपं निरूपयन् धर्मध्यायिनः स्तौति—

**सार्थं निरर्थकं वा यन्मनः सुध्यानयंत्रितम् । विरतं दुर्विकल्पेभ्यः, पारगांस्तान् स्तुवे यतीन् ॥ २४३ ॥ ५ ॥**

धनवि०—यन्मनो—येषां चित्तं सार्थं—सफलं वा—अथवा निरर्थकं—निष्फलं सुध्यानयंत्रितं—शुभकार्यकरणमनोरथेन नियंत्रितं—संकलितं सत्, सद्ध्यानपाठे तूत्तमं ध्यानं पूर्ववदेव, दुर्विकल्पेभ्यः—अशुभकार्यकरणमनोरथेभ्यो विरतं—निवृत्तं भवति, अत्र सार्थकता

---

ध्यानम्—आर्तरौद्रधर्मशुक्लरूपं नास्ति, आदिशब्देन द्वींद्रियत्रींद्रियचतुरिंद्रियासंज्ञिपंचेंद्रियादिग्रहणं, तेन कारणेन, तुरिति विशेषे तन्मनः प्रति प्राप्य, धर्महेतुत्वाद्धर्मं शुक्लशुद्धत्वोपगानत्वाच्छुक्लं धर्मं च शुक्लं च धर्मशुक्ले ताभ्यां हेतुभ्यां मनसः स्थैर्यं—मनोनिरोधलक्षणं भजंतीति धर्मशुक्लमनःस्थैर्यभाजस्तान् प्रति वयं स्तुमः—स्तुतिविषयीकुर्मः, किंलक्षणान्?—ध्यायंतीति ध्यायिनस्तान् ध्यायिनो, ध्यानवत इत्यर्थः ॥ २४२ ॥ ४ ॥

रत्न०—सार्थमिति० व्याख्या—यन्मनः सहार्थेन वर्त्तते तत्सार्थं, तथा निर्गतोऽर्थः—प्रयोजनं यस्मात्तन्निरर्थकं, प्रवृत्तिमदित्यध्याहार्य-

निरर्थकता च शुभकार्यकरणमनोरथे समुत्पन्ने कार्यसिद्धौ सफलता तत्कार्यासिद्धौ च निष्फलता, उभयत्रापि शुभकर्मानुबंधिता, यदुक्तं—"भवंति भूरिभिर्भाग्यैर्धर्मकर्ममनोरथाः । फलंति यत्पुनस्ते तु, तत्सुवर्णस्य सौरभम् ॥ १ ॥" इति ॥ तान्—अनंतरोक्तान्वयोपदर्शितान् पारगान्—संसारपारगामिनो यतीन्—मुनीन् स्तुवे—स्तुतिगोचरान् कुर्वे इत्यर्थः ॥ २४३ ॥ ५ ॥

अथ द्वितीयस्य वाग्योगस्य संवरमुपदिशति—

**वचोऽप्रवृत्तिमात्रेण, मौनं के के न बिभ्रते ? । निरवद्यं वचो येषां, वचोगुप्तांस्तु तान् स्तुवे ॥ २४४ ॥ ६ ॥**

**धनवि०—वचोऽप्रवृत्तिमात्रेण**—वचनप्रवृत्त्यभावमात्रेण—वाक्प्रयत्नासामर्थ्येनेत्यर्थो **मौनं**—वाग्व्यापारराहित्यं **के के** एकेंद्रियादयो

---

मन्यथाऽर्थसंगतिर्न स्यात्, मनसः प्रवृत्तिर्द्विधा—सार्थका निरर्थका च, किंचिदात्मनः स्वजनस्य वा हेतोर्मनसः प्रवृत्तिः सार्थका, तथा वर्त्मनि गच्छन् कश्चिच्चिंतयेद्—ईदृक् क्षेत्रं हलीकृत्योप्तं भवति तदा भूयसी शस्यनिष्पत्तिर्जायते, हा धिक्कश्चिन्नायको नास्ति यत ईदृशी भूः शून्या पतिताऽस्तीत्यादिविषया प्रवृत्तिर्निरर्थका, सर्वथा प्रयोजनाभावादिति, तन्मनः सुध्यानेन—धर्मशुक्ललक्षणेन यंत्रितं—रुद्धं सदत एव येषां दुर्विकल्पेभ्यो विरतं वर्त्तते तान् यतीन् प्रति स्तुवेऽहमिति, किंलक्षणान् ?—संसारसागरस्य पारगान्—पारं प्राप्तान्, अनेनेदृशानामपि महानुभावानां सत्ता ज्ञापिता, अत एव गच्छो रत्नाकर इति, यथा रत्नाकरे सत्यपि मकरमत्स्यादियादसां समूहे परं प्रवालमौक्तिकादीनां महार्घवस्तुनां सद्भावाद्रत्नाकरत्वं न यातीति तथा गच्छरत्नाकरेऽप्युपनयोऽभ्यूह्य इति ॥ २४३ ॥ ५ ॥

**रत्न०**—अथ मनःसंवरमुद्दिश्य चतुर्भिः श्लोकैर्वाक्संवरमाह—**वचोऽप्रवृत्तिमात्रेणेति०** व्याख्या—हे अङ्गिन्! वचसोऽप्रवृत्तिरप्रवृत्तिमात्रं तेन

रोगविशेषेण पंचेंद्रियाश्च जंतवो न विभ्रते—न धरंति, अपि तु सर्वेऽपि धरंतीति; तु—पुनर्येषां मुनीनां वचो—वचनं निरवद्यं—निष्पापं वर्त्तते तान्—वचोगुप्तान् वाग्गुप्तिधरान् मुनीन् स्तुवे—स्तुतिगोचरान् कुर्वे ॥ २४४ ॥ ६ ॥

अथ वाग्गुप्त्यभावेऽनिष्टफलं दृष्टांतपूर्वकं दर्शयन्नुपदिशति—

**निरवद्यं वचो ब्रूहि, सावद्यवचनैर्यतः। प्रयाता नरकं घोरं, वसुराजादयो द्रुतम् ॥ २४५ ॥ ७ ॥**

धनवि०—ततः कारणान्निरवद्यं—निष्पापं वचो—वचनं ब्रूहि—वद, यतः—कारणात्सावद्यवचनैः—अलीकवचनैर्वसुराजादयो—वसुनामनृपप्रभृतयः सपापवचनवक्तारो द्रुतं—शीघ्रं घोरं—रौद्रं सप्तमं नरकं प्रयाताः—प्रकर्षेण प्राप्ताः। भावार्थस्तु वसुराजकथातोऽवसेयः, तत्कथा चैवं—अस्ति चेदिषु विख्याता, नाम्ना शुक्तिपुरी पुरी। शुक्तिमत्याख्यया नद्या, नर्मसख्येव शोभना ॥१॥ पृथ्वीमुकुटकल्पायां, तस्यां तेजोनिरस्तुतः। माणिक्यमिव पृथ्वीशोऽभिचंद्रो नामतोऽभवत् ॥ २ ॥ सूनुः सूनृतवाक्तस्य, वसुरित्यभिधानतः। अजायत महाबुद्धिः, पाण्डोरिव युधिष्ठिरः ॥ ३ ॥ पार्श्वे क्षीरकदंबस्य, गुरोः पर्वतकः सुतः। राजपुत्रो वसुश्छात्रो, नारदश्चापठंस्त्रयः ॥४॥ सौधोपरि शयानेषु, तेषु पाठश्रमान्निशि। चारणश्रमणौ व्योम्नि, यांतावित्यूचतुर्मिथः ॥ ५ ॥ एषामेकतमः स्वर्गं, गमिष्यत्यपरौ पुनः। नरकं यास्यतस्तच्छ्रा-

---

हे प्राणिन एकेंद्रियादयो मूका वा मौनं न विभ्रते ?—न धारयंति, वचनयोगाभावाद्द्रव्येंद्रियोपघाताद्वा, अपि तु वहवो विभ्रते, परं वचोयोगे सति द्रव्येंद्रियाद्ये सति यो येषां महात्मनां निरवद्यं—सावद्यप्रवृत्तिरहितं वचो वर्त्तते तान्—वचसा गुप्तान्—वाग्गुप्तिमतः स्तुवेऽहमिति ॥ २४४ ॥ ६ ॥

रत्न०—निरवद्यमिति० व्याख्या—हे देहिन्! त्वं निरवद्यं वचो ब्रूहि—जल्प, यतः कारणात्सावद्यवचनैः—सावद्यवचनजल्पनैरित्यर्थः वसु-

श्रौषीत् क्षीरकदंबकः ॥ ६ ॥ तच्छ्रुत्वा चिंतयामास, खिन्नः क्षीरकदंबकः । मय्यप्यध्यापके शिशू, यास्यतो नरकं हहा ॥ ७ ॥ एभ्यः को यास्यति स्वर्गं, नरकं कौ च यास्यतः ? । जिज्ञासुरित्युपाध्यायस्तांस्त्रीन् युगपदाह्वयत् ॥ ८ ॥ यावपूर्णं समर्प्यैषामेकैकं पिष्टकुर्कुटम् । स ऊचेऽमी तत्र वध्या, यत्र कोऽपि न पश्यति ॥ ९ ॥ वसुपर्वतकौ तत्र, गत्वा शून्यप्रदेशयोः । आत्मनीनां गतिमिव, जघ्नतुः पिष्टकुर्कुटौ ॥ १० ॥ महात्मा नारदस्तत्र, व्रजित्वा नगराद्बहिः । स्थित्वा च विजने देशे, दिशः प्रेक्ष्येत्यतर्कयत् ॥ ११ ॥ गुरुपादैरदस्तावदादिष्टं वत्स! यत्त्वया । वध्योऽयं कुर्कुटस्तत्र, यत्र कोऽपि न पश्यति ॥ १२ ॥ असौ पश्यत्यहं पश्याम्यमी पश्यंति खेचराः । लोकपालाश्च पश्यंति, पश्यन्ति ज्ञानिनोऽपि च ॥ १३ ॥ नास्त्येव स्थानमपि तद्, यत्र कोऽपि न पश्यति । तात्पर्यं तद्गुरुगिरां, न वध्यः खलु कुर्कुटः ॥ १४ ॥ गुरुपादा दयावंतः, सदा हिंसापराङ्मुखाः । अस्मत्प्रज्ञां परिज्ञातुमेतन्नियतमादिशत् ॥ १५ ॥ विमृश्यैवमहत्वैव, कुर्कुटं स समाययौ । कुर्कुटाहनने हेतुं, गुरोर्व्यज्ञपयच्च तम् ॥ १६ ॥ स्वर्गं यास्यत्यसौ तावदिति निश्चित्य सस्वजे । गुरुणा नारदः स्नेहात्, साधु साध्वितिभाषिणा ॥ १७ ॥ वसुपर्वतकौ पश्चादागत्यैवं शशंसतुः । निहतौ कुर्कुटौ तत्र, यत्र कोऽपि न पश्यति ॥ १८ ॥ अपश्यतां युवामादावपश्यन् खेचरादयः । कथं हतौ कुर्कुटौ रे ?, पापावित्यशपद्गुरुः ॥ १९ ॥ ततः खेदादुपाध्यायो, दध्यौ विध्यातपाठधीः । मुधा मेऽध्यापनक्लेशो, वसुपर्वतयोरभूत् ॥ २० ॥ गुरूपदेशो हि यथापात्रं परिणमेदिह । अभ्रांभः स्थानभेदेन, मुक्तालवणतां व्रजेत् ॥ २१ ॥ प्रियः पर्वतकः पुत्रः, पुत्रादप्यधिको वसुः । नरकं यास्यतस्तस्माद्गृहवासेन किं मम ? ॥ २२ ॥ निर्वेदादित्युपाध्यायः, प्रव्रज्यामग्रहीत्तदा । तत्पदं पर्वतोऽध्यास्त, व्याख्याक्षणविचक्षणः ॥ २३ ॥ भूत्वा गुरोः प्रसादेन, सर्वशास्त्रविशारदः । नारदः शारदांभोदशुद्धधीः स्वां भुवं ययौ ॥ २४ ॥ नृपचंद्रोऽभिचंद्रोऽपि, जग्राह समये व्रतम् । ततश्चासीद्वसुराजो, वासुदेवसमः श्रिया ॥ २५ ॥ सत्यवादीति

स प्राप, प्रसिद्धिं पृथिवीतले । तां प्रसिद्धिमपि त्रातुं, सत्यमेव जगाद सः ॥ २६ ॥ अथैकदा मृगयुणा, मृगाय मृगयाजुषा । चिक्षिपे विशिखो विध्यनितंबे सोऽन्तराऽस्खलत् ॥ २७ ॥ इषुस्खलनहेतुः स, ज्ञातुं तत्र ययौ ततः । आकाशस्फटिकशिलामज्ञासीन् पाणिना स्पृशन् ॥ २८ ॥ स दध्याविति मन्येऽस्यां, संक्रांतः परतश्चरन् । भूमिच्छायेव शीतांशौ, ददृशे हरिणो मया ॥ २९ ॥ पाणिस्पर्शं विना नेयं, सर्वथाऽप्युपलक्ष्यते । अवश्यं तदसौ योग्या, वसोर्वसुमतीपतेः ॥ ३० ॥ रहो व्यजिज्ञपद् राज्ञो, गत्वा तां मृगयुः शिलाम् । हृष्टो राजाऽपि जग्राह, ददौ चास्मै महद्धनम् ॥ ३१ ॥ स तया घटयामास, च्छन्नं स्वासनवेदिकाम् । तच्छिल्पिनोऽघातयच्च, नात्मीयाः कस्यचिन्नृपाः ॥ ३२ ॥ तस्यां सिंहासनं वेदौ, वेदीशस्य निवेशितम् । सत्यप्रभावादाकाशस्थितमित्यबुधज्जनः ॥ ३३ ॥ सत्याद्धि तुष्टाः सान्निध्यमस्य कुर्वंति देवताः । एवमूर्जस्विनी तस्य, प्रसिद्धिर्व्यानशे दिशः ॥ ३४ ॥ तया प्रसिद्ध्या राजानो, भीतास्तस्य वशं ययुः । सत्या वा यदि वा मिथ्या, प्रसिद्धिर्जयिनी नृणाम् ॥३५॥ आगाच्च नारदोऽन्येद्युस्तत्रैक्षिष्ट पर्वतम् । व्याख्यानयंतमृग्वेदं, शिष्याणां धीगुणीजुषाम् ॥ ३६ ॥ अजैर्यष्टव्यमित्यस्मिन्, मेषैरित्युपदेशकम् । बभाषे नारदो भ्रातर्भ्रांत्या किमिदमुच्यते ? ॥ ३७ ॥ त्रिवार्षिकाणि धान्यानि, न हि जायंत इत्यजाः । व्याख्याता गुरुणाऽस्माकं, व्यस्मार्षीत् केन हेतुना ? ॥ ३८ ॥ ततः पर्वतकोऽवादीदिदं तातेन नोदितम् । ऊचिवाः किंत्वजा मेषास्तथैवोक्ता निघंटुषु ॥ ३९ ॥ जगाद नारदोऽप्येवं, शब्दानामर्थकल्पना । मुख्या गौणी च तत्रेह, गौणी गुरुरचीकथत् ॥ ४० ॥ गुरुर्धर्मोपदेष्टैव, श्रुतिर्धर्मात्मिकैव च । द्वयमप्यन्यथा कुर्वन्, मित्र ! मा पापमर्जय ॥ ४१ ॥ साक्षेपः पर्वतो जल्पदजान् मेषान् गुरुर्जगौ । गुरूपदेशशब्दार्थोल्लंघनाद्धर्ममर्जसि ? ॥ ४२ ॥ मिथ्याभिमानवाचो हि, न स्युर्दंडभया-नृणाम् । स्वपक्षस्थापने तेन, जिह्वाच्छेदः पणोऽस्तु नः ॥ ४३ ॥ प्रमाणमुभयोरत्र, सहाध्यायी वसुर्नृपः । नारदः प्रतिपेदे तत्र क्षोभः

श्रौपीत् क्षीरकदंबकः ॥ ६ ॥ तच्छ्रुत्वा चिंतयामास, खिन्नः क्षीरकदंबकः । मय्यप्यध्यापके शिष्यौ, यास्यतो नरकं हहा ॥ ७ ॥ एभ्यः
को यास्यति स्वर्गं, नरकं कौ च यास्यतः ? । जिज्ञासुरित्युपाध्यायस्तांस्त्रीन् युगपदाह्वयत् ॥ ८ ॥ यावपूर्णे समर्प्यैषामेकैकं पिष्टकुर्कुटम् । स
ऊचेऽमी तत्र वध्या, यत्र कोऽपि न पश्यति ॥ ९ ॥ वसुपर्वतकौ तत्र, गत्वा शून्यप्रदेशयोः । आत्मनीनां गतिमिव, जघ्नतुः पिष्टकुर्कुटौ
॥ १० ॥ महात्मा नारदस्तत्र, व्रजित्वा नगराद्बहिः । स्थित्वा च विजने देशे, दिशः प्रेक्ष्येत्यतर्कयत् ॥ ११ ॥ गुरुपादैरदस्तावदादिष्टं
वत्स ! यत्त्वया । वध्योऽयं कुर्कुटस्तत्र, यत्र कोऽपि न पश्यति ॥ १२ ॥ असौ पश्यत्यहं पश्याम्यमी पश्यंति खेचराः । लोकपालाश्च
पश्यंति, पश्यन्ति ज्ञानिनोऽपि च ॥ १३ ॥ नास्त्येव स्थानमपि तद्, यत्र कोऽपि न पश्यति । तात्पर्यं तद्गुरुगिरां, न वध्यः खलु कुर्कुटः
॥ १४ ॥ गुरुपादा दयावंतः, सदा हिंसापराङ्मुखाः । अस्मत्प्रज्ञां परिज्ञातुमेतन्नियतमादिशत् ॥ १५ ॥ विमृश्यैवमहत्वैव, कुर्कुटं
स समाययौ । कुर्कुटाहनने हेतुं, गुरोर्व्यज्ञपयच्च तम् ॥ १६ ॥ स्वर्गं यास्यत्यसौ तावदिति निश्चित्य सस्वजे । गुरुणा नारदः स्नेहात्,
साधु साध्विति भाषिणा ॥ १७ ॥ वसुपर्वतकौ पश्चादागत्यैवं शशंसतुः । निहतौ कुर्कुटौ तत्र, यत्र कोऽपि न पश्यति ॥ १८ ॥ अपश्यतां
युवामादावपश्यन् खेचरादयः । कथं हतौ कुर्कुटौ रे ?, पापावित्यशपद्गुरुः ॥ १९ ॥ ततः खेदादुपाध्यायो, दध्यौ विध्यातपाठधीः । मुधा
मेऽध्यापनक्लेशो, वसुपर्वतयोरभूत् ॥ २० ॥ गुरूपदेशो हि यथापात्रं परिणमेदिह । अभ्रांभः स्थानभेदेन, मुक्तालवणतां व्रजेत् ॥ २१ ॥
प्रियः पर्वतकः पुत्रः, पुत्रादप्यधिको वसुः । नरकं यास्यतस्तस्माद्गृहवासेन किं मम ? ॥ २२ ॥ निर्वेदादित्युपाध्यायः, प्रव्रज्यामग्रहीत्तदा ।
तत्पदं पर्वतोऽध्यास्त, व्याख्याक्षणविचक्षणः ॥ २३ ॥ भूत्वा गुरोः प्रसादेन, सर्वशास्त्रविशारदः । नारदः शारदांभोदशुद्धधीः
स्वां भुवं ययौ ॥ २४ ॥ नृपचंद्रोऽभिचंद्रोऽपि, जग्राह समये व्रतम् । ततश्चासीद्वसुराजो, वासुदेवसमः श्रिया ॥ २५ ॥ सत्यवादीति

न प्राप, प्रसिद्धिं पृथिवीतले । तां प्रसिद्धिमपि त्रातुं, सत्यमेव जगाद सः ॥ २६ ॥ अथैकदा मृगयुणा, मृगाय मृगयाजुषा । चिक्षिपे विशिखो विध्यनिबंधे सोऽन्तराऽस्खलत् ॥ २७ ॥ इषुस्खलनहेतुः स, ज्ञातुं तत्र ययौ ततः । आकाशस्फटिकशिलामज्ञासीत् पाणिना स्पृशन् ॥ २८ ॥ स दध्याविति मन्येऽस्यां, संक्रांतः परतश्चरन् । भूमिच्छायेव शीतांशौ, ददृशे हरिणो मया ॥ २९ ॥ पाणिस्पर्शं विना नेयं, सर्वथाऽप्युपलक्ष्यते । अवश्यं तदसौ योग्या, वसोर्वसुमतीपतेः ॥ ३० ॥ रहो व्यजिज्ञपद् राज्ञो, गत्वा तां मृगयुः शिलाम् । हृष्टो राजाऽपि जग्राह, ददौ चास्मै महद्धनम् ॥ ३१ ॥ स तया घटयामास, च्छन्नं स्वासनवेदिकाम् । तच्छिल्पिनोऽघातयच्च, नात्मीयाः कस्यचिन्नृपाः ॥ ३२ ॥ तस्यां सिंहासनं वेद्यां, वेदीशस्य निवेशितम् । सत्यप्रभावादाकाशस्थितमित्यबुधज्जनः ॥ ३३ ॥ सत्याद्धि तुष्टाः सान्निध्यमस्य कुर्वंति देवताः । एवमूर्जस्विनी तस्य, प्रसिद्धिर्व्यानशे दिशः ॥ ३४ ॥ तया प्रसिद्ध्या राजानो, भीतास्तस्य वशं ययुः । सत्या वा यदि वा मिथ्या, प्रसिद्धिर्जयिनी नृणाम् ॥३५॥ आगाच्च नारदोऽन्येद्युस्तत्रैक्षिष्ट पर्वतम् । व्याख्यानयंतमृग्वेदं, शिष्याणां धीगुणजुषाम् ॥ ३६ ॥ अजैर्यष्टव्यमित्यस्मिन्, मेषैरित्युपदेशकम् । बभाषे नारदो भ्रातर्भ्रांत्या किमिदमुच्यते ? ॥ ३७ ॥ त्रिवार्षिकाणि धान्यानि, न हि जायंत इत्यजाः । व्याख्याता गुरुणाऽस्माकं, व्यस्मार्षीत् केन हेतुना ? ॥ ३८ ॥ ततः पर्वतकोऽवादीदिदं तातेन नोदितम् । उदिताः किंत्वजा मेषास्तथैवोक्ता निघंटुषु ॥ ३९ ॥ जगाद नारदोऽप्येवं, शब्दानामर्थकल्पना । मुख्या गौणी च तत्रेह, गौणीं गुरुरचीकथत् ॥ ४० ॥ गुरुर्धर्मोपदेष्टैव, श्रुतिर्धर्मात्मिकैव च । द्वयमप्यन्यथा कुर्वन्, मित्र ! मा पापमर्जय ॥ ४१ ॥ साक्षेपः पर्वतो जल्पदजान् मेषान् गुरुर्जगौ । गुरूपदेशशब्दार्थोल्लंघनाद्धर्ममर्जसि ? ॥ ४२ ॥ मिथ्याभिमानवाचो हि, न स्युर्दंडभयान्नृणाम् । स्वपक्षस्थापने तेन, जिह्वाच्छेदः पणोऽस्तु नः ॥ ४३ ॥ प्रमाणमुभयोरत्र, सहाध्यायी वसुर्नृपः । नारदः प्रतिपेदे तत्र क्षोभः

सत्यभाषिणाम् ॥ ४४ ॥ रहः पर्वतमूचेऽम्बा, गृहकर्मरताऽप्यहम् । अजास्त्रिवार्षिका धान्यमित्यश्रौपं भवत्पितुः ॥ ४५ ॥ जिह्वाच्छेदपणोऽकार्पीर्यद्दर्पात्तदसांप्रतम् । अविमृश्य विधातारो, भवंति विपदां पदम् ॥ ४६ ॥ अवदत्पर्वतोऽप्येवं, कृतं तावदिदं मया । यथा तथा कृतस्यांवाकरणं नहि विद्यते ॥ ४७ ॥ साऽथ पर्वतकापायपीडिता हृदि शल्यिता । वसुराजमुपेयाय, पुत्रार्थे क्रियते न किम् ? ॥ ४८ ॥ दृष्टः क्षीरकदंबोऽद्य, यदंव ! त्वमसीक्षिता । किं करोमि प्रयच्छामि !, किं वेत्यभिदधे वसुः ॥ ४९ ॥ साऽवादीदीयतां पुत्रभिक्षां मह्यं महीपते ! । धनधान्यैः किमन्यैर्मे, विना पुत्रेण पुत्रक ! ॥ ५० ॥ वसुरूचे मम मातः !, पाल्यः पूज्यश्च पर्वतः । गुरुवद्गुरुपुत्रेऽपि, वर्त्तितव्यमिति श्रुतिः ॥ ५१ ॥ कस्याद्य पत्रमुत्क्षिप्तं, कालेनाकालरोपिणा ? । को जिघांसुर्भ्रातरं मे, ब्रूहि मातः ! किमातुरा ? ॥ ५२ ॥ अजव्याख्यानवृत्तांतं, स्वपुत्रस्य पणं च तम् । त्वं प्रमाणीकृतश्चासीत्याख्यायार्थयते स्म सा ॥ ५३ ॥ कुर्वाणो रक्षणं भ्रातुरजान्मेषानुदीरय । प्राणैरप्युपकुर्वंति, महांतः किं पुनर्गिरा ? ॥ ५४ ॥ अवोचत वसुपतिर्मिथ्या वच्मि वचः कथम् ? । प्राणात्ययेऽपि शंसंति, नासत्यं सत्यभाषिणः ॥ ५५ ॥ अन्यदप्यभिधातव्यं, नासत्यं पापभीरुणा । गुरुवागन्यथाकारे, कूटसाक्ष्ये च का कथा ? ॥ ५६ ॥ बहु कुरु गुरोः सूनुं, यद्वा सत्यव्रताग्रहम् । तया सरोषमित्युक्तस्तद्वचोऽमंस्त पार्थिवः ॥ ५७ ॥ ततः प्रमुदिता क्षीरकदंबगृहिणी ययौ । आजग्मतुश्च विद्वांसौ, तत्र नारदपर्वतौ ॥ ५८ ॥ सभायाममिलन् सभ्या, माध्यस्थ्यगुणशालिनः । वादिनोः सदसद्वादक्षीरनीरसितच्छदाः ॥ ५९ ॥ आकाशस्फटिकशिलावेदिसिंहासनं वसुः । सभापतिरलंचक्रे, नभोमूलमिवोडुपः ॥ ६० ॥ ततो निजनिजव्याख्यापक्षं नारदपर्वतौ । कथयामासतू राज्ञे, सत्यं ब्रूहीतिभाषिणौ ॥ ६१ ॥ विप्रवृद्धैरथोचेऽसौ, विवादस्त्वयि तिष्ठति(ते) । प्रमाणमनयोः साक्षी [त्वं], रोदस्योरिव चंद्रमाः ॥ ६२ ॥ घटप्रभृतिदिव्यानि, वर्त्तंते हंत सत्यतः । सत्याद्वर्षति पर्जन्यः, सत्यात्सिद्ध्यंति देवताः ॥ ६३ ॥

त्वय्येव सत्ये लोकोऽयं, स्थाप्यते पृथिवीपते ! । त्वामिहार्थे ब्रूमहे किं ?, ब्रूहि सत्यव्रतोचितम् ॥ ६४ ॥ वचोऽश्रुत्वेव तत्सत्यप्रसिद्धिं स्वां निरस्य च । अजान्मेषान् गुरुर्व्याख्यादिति साक्ष्यं वसुर्व्यधात् ॥ ६५ ॥ असत्यवचसा तस्य, क्रुद्धास्तत्रैव देवताः । दलयामासुराकाशस्फटिकासनवेदिकाम् ॥ ६६ ॥ वसुर्वसुमतीनाथस्ततो वसुमतीतले । पपात सद्यो नरकपातं प्रस्तावयन्निव ॥ ६७ ॥ कूटसाक्ष्यप्रदातुस्ते, अपवस्येय को मुखम् । पश्येदिति वसुं निंदन्नारदः स्वास्पदं ययौ ॥ ६८ ॥ देवताभिरसत्योक्तिकुपिताभिर्निपातितः । जगाम नरकं घोरं, नरनाथो वसुस्ततः ॥ ६९ ॥ यो यः सूनुरुपाविक्षद्राज्ये तस्यापराधिनः । प्रजघ्नुर्देवतास्तं तं, यावदष्टौ निपातिताः ॥ ७० ॥ इति वसुनृपतेरसत्यवाचः, फलमाकर्ण्य जिनोक्तिविद्धकर्णः । कथमप्युपरोधतोऽपि जल्पेदनृतं प्राणितसंशयेऽपि नैव ॥ ७१ ॥ इति योगशास्त्रवृत्त्यनुसारेण लिखितमिति ॥ २४५ ॥ ७ ॥

पुनर्वाग्गुप्त्यभावे ऐहिकमामुष्मिकं चानिष्टफलं दर्शयन्नुपदिशति—

**इहामुत्र च वैराय, दुर्वाचो नरकाय च । अग्निदग्धाः प्ररोहंति, दुर्वाग्दग्धाः पुनर्न हि ॥ २४६ ॥ ८ ॥**

धन०—दुर्वाचो—दुष्टवचनानीह—इह भवे च पुनरमुत्र—परलोके वैराय—विरोधाय भवंतीति, च पुनर्नरकाय—नरकदुःखाय भवंति;

---

राजादयो द्रुतं घोरं नरकं प्रयाता—गताः, वसुराजादीनां संबंधस्तु बहुषु शास्त्रेषु विद्यमानत्वान्न लिखितोऽस्ति, परं ततस्तद्वाचकगीतार्थमुखाद्वाऽवसेय इति ॥ २४५ ॥ ७ ॥

रत्न०—इहामुत्रेति० व्याख्या—इहेति—इहलोके दुः—दुष्टा वाचः परेषामप्रीतिकराः सावद्या वा वैराय—वैरहेतवे भवंति, च पुनरमुत्र—

वागद्रोहे- ऽरोहः

दुर्वाचो वैराय भवंतीत्युत्तरार्द्धेन समर्थयति, हि–यतः कारणादग्निदग्धा–वह्निप्रज्वलिता वनस्पत्यादयः **प्ररोहंति**–अङ्कुरयंति, **पुनर्दुर्वाग्दग्धाः**–दुष्टवचनदग्धा जना **न** प्ररोहंति–न सौमनस्यरूपाङ्कुरवंतो भवंतीत्यर्थः ॥ २४६ ॥ ८ ॥

अथ वचनगुप्तेस्तीर्थंकराणामप्युपादेयतां दर्शयन्नुपदिशति—

**अत एव जिना दीक्षाकालादाकेवलोद्भवम् । अवद्यादिभिया ब्रूयुर्ज्ञानत्रयभृतोऽपि न ॥ २४७ ॥ ९ ॥**

**धनवि०**—यत एव सावद्यवचनप्रतिपादनमनिष्टफलाय भवतीत्यनंतरमुक्तमत **एव** हेतोः **ज्ञानत्रयभृतोऽपि**–मतिश्रुतावधिज्ञानवंतोऽपि **जिनाः**–तीर्थकरा **दीक्षाकालाद्**–व्रतप्रतिपत्तिसमयादारभ्याकेवलोद्भवं–केवलज्ञानोत्पत्तिसमयं यावद्, **अवद्यादिभिया**–जल्पने कदाचिदवद्यं मा भूयादितिभयेन, आदिपदाद्धर्मध्यानविघातभिया च, **न ब्रूयुः**–न वदंतीति ॥ २४७ ॥ ९ ॥

---

परलोके नरकाय चशब्दाद्वैरायापि भवंति, वैरस्य परभवेऽप्यनुगमनाद्, रावणलक्ष्मणशंबूकानामिवेति, तत्रार्थे दृष्टांतमाह–अग्निना दग्धाः 'समर्थविशेषणाद्विशेष्यं लभ्यत' इति न्यायाद् वृक्षादयः प्ररोहंति–अङ्कुरयंति, दुर्वाग्दग्धा, दग्धा इव दग्धाः यथा दग्धा वृक्षा अङ्गारा वा श्यामीभवंति तथा मर्मवचस्ताडिता अपि श्यामवदना भवंतीत्युपचारतो मनुष्या न प्ररोहंति–हर्षाङ्कुरान्न प्रादुर्भावयंतीति ॥ २४६ ॥ ८ ॥

**रत्न०—अत एवेति०** व्याख्या—अत एव–अस्मादेव हेतोर्जिनाः–तीर्थकृतो दीक्षाकालात्प्रारभ्याकेवलोद्भवं–केवलस्य ज्ञानविशेषस्योद्भवम्–उत्पत्तिं यावदवद्यादीनां भिया–भयेन न ब्रूयुः, किंभूताः ?–ज्ञानानां त्रयं–मतिश्रुतावधिलक्षणं बिभ्रतीति ज्ञानत्रयभृतः, कथमपि सत्यपि तुर्ये मनःपर्यवज्ञाने ज्ञानत्रयभृतोऽपीत्युक्तं तदस्य केवलमनःपर्याययोर्ग्रहणशक्तिमत्त्वादग्रहणं संभाव्यतेऽन्यो विशेषस्तु कुशाग्रधीगम्य इति ॥ २४७ ॥ ९ ॥ "अर्थतो युग्मं" अर्थतो युग्मव्याख्या ॥

अथ काययोगसंवरमुपदिशमाह—

**कृपया संवृणु स्वाङ्गं, कूर्मज्ञातनिदर्शनात्। संवृतासंवृताङ्गा यत्, सुखदुःखान्यवाप्नुयुः ॥ २४८ ॥ १० ॥**

धनवि०—कृपया—जीवदयया जीवदयालक्षणहेतुना स्वाङ्गं—स्वकायं संवृणु—निरुंद्धि; यद्—यस्मात्संवृतासंवृताङ्गाः—संवृतं चासंवृतं च अंगं येषां ते तथा, कूर्माः—कच्छपाः ज्ञातनिदर्शनाद्—ज्ञातधर्मकथांगोक्तदृष्टांतात्सुखदुःखान्यवाप्नुयुः—प्राप्नुवंति, तत्र संवृताङ्गाः—संलीनगात्राः कूर्माः सुखं—स्वकुटुंबमिलनदीर्घजीवित्वादिशर्म अवाप्नुयुः, असंवृताङ्गाः—असंलीनगात्राश्च कूर्मा दुःखं—नानाप्रकारां मारणकदर्थनामवाप्नुयुरित्यर्थः; सुखं च दुःखं च सुखदुःखमिति पाठे—'विरोधिनामद्रव्याणां नवा द्वंद्वः स्वैः' (सि. ३-१-१३०)रित्यनेन समाहारद्वंद्वः, सुखदुःखानीति पाठे त्वितरेतरद्वंद्व इति। अत्र कूर्मदृष्टांतो ज्ञाताधर्मकथांगादवसेयः, तत्सूचकं च गाथाद्वयं ज्ञातावृत्तिगतं "विसयसुहं रुंभंता जीवा ते रागदोसनिम्मुक्का। पावंति निव्वुइसुहं कुम्मोव्व मयंगदहसोक्खं ॥ १ ॥ इयरे उ अणत्थपरंपराउ पावंति पावकम्मवसा संसारसागरगया गोमायुगसियकुम्मो वा ॥ २ ॥ [ विषयसुखं नीरुन्धन्तो जीवास्ते निर्मुक्तरागद्वेषाः। प्राप्नुवन्ति निर्वृतिसुखं

---

रत्न०—अथ श्लोकाभ्यां श्लोकाभ्यां कायसंवरमाह—कृपयेति० व्याख्या—हे देहिन्! त्वं कृपया—करुणया अर्थाज्जीवानां, स्वस्याङ्गं संवृणु, मा इतस्ततोऽविधिना चालयेत्यर्थः, यस्मात् ?—कूर्माणां ज्ञातं ज्ञाताधर्मकथांगोक्तमध्ययनं तस्य निदर्शनाद्—दृष्टांतात्, तं दृष्टांतं परिभावयेत्यर्थः। अत्रार्थे संवृतासंवृताङ्गयोः कूर्मयोर्द्वाभ्यां शृगालाभ्यां सकाशादप्राप्तमरणदुःखप्राप्तमरणदुःखयोर्दृष्टांतः षष्ठांगतोऽवसेय इति। तमेव भावमुत्तरार्द्धेन सूचयति—यद्—यस्मात्कारणात्संवृतमङ्गमसंवृतं चाङ्गं येस्ते संवृतासंवृताङ्गाः प्राणिनः क्रमेण सुखानि दुःखानि प्रति चावाप्नुयुः—

कूर्म इव मृतांकहृदसौख्यम् ॥ १ ॥ इतरे त्वनर्थपरम्पराः प्राप्नुवन्ति पापकर्मवशाः । संसारसागरगता गोमायुग्रस्तकूर्म इव ॥ २ ॥] इति, तस्यायमुपनयः—संवृताङ्गाः पुरुषाः पापशृगालेभ्योऽसंवृतांगकच्छपा इव दुःखमाप्नुवंतीति ॥ २४८ ॥ १० ॥

अथ केवलस्य कायसंवरस्यासारतां दर्शयन्नुपदिशति—

**कायस्तंभान्न के के स्युस्तरुस्तंबादयो यताः ? । शिवहेतुक्रियो येषां, कायस्ताँस्तु स्तुवे यतीन् ॥ २४९ ॥ ११ ॥**

**धनवि०—कायस्तंभात्**—केवलकायसंवरात्तरुस्तंबादयो—वृक्षस्थाणुप्रभृतयः, आदिपदात्पर्वतादयः, **के के** पदार्था **यताः**—संयमिनो न भवंति ?, अपि तु सर्वेऽपि भवंतीत्यर्थः । **तु** पुनर्**येषां कायः**—शरीरं शिवहेतुः—मोक्षहेतुः क्रिया—व्यापारो यस्य स **शिवहेतुक्रियो** भवति **तान् यतीन्**—संयमिनोऽहं **स्तुवे**—स्तवीमि ॥ २४९ ॥ ११ ॥

---

प्राप्नुयुरिति ॥ २४८ ॥ १० ॥ **कायस्तम्भादिति०** कायस्य—शरीरस्य स्तंभात्—स्तंभनादचालनादित्यर्थः, के के ?—तरुस्तभादयः—तरवः एव स्तंभाकारत्वात्स्तंभास्ते आदौ येषां ते तरुस्तंभादयः, अथवा तरवश्च स्तंभाश्च तरुस्तंभास्ते आदौ येषां ते तरुस्तंभादयः, स्तंभादय इति कथनेनाचेतनाः काष्ठपाषाणादिनिष्पन्नाः स्तंभा गृहीताः, आदिशब्दाद्ये कायव्यापारासमर्था द्वींद्रियादयस्तेऽप्यूह्याः, किल० ?—यतोऽविरताः कायव्यापारासामर्थ्याद्यता इव यताः, तुरिति विशेषे, येषां यतानां—मनसा विरतानां शिवस्य—मोक्षस्य हेतुः—कारणं क्रिया—कायव्यापाररूपा वर्त्तते तानहं कायगुप्तान्—कायगुप्तिमतः स्तुवे इति, कायव्यापारवीर्ये परमशुभं कायव्यापारं निरुध्य स्थितान् स्तुवे इत्यर्थः ॥ २४९ ॥ ११ ॥

अथेंद्रियपंचकसंवरोपदेशे पूर्वं श्रोत्रेंद्रियसंवरमुपदिशन्नाह—

**श्रुतिसंयममात्रेण, शब्दान् कान् के त्यजंति न? । इष्टानिष्टेषु चैतेषु, रागद्वेषौ त्यजन् मुनिः ॥ २५० ॥ १२ ॥**

धनवि०—श्रुतिसंयममात्रेण–श्रोत्रेंद्रियसंवरमात्रेण कान्–इष्टानिष्टान् शब्दान्–श्रोत्रेंद्रियग्राह्यान् के–एकेंद्रियादयश्चतुरिंद्रियांता अनेकमूकबधिरपंचेंद्रियाश्च न त्यजंति?–न परिहरंति, अपि तु सर्वेऽपि त्यजंतीत्यर्थः । च पुनरिष्टानिष्टेष्वेतेषु शब्देषु रागद्वेषौ–प्रीत्यप्रीतिलक्षणौ त्यजन्–परिहरन् मुनिर्भवतीति ॥ २५० ॥ १२ ॥

अथ घ्राणेंद्रियसंवरमुपदिशन्नाह—

**घ्राणसंयममात्रेण, गंधान् कान् के त्यजंति न? । इष्टानिष्टेषु चैतेषु, रागद्वेषौ त्यजन्मुनिः ॥ २५१ ॥ १३ ॥**

धनवि०—घ्राणसंयममात्रेण–नासिकेंद्रियसंवरमात्रेण गंधानिष्टाननिष्टान्वा के–एकेंद्रियद्वींद्रिया दोषग्रस्ताः पंचेंद्रियादयश्च न

---

रत्न०—अथ मनोवचःकायसंवरं निरूप्य पञ्चेंद्रियसंवरमाह—तत्रापि प्रथमं श्रोत्रेंद्रियमाश्रित्य कथयति–श्रुतिसंयममात्रेणेति० व्याख्या—श्रुत्योः–कर्णयोः संयमो–रोधो भावकर्णेंद्रियजय इत्यर्थः केवलं श्रुतिसंयमः श्रुतिसंयममात्रं तेन श्रुतिसंयममात्रेण, के?–प्राणिनः अकर्णादयः, कान्? शब्दान् मनोज्ञामनोज्ञलक्षणान्न त्यजंति?, अपि तु सर्वेऽपि त्यजंति, अत्रोपलक्षणादेकेंद्रियद्वींद्रियत्रींद्रियचतुरिंद्रियादयोऽपि ज्ञेयास्तेऽपि द्रव्यभावश्रोत्रेंद्रियविकला इति मनोज्ञामनोज्ञशब्दान् त्यजंति, अत्र कठिनभाषानिवारणार्थं संयमशब्दप्रयोगो ज्ञेयः, एवमग्रेतनेष्वपि सूत्रेषु ज्ञेयं, चेति विशेषे, एतेष्विष्टानिष्टेषु कोकिलकाकप्रभृतीनां शब्देषु रागद्वेषौ त्यजन्मुनिः स्यादिति ॥ २५० ॥ १२ ॥

रत्न०—चक्षुरिति० व्याख्या—चक्षुःसंयममात्रादिति पूर्ववद्, अत्र भावचक्षुरिंद्रियविकला इष्टानिष्टानि रूपाणि त्यजंति, रूपालोकान्–

श्रुतिघ्राणे (श्रुति-चक्षुषी)

त्यजंति ?, अपि तु सर्वेऽपि परिहरंतीत्यर्थः। अत्रोत्तरार्द्धं पूर्ववत्, शब्दस्थाने गंध इति विशेषः। ननु क्रमप्राप्तं चक्षुरिंद्रियसंवरोपदेशमुपेक्ष्य घ्राणेन्द्रियसंवरोपदेशः कथं प्रतिपादित इति चेन्न, 'विचित्रा सूत्राणां कृतिराचार्यस्ये'ति न्यायात् 'स्वतंत्रेच्छायाः पर्यनुयोगानर्हत्वादि'तिन्यायाद्वा सामंजस्यात्, अन्यथा वा सुधियाऽत्र शंका निराकरणीयेति ॥ २५१ ॥ १३ ॥

अथ चक्षुरिंद्रियसंवरमुपदिशन्नाह च—

**चक्षुःसंयममात्रेण, रूपालोकांस्त्यजंति न। इष्टानिष्टेषु चैतेषु, रागद्वेषौ त्यजन्मुनिः ॥ २५२ ॥ १४ ॥**

**धनवि०**—चक्षुःसंयममात्रात्—केवलचक्षुरिंद्रियसंवराद्रूपालोकान्—रूपस्यावलोकनानि त्रींद्रियादयः चक्षुर्दोषदुष्टपंचेंद्रियादयश्च के जंतवो **न त्यजंति ?**, अत्र के इत्यध्याहार्यं, अपि तु सर्वेऽपि रूपालोकान् परिहरंतीत्यर्थः। उत्तरार्द्धमत्रापि पूर्ववदेवावसेयं, गंधस्थाने रूपमिति विशेषः ॥ २५२ ॥ १४ ॥

---

रूपदर्शनानि के न त्यजंति ?, अपि तु सर्वेऽपि त्यजंति, चेति विशेषे, इष्टानिष्टेषु युवतिजरतीरूपेषु रागद्वेषौ त्यजन् सन्मुनिः स्यादिति, अत्र केषुचिदादर्शेषु पूर्वं घ्राणसंयममात्रेणेति दृश्यते तन्न जाने केन हेतुनेति, परमनुक्रमस्त्वयमेव घटत इति ॥ २५१ ॥ १३ ॥

**रत्न०—घ्राणेति०** व्याख्या—अत्रोपहतभावघ्राणेंद्रिये द्वींद्रियाः, उपलक्षणादेकेंद्रिया अपि ग्राह्याः, तेऽपि द्रव्यभावघ्राणेंद्रियविकला इति, इष्टानिष्टान् गंधान् त्यजंतीति, कान् ?—शुभाशुभान्—मृगमदलशुनादिसंबंधिनो न त्यजंति ?, अपि तु त्यजंति, उत्तरार्द्धं पूर्ववत् ॥ २५२ ॥ १४ ॥

अथ जिह्वेन्द्रियसंवरमुपदेष्टुमाह—

जिह्वासंयममात्रेण, रसान् कान् के त्यजंति न? । मनसा त्यज तानिष्टान्, यदीच्छसि तपःफलम् ॥२५३॥१५॥

धनवि०—जिह्वासंयममात्रेण—केवलरसनेंद्रियसंवरेणैकेंद्रिया जंतवः के कानिष्टाननिष्टान्वा रसान्न त्यजंति ? । अथ तात्त्विकं जिह्वासंयमं दर्शयन्नुत्तरार्द्धं वक्ति—तदा तानिष्टान् रसान् आप्तान् मनसा—समतापरिणतचेतसा त्यज यदि चेत्तपःफलं—तपसः फलं मोक्षमिच्छसि ॥ २५३ ॥ १५ ॥

अथ स्पर्शनेंद्रियसंवरमुपदेष्टुकाम आह—

त्वचः संयममात्रेण, स्पर्शान् कान् के त्यजंति न? । इष्टानिष्टेषु चैतेषु, रागद्वेषौ त्यजन्मुनिः ॥ २५४ ॥ १६ ॥

धनवि०—त्वचः संयममात्रेण—केवलत्वगिंद्रियसंवरेण स्पर्शान्—सुखस्पर्शान् के सूक्ष्मबादरनिगोदजीवाः सूक्ष्मबादरपृथ्वीकायिकादयो नारकादयो वा न त्यजंति ?, अपि तु सर्वेऽपि सुखस्पर्शं परिहरंतीत्यर्थः । उत्तरार्द्धमत्रापि पूर्ववद्व्याख्येयम् ॥ २५४ ॥ १६ ॥

---

रत्न०—जिह्वासंयममात्रेणेति० व्याख्या—जिह्वासंयममात्रेणेति पूर्ववदत्रोपहतभावरसनेंद्रिया ग्राह्याः, उपलक्षणादेकेंद्रिया अपि ग्राह्याः, तेऽपि अल्पभावरसनेंद्रियविकला इति, शुभाशुभरसान् त्यजंतीति, कान् रसान् ?—शुभाशुभान् शर्कराक्रियातककटुसंबंधिनो न त्यजंति?, अपितु पूर्वोक्ताः सर्वेऽपि त्यजंति, परं हे आनन् ! यदि तपसः फलमिच्छसि तदा मनसा—मनोयोगपूर्वकं तान् इष्टान् मधुमांसपुष्पफलादीनां त्यजेति ॥२५३॥१५॥

रत्न०—त्वचः संयममात्रेणेति० व्याख्या—पूर्ववत्, परं त्वचः संयममात्रत्वं त्वप्रोगकृतमवसेयं, भावत्वगिंद्रियोपघातजमित्यर्थः, एकेंद्रि-

त्वगिंद्रियमुपदिश्य दुर्जयकामोद्दीपकत्वगिंद्रियविशेषं बस्तिसंवरमुपदिशन्नाह—

**बस्तिसंयममात्रेण, ब्रह्म के के न बिभ्रते? । मनःसंयमतो धेहि, धीर! चेत्तत्फलार्थ्यसि ॥ २५५ ॥ १७ ॥**

धनवि०—बस्तिसंयममात्रेण—केवलमूत्राशयनिरोधेन ब्रह्म—व्रतं के के कृत्रिमनपुंसकीकृतनरतुरगबलीवर्दादयो नारकाः संमूर्छिमाश्च न बिभ्रते?—न धरंति । अथ तात्त्विकं बस्तिसंयमं दर्शयन्नुत्तरार्द्धं वक्ति—तदा मनःसंयमतो—मनःसंवरतो ब्रह्म धेहि—धारय हे धीर! चेद्—यदि तत्फलार्थी—ब्रह्मचर्यफलं मोक्षस्तदर्थी—तदभिलाषी असीत्यर्थः ॥ २५५ ॥ १७ ॥

पृथग्पृथगिंद्रियपंचकसंवरमुपदिश्य समुदितेंद्रियपंचकसंवरमुपदिशति—

**विषयेंद्रियसंयोगाभावात् के के न संयताः? । रागद्वेषमनोयोगाभावाद्ये तु स्तवीमि तान् ॥ २५६ ॥ १८ ॥**

---

यादीनां संज्ञिपर्याप्तपञ्चेंद्रियपर्यन्तानां त्वग्विषयस्तु दृश्यत एव, तेन रोगकृतस्त्वक्संयमोऽवसेयः, कान् ?—स्पर्शान्, के न त्यजंति ?, अपि तु सर्वान् सर्वेऽपि त्यजंति, चेति विशेषे, इष्टानिष्टेपु नवनीतार्कतूलबूरगोजिह्वाक्रकचशाकपत्रादिजेषु रागद्वेषौ प्रति त्यजन् मुनिः स्यादिति ॥ २५४ ॥ १६ ॥

रत्न०—त्वक्संवरेऽपि विशेषमाह—**बस्तिसंवरमात्रेणेति०** व्याख्या—बस्तिः—मूत्राशयो मूत्रस्थानमित्यर्थः, बस्तिरित्युक्तेऽपि 'स्थानात्स्थानी लक्ष्यते' इति न्यायाद्बस्तिः पुंसः पुंश्चिह्नं स्त्रियाश्च स्त्रीचिह्नं तस्य संयममात्रेणेति पूर्ववद्, ब्रह्मेति—ब्रह्मचर्यं के के जनाः पुंनपुंसकाः स्त्रीनपुंसकाश्च न बिभ्रते?, अपितु बहवो बिभ्रते, मैथुनशक्तेरभावादित्यर्थः, परं हे धीर! चेद्—यदि तस्य ब्रह्मणः फलं भाववेदाभावलक्षणं तस्यार्थोऽस्तीति तत्फलार्थी त्वमसि—विद्यसे तर्हि मनसः संयमो—रोधस्ततो ब्रह्मेति—ब्रह्मचर्यं धेहि—धरेति ॥ २५५ ॥ १७ ॥

कपाय-संवरः

**धनवि०**—विपयाश्च—वीणादिशब्दादयः इंद्रियाणि च—श्रोत्रादीनि तेपां परस्परं संबंधाभावात्के के दारिद्र्याद्युपद्रुता जंतवः **संयता** न भवंति ?, अपि तु सर्वेऽपि भवंतीत्यर्थः; तु—पुना **रागद्वेपयोर्मनसश्च परस्परं योगः**—संबंधस्तस्याभावाद्ये संयता भवंति **तान्** संयतान् **स्तवीमी**ति ॥ २५६ ॥ १८ ॥

अनंतरोक्तरागद्वेपसंवराधिकारात् तत्सहचरितानां तन्मूलभूतानां वा कपायाणां संवरमुपदिशन्नाह—

**कपायान् संवृणु प्राज्ञ !, नरकं यदसंवरात् । महातपस्विनोऽप्यापुः, करटोत्करटादयः ॥ २५७ ॥ १९ ॥**

**धनवि०**—**हे प्राज्ञ !**—पंडित **कपायान्**—क्रोधमानमायालोभान् **संवृणु**—सम्यक्प्रकारेणाच्छादय, क्षयेणोपशमेन क्षयोपशमेन वाऽनुदयावस्थान् कुर्वित्यर्थः, **यदसंवराद्**—येपां कपायाणामसंवराद्—उदयात्**करटोत्करटादयः**—करटोत्करटप्रमुखा **महातपस्विनः**—उग्रतपःकर्त्तारोऽपि **नरकमापुः**—प्रापुः । तत्र करटोत्करटचरितं चेदं—करटोत्करटौ साधू, मातृष्वस्रेयकौ मिथः । भ्रातरौ ब्राह्मणावध्यापकावासाद्व्रतव्रतौ ॥ १ ॥ अभूत्पुर्यां कुणालायास्तयोर्निर्धमनाव्रतः । वर्पासु वसतिर्नीरैः, प्लाव्यतां मेति देवता ॥ २ ॥ अटालयत्कुणालाया,

---

**रत्न०**—अथ विशेपतो निरूप्य सामान्यतः सर्वेंद्रियाण्याश्रित्य निरूपयति—**विपयेंद्रियसंयोगादिति०** व्याख्या—विपयाः—शब्दरूपगंधरसस्पर्शाः पचेंद्रियाणि पञ्च, विपयाश्च इंद्रियाणि च विपयेंद्रियाणि तेपां संयोग—एकत्र मिलनं तस्याभावात्के के न ये संयता—विरताः संतिष्ठन्ति सति ?, अपि तु सर्वेऽपि सयता एवेति, तुरिति विशेपे, रागद्वेपमनोयोगानामभावाद्ये संयता—विरताः संति तान् प्रति स्तवीमि ॥२५६॥१८॥

**रत्न०**—अथेंद्रियाण्याश्रित्य संवरमुक्त्वा कपायानाश्रित्याह—**कपायानिति०** व्याख्या—हे प्राज्ञ ! त्वं कपायान्—क्रोधमानमायालोभान् संवृणु,

वृष्टिं ज्ञात्वा च तज्जनैः। निस्सार्येते स्म तौ साधू, क्रुद्धोऽथ करटोऽवदत् ॥ ३ ॥ वर्ष देव ! कुणालायामुवाचोत्कुरटस्ततः। दिनानि दश पंचाथ, पुनः करट ऊचिवान् ॥ ४ ॥ मुष्टिप्रमाणधाराभिः, पुनरुत्करटोऽभ्यधात्। यथा दिवा तथा रात्रावित्युक्त्वा तौ निरीयतुः ॥ ५ ॥ कुणालाऽपि पंचदशदिनैरच्छिन्नवर्षणात्। सार्द्धं जनपदेनांभःपूरैः प्रवाह्यताखिला ॥ ६ ॥ तृतीये वत्सरे तौ च, साधू साकेतपत्तने। कालं कृत्वा सप्तमोर्व्यां, द्वाविंशत्यतरायुषौ ॥ ७॥ कालाख्यनरकावासे, संजायेते स्म नारकौ। कुणालाया विनाशस्य, कालाद्वर्षे त्रयोदशे ॥ ८ ॥ उत्पन्नं केवलं ज्ञानं, श्रीमद्वीरजिनेशितुः ॥ इति ॥ २५७ ॥ १९ ॥

पूर्वमुपदिष्टमपि योगनिरोधं सिंहावलोकनन्यायादनंतरोक्तार्थसमर्थनार्थं च प्रकारान्तरेणोपदिशति—

**यस्यास्ति किंचिन्न तपोयमादि, ब्रूयात् स यत्तत्तुदतां परान् वा।**
**यस्यास्ति कष्टासमिदं तु किं न, तद्भ्रंशभीः संवृणुते स योगान्? ॥ २५८ ॥ २० ॥**

**धनवि०**—यस्य पुरुषस्य **तपोयमादि**—तपःसंयमादि सुकृतं **किंचित्**—किमपि **नास्ति** स पुरुषो **यत्तत्**सावद्यं निरर्थकं वाऽसमंजस-

---

त्यजेतिभावः, सर्वथा त्यक्तुमशक्तोऽल्पान् कुरु वा, येषामसंवराद्—अनिरोधान् महातपस्विनोऽपि करटोत्करटादयो नरकं—निरयमापुः—प्रापाः 'वर्ष मेघ कुणालायां, दिनानि दश पंच च। युगधाराप्रमाणेन, यथा रात्रौ तथा दिवे ॥ १ ॥' ति वचसाऽखंडधारावृष्टमेघप्लावितकुणाला-नगरीपातकात् करटोत्करटनामानौ मुनी नरकं गतौ, अनयोर्दृष्टांतविस्तरस्तु **कर्पूरप्रकरवृत्त्यादिभ्योऽवसेयो**, विस्तरभयान्न प्रतन्यत इति, एवमादयोऽन्येऽप्यूह्याः ॥ २५७ ॥ १९ ॥

**रत्न०**—अथ मनोयोगादिसंवरमाह—**यस्यास्तीति०** व्याख्या—हे संयमिन् ! यस्य किंचिदपि तपः—चतुर्थषष्ठाष्टमादिरूपं यमा—अहिंसा-

गृस्या वचो ब्रूयाद्—वदेदित्यर्थः, वा—अथवा स पुमान् परान्—स्वव्यतिरिक्तान् तुदतां—अशुभमनोवाक्काययोगादिना व्यथा जनयतु; तु—पुनर्यस्य पुंस इदं तपःसंयमादि सुकृतं कष्टाप्तं—बहुभयासेन प्राप्तमस्ति तद्भ्रंशभीः—तपःसंयमभ्रंशभीरुः स पुमान् मनोवाक्काययोगान् किं न संवृणुते?—कथं न नियंत्रयतीत्यर्थः ॥ २५८ ॥ २० ॥

सकलयोगसंवरेषु मनोयोगसंवरस्य प्राधान्यं ख्यापयन्नाह—

> भवेत् समग्रेष्वपि संवरेषु, परं निदानं शिवसंपदां यः ।
> त्यजन् कषायादिजदुर्विकल्पान्, कुर्यान्मनःसंवरमिद्धधीस्तम् ॥ २५९ ॥ २१ ॥

धनवि०—समग्रेषु—सर्वेष्वपि कषाययोगादिसंवरेषु शिवसंपदां परम्—उत्कृष्टं निदानं—परमं कारणं यो भवेत्तं मनःसंवरमिद्धधीः समृद्धबुद्धिः पुमान् कषायादिजदुर्विकल्पान्—क्रोधादिजन्यनानोल्लेखमयदुष्टचिंतनानि त्यजन्—परिहरन् कुर्यात्—करोतु ॥२५९॥२१॥

---

सुकृतानि पञ्चमहाव्रतानि तावल्लक्षणाः पञ्च ते आदौ यस्य तत्तपोयमादि नास्ति सः पुमानविरत इत्यर्थः यत्तद् असबद्धं ब्रूयाद्—जल्पेद्, वा—अथवा परान् प्राणिनः तुदतां—व्यथतां, तुदतीति विशेषे, यस्येदं तपोयमादि कष्टेन—कायक्लेशेनाप्तं—प्राप्तं वर्त्तते तस्य तपोयमादिनो भ्रंशो—नाशस्तस्माद्भीः—भयं यस्य स तद्भ्रंशभीः पुमान् मनआदियोगान्—मनोवाक्कायसंबंधिनो व्यापारान् किं न संवृणुते?, तस्य तु संवरीतुं युक्ता इति, यस्य किंचित्कंस्यादिभाजनमपि गंतव्यं नास्ति स कदाचिदनावृताद्वा निद्रातु, परं यस्य स्वर्णमण्यादिवस्तु गंतव्यमस्ति सोऽनावृताद्वाः कथं निद्रात्वित्यर्थः ॥ २५८ ॥ २० ॥

रत्न०—तत्रापि मनःसंवरस्योत्कर्षमाह—भवेत्समग्रेष्विति० व्याख्या—यो मनःसंवरः समग्रेष्वपि संवरेषु सत्सु शिवसंपदां—मोक्षश्रीणां

अथैतद्द्वारमुपसंहरन्नुपदिशति—

तदेवमात्मा कृतसंवरः स्यान्निःसंगताभाक् सततं सुखेन ।
निःसंगभावादथ संवरस्तद्द्वयं शिवार्थी युगपद्व्रजेत ॥ २६० ॥ २२ ॥

धनवि०—तत्—तस्मात्कारणादेवम्—उक्तेन प्रकारेण कृतसंवरो—निष्पादितसकलकषाययोगनिरोधः सततं—निरंतरं सुखेन—अप्रयासेन निस्संगताभाक्—पुत्रकलत्रादिममताराहित्यवानात्मा—जीवो भवेत्, अथ पुनर्निःसंगभावादात्मनः संवरो भवेदिति, अत्र संव्रियंते—निवार्यंते समागच्छंति कर्माणि यस्मात्स संवरः; ननु निःसंगतायां सत्यां संवरो भवति, सति च संवरे निस्संगता भवति, तथा चान्योऽन्याश्रय इति चेन्न, कचित्कस्यचिन्निःसंगतायां सत्यां संवरो भवति, कस्यचित्कचित्संवरे सति निःसंगता जायते, इति पुरुषभेदेन कालभेदेन स्थानभेदेन वाऽन्योऽन्याश्रयस्यासत्त्वात्; न चैवमननुगमः, प्रामाणिकगौरववत्प्रामाणिकाननुगमस्याप्यदोषत्वात्; शिवार्थी

---

परं निदानं—हेतुर्भवेत्, मनःसंवरं विना सर्वेऽपि वचःकायिकाः संवरा निरर्थकाः इत्यर्थः, इद्धा—दीप्ता धीर्यस्य स इद्धधीर्जनस्तं मनःसंवरं कुर्यात्, किं कुर्वन्?—त्यजन्, कान्?—कषायादिभ्यो जाता ये दुर्विकल्पा—दुष्टचिंतनानि तान्, आदिशब्देनाविरत्यादिग्रहणमिति ॥ २५९ ॥ २१ ॥

अथैतदधिकारोपसंहारमाह—

रत्न०—तदेवमात्मेति० व्याख्या—तत्—तस्मात्कारणादेवं अमुना प्रकारेणाव्यापृतसंवरः सन् सततं—निरन्तरं सुखेन निःसंगतां भजतीति निस्संगताभाक् स्याद्, अथ निःसंगभावात्—निरीहभावात् कृतसंवरः स्याद्, अन्योऽन्यं कार्यकारणव्यवहारोऽस्तीत्यर्थः, तत्कारणाच्छिवार्थी

पुरुषस्तत्—निःसंगतासंवरलक्षणद्वयं युगपत्—समकालं मोक्षसाधनं भजेत—श्रयेदिति ॥ २६० ॥ २२ ॥

इति श्रीतपा० श्रीधनविजयगणिविरचितायामध्यात्मकल्पद्रुमटीकायां मिथ्यात्वादिसंवरोपदेशनाम्नी चतुर्दशी पदपद्धतिः ॥१४॥

पुमान् द्वयं—संवरनिस्संगभावोन्नतिं युगपत्—समकालं भजेतेति ॥ २६० ॥ २२ ॥ इति चतुर्दशोऽधिकारः ॥

श्रीशान्तिचंद्रवरवाचकदुग्धसिंधुलब्धप्रतिष्ठवरवाचकरत्नचंद्रः। अध्यात्मकल्पफलदस्य चकार वृत्तिं, तत्रागमक्षुवन १४ मानकृतोऽधिकारः ॥१४॥

## १५ शुभप्रवृत्तिशिक्षोपदेशाधिकारः ।

शुद्धावश्यकताः

अनंतरद्वारे मिथ्यात्वादिसंवरोऽशुभव्यापारनिवृत्तिलक्षणः प्रतिपादितः, तेन तत्प्रतिपक्षशुभव्यापारप्रवृत्तिद्वारं दर्शयन्नाह, यद्वाऽनंतरद्वारे मिथ्यात्वादिसंवर उपदिष्टः, स च शुभप्रवृत्त्यधीन इति तद्द्वारं दर्शयन्नाह—

अथ शुभप्रवृत्तिशिक्षोपदेशः इति सुगमं; तत्र शुभप्रवृत्तौ प्रथमं प्रतिदिनानुष्ठेयषडावश्यकप्रवृत्तिमुपदिशति—

आवश्यकेष्वातनु यत्नमाप्तोदितेषु शुद्धेषु तमोऽपहेषु ।<br>
न हंत्यभुक्तं हि न चाप्यशुद्धं, वैद्योक्तमप्यौषधमामयान् यत् ॥ २६१ ॥ १ ॥

धनवि०—आप्तोदितेषु—भगवत्प्रतिपादितेषु शुद्धेषु—निर्दोषेषु—सामायिकादिविषयकदोषरहितेषु तमोऽपहेषु—पुराकृतपापहरेष्वावश्यकेषु—सामायिक १ चतुर्विंशतिस्तव २ वंदनक ३ प्रतिक्रमण ४ कायोत्सर्ग ५ प्रत्याख्याना ६ ख्येषु नित्यकर्त्तव्येषु यत्नं—प्रमादराहित्यलक्षणं प्रयत्नमातनु—आ—समंतात्कुर्वित्यर्थः; हीति निश्चितं, यद्—यस्माद्वैद्योक्तमपि—धन्वंतरिप्रभृत्युक्तमप्यौषधं—भेषजमभुक्तम्—अनास्वादितमामयान्—रोगान्न हंति—नापनयतीति, च पुनरशुद्धं—सदोषं वैद्योक्तमप्यौषधमामयान्न हंतीत्यर्थः, अत्रावश्यकमुपमेयमौषधमुपमानं भगवानुपमेयो वैद्य उपमानमावश्यकप्रयत्नकरणमुपमेयमौषधभक्षणमुपमानमावश्यके दोषा उपमेयमौषधे योगवैपरीत्यादयो दोषा उपमानमिति दृष्टांतदार्ष्टांतिकयोजना। तत्र दोषस्वरूपं चेदं, तत्र सामायिकदोषाः—पल्हत्थी १ अथिरासण २ दिसिपरिवत्ती य ३ कज्ज ४ वट्टंभं ५। अइअंगुवंगगोवण ६ आलस ७ करडुक ८ मल ९ कंडू १० ॥ १ ॥ विस्सामण ११ तह उंघण १२ इय बारसदोसवज्जियं जस्स। कायसमिईविसुद्धं एगविहं तस्स सामइयं ॥ २ ॥ कुवयण १ सहसक्कारो २ लोभण ३ अहछंदवयण ४ संखेवा ५। कलहं ६ विगहो ७ हासो ८ तुरिओ ९ गमणागमणवादी १० ॥३॥ वज्जेइ दोसदसयं वयणभवं जो नरो स सामइओ। तस्स तणुवयणसुद्धं दुविहं सामाइयं होइ ॥ ४ ॥ अविवेओ १ जसकित्ती २ पहत्थी(लहज्झी) ३ गव ४ भय ५ नियाणत्थी ६। संसय ७ रोस ८ अविणओ ९ भन्तिचयो १० दस य माणसिया ॥ ५ ॥ बत्तीसदोससुद्धं तणुवयमणसुद्धिसंभवं तिविहं। जस्स हवइ सामइयं तस्स वसे सवसुहलच्छी ॥ ६ ॥ एते द्वात्रिंशज्जीर्णकुलकप्रतिपादिताः। वंदनके द्वात्रिंशद्दोषाः "दोस अणाढिअथद्धिअ" इत्यादिभाष्यगाथोक्ता

---

रत्न०—आवश्यकेष्विति० व्याख्या—हे यते! हे आर्हत त्वमावश्यकेषु—अवश्यकर्तव्येषु प्रतिक्रमणसामायिकपौषधोपवासालोचनाग्रहणादिषु यत्नम्—उद्यममातनु—कुर्वित्यर्थः, किंलक्षणेषु?—आप्तोदितेषु—सर्वज्ञोदितेषु, अत एव शुद्धेषु—निर्मलेषु, निर्मलत्वादेव तमांसि—पापान्यपघ्नंतीति तेषु,

भाष्यव्याख्यानतो व्याख्येयाः । कायोत्सर्गावश्यकदोषास्त्वेकोनविंशतिः "घोडगलयखंभाइ" इत्यादिभाष्यगाथोक्तास्तत एव सविस्तरमवसेया इति ॥ २६१ ॥ १ ॥

कर्मक्षपणहेतुत्वसाधर्म्येणावश्यकप्रभृत्युपदेशानंतरं तपःप्रवृत्त्युपदेशमादिशति—

तपांसि तन्याद्विविधानि नित्यं, मुखे कटून्यायतिसुंदराणि ।
निघ्नंति तान्येव कुकर्मराशिं, रसायनानीव दुरामयान् यत् ॥ २६२ ॥ २ ॥

धनवि०—मुखे—करणकालस्यादौ कटूनि—क्षुत्पिपासादिसहनजनितदुःखोत्पादकत्वेन कटुकरसान्यायतिसुंदराणि—आयतौ—करणकालादुत्तरकाले तपोनिर्जनितशुभकर्मानुभवकाले सुंदराणि—आनंददायकानि विविधानि—नानाप्रकाराणि तपांसि—तपःकर्माणि नमस्कारसहितादिषाण्मासिकतपःपर्यंतानि नित्यम्—अनवरतं तन्यात्—कुर्यादिति; यद्—यस्मात्तान्येव तपांसि कुकर्मराशिं—अशुभकर्मसमूहं

---

[illegible] दृष्टांतमाह—हि—निश्चितं यथोक्तमर्योषध यद्—यतो हेतोरामयान्—रोगान् न हंति—नापनयति, किंलक्षणम्?—अभुक्तं सत्, न चाप्यशुद्धम्—[illegible], अत्रोपनयः सुगमत्वात्स्वयमभ्यूह्यः ॥ २६१ ॥ १ ॥

रत्न०—आवश्यकेषु तप आयातीति तपउपदेशमाह—तपांसि तन्यादिति० व्याख्या—यतिरार्हतो वा विविधानि—विचित्राणि षष्ठाष्टमार्द्ध-[illegible]गुणरत्नवत्सराचामाम्लवर्द्धमानधनर्षितपःप्रभृतीनि तपांसि तन्यात्—कुर्याद्, धातूनामनेकार्थत्वात् तनिः करणार्थे [illegible], अथवा विस्तारयेदिति च, किं०?—कटूनीव कटूनि—तीक्ष्णानि, कस्मिन्?—मुखे—आदौ, प्रथमतः क्रियमाणानि कष्टदायित्वात् कटूनीत्युपचारात्,

निघ्नंति–नितरां विनाशयंति, अत्र दृष्टांतमाह—इव–यथा **रसायनानि**–पारदप्रभृतीनि तथाविधभेषजानि **दुरामयान्**–कुष्ठप्रभृतिदुष्ट-रोगान्निघ्नंति, अत्र रसायनस्य तपःकर्मणश्चोपमानोपमेयभावः कुकर्मराशेर्दुरामयस्यापि चोपमानोपमेयभाव इति ॥ २६२ ॥ २ ॥

अथ ब्रह्मचर्यादिविषयां शुभप्रवृत्तिमुपदिशन्नाह—

**विशुद्धशीलांगसहस्रधारी, भवानिशं निर्मितयोगसिद्धिः ।**
**सहोपसर्गांस्तनुनिर्ममः सन्, भजस्व गुप्तीः समितीश्च सम्यग् ॥ २६३ ॥ ३ ॥**

**धनवि०—निर्मितयोगसिद्धिः** सन्ननिशं–निरंतरं **विशुद्धशीलांगलहस्रधारी** त्वं भव, अत्र **विशुद्धशीलांगसहस्रधारी**–विशुद्धं–निरतिचारं च तच्छीलं च–आचारो ब्रह्मचर्यरूपस्तस्याङ्गानि कारणानि "जे नो करंति मणसे"त्यादीनि तेषां सहस्रं धारयतीति तथा; **निर्मित-**

---

पुनः की० ?–आयतौ–उत्तरकाले स्वर्गादिसुखदायित्वात्सुंदराणि–मनोहराणि यद्–यस्मात्कारणात्तान्येव तपांसि कुकर्मणां–ज्ञानावरणीयादीनां राशिं–पुंजं निघ्नंतीव यथा रसायनानि–वैद्यैर्ज्वालितसुवर्णादिधातुसाधितानि विविधानि मुखे–आनने दीयमानानि कटूनि–दुरास्वादानि परमायतौ सुंदराणि दुरामयान्–दुष्टरोगान् राजयक्ष्मप्रभृतीन् घ्नंतीति ॥ २६२ ॥ २ ॥

**रत्न०**—अथ तपःकारी शीलवान् भवतीति शीलोपदेशमाह–**विशुद्धशीलांगेति०** व्याख्या—हे यते!–हे आर्हत! शीलस्य–सदाचार-स्यांगानीव शीलांगानि विशुद्धानि च तानि शीलांगानि च २ तेषा सहस्राण्यष्टादशप्रमाणानि धरसीत्येवंशीलो विशुद्धशीलांगसहस्रधारी भव, जे नो करंति मणसा निज्जियआहारसन्नसोइंदी । पुढवीकायारंभं खंतिजुआ ते मुणी वंदे ॥ १ ॥ इत्यादिगाथोक्ताष्टादशसहस्रगाथाप्रमाणस्वाध्यायधारको

योगसिद्धिः—निर्मिता—निष्ठां नीता योगस्य—मनोवाक्कायैकाग्र्यस्य ज्ञानदर्शनचारित्रसंनिपातलक्षणस्य वा योगानां वा—प्राणायामादीनां सिद्धिः—निष्पत्तिर्येन स तथा, च पुनस्तनुनिर्ममः सन्—शरीरममतारहितः सन्नुपसर्गान्—क्षुत्पिपासादीन् सह—क्षमस्व; च पुनः सम्यग्—यथागमोक्तरीत्या गुप्तीः—मनोगुप्त्यादिकाः समितीः—ईर्यासमित्यादिका भजस्व—सेवस्व ॥ २६३ ॥ ३ ॥

अथानंतरोक्तप्रवृत्तौ कारणभूतां प्रवृत्तिमुपदिशति—

स्वाध्याययोगेषु दधस्व यत्नं, मध्यस्थवृत्त्याऽनुसरागमार्थान् ।
अगौरवो भैक्षमदाविषादी, हेतौ विशुद्धे वशितेंद्रियौघः ॥ २६४ ॥ ४ ॥

धनवि०—त्वं स्वाध्याययोगेषु यत्नं—प्रयत्नं दधस्व—कुरुष्वेत्यर्थः, अत्र स्वाध्यायश्च—वाचनादिकः पंचप्रकारः योगाश्च—उद्देशस-

---

मनसोऽपि तात्पर्यार्थः; दुष्टमनोवचःकाययोगाना निवृत्तिकारणत्वाच्छीलाङ्गत्वं चैषामिति, कथम् ?—अनिशं—निरंतरं, किंल० ?—निर्मिता मनोवचःकायानां सिद्धिः—साधनं येन सः, निर्मितदुष्टमनोवचःकाययोगनिवृत्तिक इत्यर्थः, अथवा निर्मिता योगानामष्टांगाना सिद्धिर्येन स इत्यपि व्याख्याप्रपंचः, अन्यच्चोपसर्गान्—देवादिकृतान् यतिषु गजसुकुमालर्षिचिलातिपुत्रमेतार्यमुनिप्रभृतिवद्गृहस्थेषु कामदेवादिवत् सहस्व—क्षमस्व, परं किंलक्षणः सन् ?—तनौ—शरीरे निर्ममः सन्, तनुनिर्ममत्वे सत्येवोपसर्गसहनं भवतीति, तथा गुप्तीस्तिस्रो मनोवचःकायाना भजस्व, च पुनः समितीः पंचेर्याभाषैषणादाननिक्षेपपारिष्ठापनिका भजस्व, श्राद्धस्यापि कृतपौषधस्य कृतसामायिकस्य चोपसर्गसहनं गुप्तिसमित्याराधनं च भवतीति न काऽपि विप्रतिपत्तिः ॥ २६३ ॥ ३ ॥

रत्न०—अथ यतिः स्वाध्यायादिना मनो वशीकरोतीति स्वाध्यायाद्युपदेशमाह—स्वाध्याययोगेष्विति० व्याख्या—हे यते! त्वं स्वाध्यायानां—

स्वाध्यायादि

मुद्देशानुज्ञादिरूपानुष्ठानविशेषास्तेषु; च पुनर्मध्यस्थवृत्त्या—रागद्वेषराहित्येनागमार्थान्—सिद्धांतोक्तभावाननुसर—अनुगच्छ, आगमार्थानुसारेण विचरेति भावः, च—पुनस्त्वमगारवः सन्—ऋद्ध्यादिगारवरहितः सन् भैक्षं—भिक्षाकर्म कुर्वन्निति शेषः अट—भ्रमेत्यर्थः, विशुद्धे—निर्दोषे हेतौ—मोक्षकारणे ज्ञानदर्शनचारित्रलक्षणे अविषादी—श्रमरहितः सन्, पुनः किंविशिष्टः?—वशितेंद्रियौघः—जितेंद्रियसमूहः सन्, अथवा लाभेऽगारवः सन्नलाभेऽविषादी सन् भैक्षं—गौचरचर्यामट, विशुद्धे हेतौ समग्रभोगसामग्र्यां सत्यां वशितेंद्रियौघः सन्नित्यर्थः ॥ २६४ ॥ ४ ॥

पुनः शुभप्रवृत्तिमुपदिशति—

**ददस्व धर्मार्थितयैव धर्म्यान्, सदोपदेशान् स्वपरादिसाम्यान् ।**
**जगद्धितैषी नवभिश्च कल्पैर्ग्रामे कुले वा विहराप्रमत्तः ॥ २६५ ॥ ५ ॥**

---

पठितागमप्रभृतिशास्त्रप्रतिदिनस्मरणलक्षणाना योजनानि—करणानि योगास्तेषु, अथवा स्वाध्यायैः कृत्वा मनोवचःकायलक्षणेषु योगेषु यत्नं दधस्व—उद्यमं कुरु, स्वाध्यायैः कृत्वा मनोवचःकायान् संवृणु इत्यर्थः, तथा आगमार्थान्—अर्हत्प्रवचनाभिधेयानि मध्यस्थवृत्त्या—स्वकदाग्रहाननुसारेण यथार्थाननुसर—कथय, तथा कुरुष्वापीत्यनेन स्वमतकदाग्रहग्रस्तो जिनवचनमन्यथा मा वदेति सूचितं, तथा अगारव—ऋद्धिरससातगारवत्रयरहितः सन् भिक्षाणां समूहो भैक्षं तत्प्रति अट—गृहस्थगृहेषु याहीति, परं किंलक्षणः?—अविषादी—अप्राप्तौ कुत्सितप्राप्तौ वा विषादरहितः, क्वचिदगौरवो भैक्षमटेतिपाठे गौरवमभ्युत्थानादि, न विद्यते गौरवं यस्य सः अगौरवो भैक्षमट, भिक्षार्थं गतो मा बहुमानं वांछेत्यर्थः, त्वं किं०?—इत्यादिहेतौ इंद्रियजयकारणे विशुद्धे—निर्मले सति वशीकृत इंद्रियाणां श्रोत्रादीनामोघः—समूहो येन स इति ॥ २६४ ॥ ४ ॥

धनवि०—हे मुने! त्वं धर्मार्थितयैव स्वपरादिसाम्यान् धर्म्यान्—धर्मोपेतान्निष्पापानुपदेशान्—हितशिक्षावचनानि ददस्व—देहि, तत्र धर्मः—पुण्यं स एवार्थो यस्य स धर्मार्थी तस्य भावो धर्मार्थिता तया धर्मार्थितया, अत्र एवकारेण नतु वस्त्राहाराद्यर्थितया इत्यन्ययोगव्यवच्छेदः, स्वपरादिसाम्यान्—स्वश्च—आत्मा सुहृद्वा परश्च—आत्मव्यतिरिक्तः शत्रुर्वा स्वपरौ तावादी येषां ते स्वपरादयस्तेषां साम्यं—समभावः प्रतिपाद्यं येषु तान् स्वपरादिसाम्यान्, समतारसप्रतिपादकानित्यर्थः, आदिपदाद्दिहार १ कुसुमशय्याशिलातल २ मणिलोष्ट ३-तृणस्त्र्यादि ४ परिग्रहः, स्वपरादिसाम्यादितिपंचम्यंतपाठे तु स्वपरप्रमुखश्रोतृषु रागद्वेषराहित्येन समताभावादित्यर्थः; च पुनर्जगद्धितैषी—जगतां हितं—पथ्यमिच्छतीति, तथा सन्नप्रमत्तः—प्रमादरहितः सन् ग्रामे—वृत्त्यावृते उपलक्षणत्वाज्जनपदनगराकरादौ वा—अथवा शक्त्यभावे कुले—उग्रकुलराजन्यकुलक्षत्रियकुललक्षणे 'निक्खमाणो कुले २' इत्युत्तराध्ययनवचनाद्गृहे २ उच्चनीचलक्षणेऽजुगुप्सिते वा नवभिः कल्पैः—नवसंख्योपेतैः कल्पैः—साध्वाचारैः ऋतुबद्धकालेऽष्टौ मासकल्पाश्चतुर्मासककाले एकश्चतुर्मासककल्पः एवं प्रकारैर्विहर—विचर, एवं विहारे च भगवदाज्ञाऽऽराधिता स्याद्, आज्ञा चैवं 'मोत्तूण मासकप्पं अन्नो सुत्तंमि नत्थि उ विहारोत्ति' [मुक्त्वा मासकल्पं अन्यः

रत्न०—अथ स्वाध्यायकर्त्ता सदुपदेशवान् भवतीति सदुपदेशविषये उपदिशति—ददस्वेति० व्याख्या—हे यते! त्व धर्म एवार्थः—प्रयोजनं यस्यासौ धर्मार्थी तस्य भावो धर्मार्थिता तया एव, नतु स्वार्थनिष्ठत्वेन, सदा धर्म्यान्—धर्मसंबंधिन उपदेशान् ददस्व—देहि, कस्मात्?—स्वश्च परे च तावादौ येषां ते स्वपरादयस्तेषु साम्य—समत्व तस्माद्, असौ स्वो—मदीयो मदाज्ञाकारी अत एनं धर्मोपदेशं ददामि, एते परे—मिथ्यादृष्टयः अनाज्ञाकारिणः किं धर्मोपदेशदानेन? अथवाऽस्य रुचितकथने प्रीतिरिति रुचितमेव वदामीति, रागद्वेषौ मुक्त्वेत्यर्थः, आदिशब्देनेभ्यानिभ्यदात्रदातृप्रमुखग्रहणं। तथा त्वं जगतामिति 'ताद्ध्यात्तद्व्यपदेश' इति न्यायाज्जगद्वासिलोकाना हितैषी—हितस्पृहः सन् नवभिः कल्पैरप्रमत्तः—अप्रमादी सन्

सूत्रे नास्ति तु विहार इति ] कदाचित्संयमबाधकारिदुर्भिक्षग्लान्यादिकारणवशाद्द्रव्यतो मासकल्पातिक्रमे भावतो वसतिपाटकपरावर्त्तनेनापि चायमवश्यं विधेय एव, यदुक्तं—"कालाइदोसओ पुण न दव्वओ एस कीरए नियमा । भावेण उ कायव्वो संथारगवच्चयाईहि ॥ १ ॥"—मिति [ कालादिदोषतः पुनर्न द्रव्यत एष क्रियते । नियमात् भावेन तु संसारकव्यत्ययादिभिः कर्तव्यः ॥ १ ॥] ॥ २६५ ॥ ५ ॥

अथ शुभप्रवृत्तिमशुभनिवृत्तिं चोपदिशन्नाह—

**कृताकृतं स्वस्य तपोजपादि, शक्तीरशक्तीः सुकृतेतरे च ।**
**सदा समीक्षस्व हृदाऽथ साध्ये, यतस्व हेयं त्यज चाव्ययार्थी ॥ २६६ ॥ ६ ॥**

**धनवि०**—हे आत्मन् ! त्वं **स्वस्य**—निजस्य **कृताकृतं** तपोजपादि **हृदा**—हृदयेन **समीक्षस्व**—इदं तपो मया कृतमिदं न कृतमयं जपः कृतोऽयं च न कृत इति पर्यालोचय; अत्र तपश्च द्वादशभेदं जपश्च नमस्कारादिमंत्रजापस्तपोजपौ तौ आदौ—प्रथमं यस्य सुकृतस्य

---

विहर—विहारं कुरु, एकत्र मा वसेत्यर्थः, कस्मिन् ?—ग्रामे वा पुनः कुले—ग्रामैकदेशे एककुलनिवासस्थानरूपे, ग्रामान्तरादौ विहारकरणासामर्थ्ये सति, अथवा दुष्कालज्वरादौ विहारयोग्यदेशाभावे सतीति ज्ञेयं, मार्गशीर्षाद्याषाढपर्यंता अष्टौ मासा अष्टौ कल्पाः श्रावणभाद्रपदाश्विनकार्तिकाश्चत्वारो मासा एक एव कल्पस्तथैवाज्ञप्तत्वात्तीर्थकृद्भिरिति नव कल्पाः, इदमौत्सर्गिकं वचनम्, अपवादतः षण्मासानेकस्मिन्नेव ग्रामादौ स्थेयमित्याज्ञप्तत्वादिति ॥ २६५ ॥ ५ ॥

**रत्न०**—अथ सदुपदेशवान् कृताकृततपःप्रभृतिविचारको भवतीति तत्रार्थे आह—**कृताकृतमिति०** व्याख्या—हे यते !—हे आर्हत त्वं स्वस्य—आत्मनस्तपोजपादिकर्म कृतं चाकृतं च समीक्ष्य—विचार्येदं मया तपः कृतमिदं च न कृतं, तथा अयं जपः कृतो न कृतश्चेति समीक्ष्येत्यर्थः, आदि-

मचयोजपादि, कृतं च—निर्मितमकृतं च—अनिर्मितं कृताकृतमिति, च पुनः स्वस्य सुकृतेतरे—सुकृतं च—पुण्यमितरच्च—पापं समाहारद्वंद्वे सुकृतेतरत्—पुण्यपापं तस्मिन्, शक्तीः—सामर्थ्यान्यशक्तीः—असामर्थ्यानि हृदा—मनसा सदा—सर्वकालं समीक्षस्व—इदं सुखसाध्यं तपोजपादिसुकृतं शक्यमिदं च कष्टसाध्यं तपोजपादिसुकृतमशक्यमिदं चाल्पप्रमादसेवनलक्षणं पापं शक्यमिदं च नृपांगनाद्यासेवनलक्षणं पापमशक्यमिति सम्यग्विलोकयेत्यर्थः; अथ—समीक्षणानंतरमव्ययार्थी—मोक्षार्थी सन् शक्त्यविषयस्य सुकृतस्यासाधकत्वेन साध्ये—शक्तिगोचरे सुकृते यतस्व—यत्नं कुरुष्व; च पुनर्हेयं—शक्यमशक्यं च पापमव्ययार्थी सन् त्रिधा परिहर—मुंचेत्यर्थः ॥ २६६ ॥ ६ ॥

अथ 'परपीडावर्जनाद्योगत्रयस्य शुद्धिर्भवती'ति दर्शयन्नुपदिशति—

**परस्य पीडापरिवर्जनात्ते, त्रिधा त्रियोग्यप्यमला सदाऽस्तु ।**
**साम्यैकलीनं गतदुर्विकल्पं, मनो वचश्चाप्यनघप्रवृत्ति ॥ २६७ ॥ ७ ॥**

---

शक्तेन क्रियानुष्ठानादीना ग्रहण, तया शक्तीरशक्तीश्च समीक्ष्य, साप्रतं ममास्मिन् तपसि जपे वा शक्तयः सति? उत न संतीति च, ताः प्रति समीक्ष्य, तथा सुकृतं सुकृतादितरद्—असुकृतं पुण्यपापं च ते उभे अपि प्रति समीक्ष्य, अस्मिन् कृते सुकृतं भावि उत चास्मिन् कृतेऽसुकृतं भावीत्यपि समीक्ष्येत्यर्थः, कथ?—सदा—निरंतर, केन?—स्वहृदा—स्वहृदयेन, उत्तमाना गुरूपदेशो बीजप्राय एव भवेत्, तद्विस्तरस्तु स्वहृदयविचारणजलसेकाद्भवति, अनेन सर्वं समीक्ष्य साध्ये—स्वस्य साधनयोग्ये यतस्व—उद्यमं कुरु, च पुनर्हेयं—त्याज्यं सुकृतेतरदित्यर्थः त्यज—मुंच, कि० ?—अव्ययस्य—मोक्षस्यार्थी सन्, एतत्सर्वं विचारपूर्वकं कुर्वित्यर्थः ॥ २६६ ॥ ६ ॥

धनवि०—**परस्य**—स्वव्यतिरिक्तस्य प्राणिनस्त्रिधा **पीडापरिवर्जनात्**—करणकारणानुमतिलक्षणाप्रकारत्रयेण बाधानिषेधात्ते—तव **त्रियोग्यपि**—मनोवचःकायलक्षणा योगत्रय्यपि **सदा**—सर्वकालम**मला**—निष्पापाऽ**स्तु**—भवतु; अत्र यत इत्यध्याहार्यं, तेन यतः कारणात्त्रिधा परस्य पीडावर्जनात्तव **मनोऽपि साम्यैकलीनं**—केवलसमताभावभावितं **गतदुर्विकल्पं**—नष्टदुष्टचिंतासंतानं च, भवतीति योगः, च पुनः परस्य पीडापरिवर्जनात्तव च **वचोऽपि**—वचनमप्य**नघप्रवृत्ति**—निरवद्यव्यापारं, भवतीति योगः । ननु योगत्रयस्य शुद्ध्यधिकारे प्रकृते मनोयोगवाग्योगयोः शुद्धिरत्रोक्ता कथं न काययोगस्य शुद्धिरिति चेन्न, काययोगशुद्धेरितरापेक्षया सुखसाध्यत्वादिति ॥ २६७ ॥ ७ ॥

अथानंतरोक्ताया दुःसाध्याया मनःशुद्धेरुपायं दर्शयन्नुपदिशति—

**मैत्रीं प्रमोदं करुणां च सम्यग्, मध्यस्थतां चानय सात्म्यमात्मन्! ।**
**सद्भावनास्वात्मलयं प्रयत्नात्, कृताविरामं रमयस्व चेतः ॥ २६८ ॥ ८ ॥**

---

रत्न०—अथ सद्विचारवान् त्रियोगीं निर्मलां धत्ते इत्यर्थे आह—**परस्य पीडेति०** व्याख्या—हे आत्मन्! ते—तव परस्य—स्वस्माद्भिन्नस्य पीडापरिवर्जनात् मनोवचःकायरूपाणा योगानां समाहारस्त्रियोगी अप्यमला—विमला विशुद्धाऽस्तु, पापपंकरहितेत्यर्थः । कथं?—त्रिधा—करणकारणानुमतिभिः, कथं?—निरंतरं, अथ मनोवचसोर्दुर्निवारणत्वेन विशेषतः पृथक् निर्दिशन्नाह—मनो वचश्चापि अनघा प्रवृत्तिर्यस्य तदनघप्रवृत्त्यस्तु, किंलक्षणं?—गता दुर्विकल्पा—दुष्टचिंतनानि दुष्टजल्पनानि वा यस्मात्तद्, ईदृशी एव मनोवचसी अनघप्रवृत्तिनी स्त इति द्वे अपि समर्थविशेषणे इति, अथवा साम्यैकलीनं गतदुर्विकल्पमस्त्विति मनस एव विशेषणं, वचश्चाप्यनघप्रवृत्ति अस्त्विति वचस एव विशेषणमित्यपि व्याख्यानं कार्यं ॥ २६७ ॥ ७ ॥

धनवि०—हे आत्मन्! मैत्रीं च पुनः प्रमोदं च पुनः करुणां च पुनर्मध्यस्थतां सम्यग्—गुरूक्तयुक्त्या शास्त्रोक्तयुक्त्या वा सात्म्यम्—आत्मना सदैकीभावमानय—प्रापय; मैत्रीप्रमोदकारुण्यमाध्यस्थ्यलक्षणं "मा कार्षीत्कोऽपि पापानि, मा च भूत्कोऽपि दुःखितः" इत्यादिश्लोकैः पूर्वद्वारे प्रतिपादितं कियदिति, शेषं सविस्तरं योगशास्त्रवृत्तेरवसेयं। च पुनरात्मलयं—संप्राप्ततन्मयस्वभावं यथा स्यात्तथा कृताविरामं—निरंतरं यथा स्यात्तथा सद्भावनासु—द्वादशसु प्रसिद्धासु चेतो—मानसं प्रयत्नाद्—उद्यमात्प्रमादराहित्याद्रमयस्व—क्रीडाविषयं कुरुष्व ॥२६८॥८॥

अथानंतरोक्तमनःशुद्धिकरणोपायं तत्फलं च दर्शयन्नुपदिशति—

कुर्या न कुत्रापि ममत्वभावं, न च प्रभो! रत्यरती कषायान्।
इहापि सौख्यं लभसेऽप्यनीहो, ह्यनुत्तरामर्त्यसुखाभमात्मन्! ॥ २६९ ॥ ९ ॥

---

रत्न०—अथ वियोगीनेमस्य मैत्र्यादिभजनेन भवतीत्याह—मैत्रीं प्रमोदमिति० व्याख्या—हे आत्मन्! मैत्रीं—परहितचिंतालक्षणामानय—आत्मनि सात्म्यतां प्रापय कुर्वित्यर्थः, तथैव प्रमोदं—परसुखं दृष्ट्वा संतोषकरणरूपं, तथा करुणा—परदुःखनिवारणरूपा च पुनर्मध्यस्थता—परदोषोपेक्षणलक्षणामानय, कथं?—सम्यक् त्रिधा मनोवचःकायशुद्ध्या, च पुनर्हे आत्मन्! एवं चतुर्भिर्मैत्रीप्रमोदकरुणामध्यस्थताकरणलक्षणहेतुभिः साम्यं—समतामानय, रागद्वेषानुपेतत्वमित्यर्थः, तथा साम्यकरणेनैव सद्भावनासु चेतः—चित्तं रमयस्व, किंलक्षणम्?—आप्तो लय—ऐकाग्र्यं येन तत्, कस्मात्?—प्रयत्नाद्—उद्यमात्पापनिवारणादित्यर्थः; कथं?—कृताविरामं—कृतानुपरमं यथा स्यात्तथा अविश्रान्तमित्यर्थः, अथवा सद्भावनासु सु—सुष्ठु आप्तः—प्राप्तो लयो येन तत्सद्भावनासात्म्यमित्यलं ॥ २६८ ॥ ८ ॥

निर्मल-
त्वादि

धनवि०—हे प्रभो!—हे समर्थ! कुत्रापि—शय्योपधिपुस्तकादिवस्तुनि ममत्वभावं—ममेदमिति बुद्धिलक्षणां ममतां न कुर्या—मा विदध्याः, च पुना रत्यरती न कुर्याः, तत्र रतिश्च—सुंदरवस्तुष्वासक्तिलक्षणेष्टविपयेषु मोहनीयोदयाच्चित्ताभिरतिर्वा, अरतिश्च—असुंदरवस्तुनि प्रद्वेपलक्षणाऽनिष्टविषयेष्वरतिमोहनीयोदयाच्चित्तोद्वेगो वा, च पुनः कषायान्—क्रोधादीन्न कुर्याः; हि—यतः कारणाद्धे आत्मन्निहापि—मर्त्यलोकेऽप्यनुत्तरामर्त्यसुखाभम्—अनुत्तरविमानवासिसुरानुभवयोग्यसुखसदृशं सौख्यं—सुखमनीहो—निःस्पृहः सन् लभसे—अधिगच्छसि; ममतादिदोषरहितस्य साधोरिहापि सर्वातिशायि सुखं भवतीति भावः, यदुक्तं—"नैवास्ति राजराजस्ये"त्यादिनेति ॥ २६९ ॥ ९ ॥

अथ शुभप्रवृत्तिशिक्षोपदेशमुपसंहरन्नाह—

**इति यतिवरशिक्षां योऽवधार्य व्रतस्थश्चरणकरणयोगानेकचित्तः श्रयेत।**
**सपदि भवमहाब्धिं क्लेशराशिं स तीर्त्वा, विलसति शिवसौख्यानंत्यसायुज्यमाप्य ॥ २७० ॥ १० ॥**

रत्न०—अथ मैत्र्यादि तु ममत्वत्यागेन भवतीत्याह—कुर्या न कुत्रापीति० व्याख्या—हे आत्मन्! हे प्रभो!—हे समर्थ त्वं कुत्रापि वस्तुनि ममत्वस्य भावो—भावनं चिंतनमित्यर्थः तं न कुर्या—विदध्याः, च पुनः रतिः—रागो अरतिः—तदितरा ते उमे अपि न कुर्याः, शुभे वस्तुनि रतिमशुभे वस्तुन्यरतिमित्यर्थः, तथा कषायांश्चाप्येवमकुर्वन् त्वमिहापि—इह लोकेऽप्यनुत्तराणां—विजय १ वैजयंत २ जयंता ३ पराजित ४ सर्वार्थसिद्धानां ५ पंचानाममर्त्या—देवास्तेषां सुखं तेनाभं—सदृशं सौख्यं हि यस्मात्कारणाल्लभसेऽपि—प्राप्नोष्यपि, अपिः संभावनायां, त्वं कीदृशः?—न विद्यते ईहा—वाछा अवंतीसुकुमालस्येव नलिनीगुल्मविमान इव कस्मिन् वस्तुनि यस्य सः, अनुत्तरविमानामराणां सर्वेषां समानत्वात्सुखमप्यनुत्तरं, ततस्तत्सुखस्य ग्रहणमिति ॥ २६९ ॥ ९ ॥

सौख्यवि-
लासः

धनवि०—यो व्रतस्थो-यः साधुरिति—अमुना प्रकारेणोक्तां यतिवरशिक्षां—यतिवरा—मुनिवरास्तीर्थंकरा गणधराः पूर्वाचार्या वा तेषां शिक्षां—हितोक्तिमवधार्यैकचित्तः—तदेकाग्रमनाः सन् चरणकरणयोगान्—चरणसप्ततिकरणसप्ततिलक्षणान् योगान्—संयमव्यापारान् श्रयेत—सेवेत, तत्र चरणसप्ततिः 'वय ५ समणधम्म १० संजम १७ वेयावच्चं १० च बंभगुत्तीओ ९। नाणाइतियं ३ तव १२ कोहनिग्गहाइ ४ चरणमेयं ॥१॥' इतिरूपा, करणसप्ततिश्च—'पिंडविसोही ४ समिई ५ भावण१२ पडिमा १२ य इंदियनिरोहो५। पडिलेहण२५गुत्तीओ ३ अभिग्गहा ४ चेव करणं तु ॥१॥' इतिरूपा, स साधुः सपदि—शीघ्रं क्लेशराशिं भवमहाब्धिं—संसारमहासमुद्रं तीर्त्वा—निस्तीर्य च पुनः शिवसौख्यानंत्यसायुज्यमाप्य—प्राप्य विलसति—सौख्यमनुभवतीत्यर्थः, अत्र क्लेशानां—जन्मजरामरणक्षुत्पिपासापरिभवादिलक्षणानां राशिः—समूहो यत्र स तथा तं क्लेशराशिमिति भवमहाब्धिविशेषणं, किंच—शिवसौख्यस्य—मोक्षसुखस्यानंत्यम्—अविनाशिता तया सह सायुज्यं—गदितं, यदुक्तमभिधानचिंतामणौ 'ब्रह्मसायुज्य'मित्यस्य व्याख्याने "सह युग्—योगोऽस्येति सयुग् तस्य भावः सायुज्यं" शिवसौख्यानंत्य-

---

रत्न०—अथ पञ्चदशाधिकारस्योपसंहारमाह—इति यतिवरशिक्षामिति० व्याख्या—इति—अमुना प्रकारेण यो व्रतस्थो—यतिर्यतिवराणां—साधुमुख्यानां शिक्षामवधार्य—चित्ते धृत्वा चरणकरणसप्ततिगाथोक्तान् चरणकरणयोगान् श्रयेत, किंल० ?—एकस्मिन् ध्यातव्ये पदार्थे चित्तं यस्य स एकचित्तः अव्यग्रमना इत्यर्थः, स यतिः शीघ्रं भवमहाब्धिं—ससारसमुद्रं तीर्त्वा शिवस्य—मोक्षस्य सौख्यानामानंत्यम्—अनंतत्वं तेन सह युग्—योगोऽस्यास्तीति सयुग् सयुजो भावः सायुज्यमाप्य—प्राप्य विलसति—विलासं करोति, अनंतसुखमनुभवतीत्यर्थः, भवमहाब्धिं किंल० ?—क्लेशानां—कष्टानां राशिरिव क्लेशराशिः क्लेशानां राशिर्यत्रेति वा तम्, अत्र यतिवरेत्युक्तेऽप्युपलक्षणाच्छ्राद्धवरेत्यपि ग्राह्यं, कियद्भिर्गुणैर्यतिसमानत्वाच्छ्रावकयतित्वा-

सायुज्यमिति ॥ २७० ॥ १० ॥

इतिश्रीतपागच्छे महोपाध्यायश्रीधनविजयगणिविरचितायामध्यात्मकल्पद्रुमटीकायां
शुभप्रवृत्तिशिक्षोपदेशनाम्नी पंचदशी पदपद्धतिः ॥ १५ ॥

## १६ साम्यसर्वस्वाधिकारः ।

अथानंतरोक्तशुभप्रवृत्तिः साम्याधीनेति साम्यरहस्यद्वारं प्रतिपादयन्नाह, यद्वाऽनंतरोक्तानि पंचदश द्वाराणि साम्यकारणान्युपदिष्टानीति साम्यरहस्यद्वारं प्रतिपादयन्नाह, अथवा साम्यमयमध्यात्मकल्पद्रुमाभिधानशास्त्रमुपसंजिहीर्षुः साम्यरहस्यद्वारं प्रतिपादयन्नाह—

**अथ ग्रन्थोपसंहाराय साम्यसर्वस्वमिति स्पष्टम्**, अत्र प्रतिपाद्यत इति शेषः; अत्र प्रतिज्ञातमेव प्रथममुपदिशति—

**एवं सदाऽभ्यासवशेन सात्म्यं, नयस्व साम्यं परमार्थवेदिन् ! ।**
**यतः करस्थाः शिवसंपदस्ते, भवंति सद्यो भवभीतिभेत्तुः ॥ २७१ ॥ १ ॥**

---

द्वेति ॥ २७० ॥ १० ॥ इति पञ्चदशोऽधिकारः ॥

श्रीशान्तिचंद्रवरवाचकदुग्धसिंधुलब्धप्रतिष्ठवरवाचकरत्नचंद्रः । अध्यात्मकल्पफलदस्य चकार वृत्तिं, चक्रेऽगमद्विवृतपञ्चदशोऽधिकारः ॥१५॥

धनवि०—हे परमार्थवेदिन्!—हे तात्त्विकपदार्थज्ञ एवम्—अमुना पंचदशद्वारोक्तप्रकारेण सदा—सर्वकालमभ्यासवशेन—पुनः २ करणलक्षणाभ्यासाय तद्योगेन साम्यं—समतां सात्म्यं—स्वात्मप्रकृत्या सहैकीभावं नयस्व—आपयस्व; यतः साम्यैकभावात्सद्यः—शीघ्रं भवभीतिभेत्तुः—संसारभयभेदकस्य ते—तव शिवसंपदो—मोक्षश्रियः करस्था—हस्तप्राप्ता भवंतीति ॥ २७१ ॥ १ ॥

अथ साम्यबीजमविद्यात्यागमुपदिशन्नाह—

त्वमेव दुःखं नरकस्त्वमेव, त्वमेव शर्मापि शिवं त्वमेव ।
त्वमेव कर्माणि मनस्त्वमेव, जहीह्यविद्यामवधेहि चात्मन्! ॥ २७२ ॥ २ ॥

धनवि०—हे आत्मन्! दुःखं—प्रतिकूलवेद्यं त्वमेवासि दुःखसाधनोपायप्रेरकत्वात्, च पुनर्नरको—निरयनाम्नी दुर्गतिस्त्वमेवासि

---

रत्न०—अथ ग्रंथोपसंहाराय साम्यरहस्यमिति षोडशोऽधिकारो विवरीतुं प्रक्रम्यते, तत्र सर्वा शुभा प्रवृत्तिरभ्यासवशात आयातीति निरूपयति—एवं सदाऽभ्यासवशेति० व्याख्या—परमार्थ—रहस्यं वेत्तीति परमार्थवेदी तस्य संबोधनं क्रियते हे परमार्थवेदिन्! त्वमेवम्—अमुना सकलग्रंथोक्तप्रकारेण साम्यं—समत्वं प्रति सह—आत्मना—स्वरूपेण वर्त्तते यत्तत्सात्म सात्मनो भावः सात्म्यं—स्वरूपत्वं नय, यादृक्साम्यं कथितमस्ति तादृगेव नय—प्रापय, केन?—सदा—निरन्तरमभ्यासवशेन, यतः साम्यात्ते—तव करस्थाः शिवसंपदो भवंति—हस्तशायिन्यो मोक्षश्रियः स्युरित्यर्थः, कथं?—सद्यः—शीघ्रं, ते किं कर्तुः?—भवस्य—संसारस्य भीति—भयं भिनत्तीति भवभीतिभेत्ता तस्य ॥ २७१ ॥ १ ॥

रत्न०—अथ सर्वेनात्मनः प्राधान्यं निरूपयन्नात्मानं सावधानताविषये उपदिशति—त्वमेव दुःखमिति० व्याख्या—हे आत्मन्! स्वस्य दुःख-

नरकगतिनामकर्मार्जकत्वात्, च पुनः शर्मापि—सुखमपि त्वमेवासि सुखसाधनोपायप्रेरकत्वात्, च पुनः शिवं त्वमेवासि सकलकर्मराहित्येन जायमानत्वात् च पुनः कर्माणि—शुभाशुभरूपाणि त्वमेवासि शुभाशुभकर्मार्जकत्वात्, च पुनर्मनः—शुभाशुभकर्मबंधकश्चेतोव्यापारस्त्वमेवासि मनोव्यापारकत्वात्, अत्रात इत्यध्याहार्यं तेनातः कारणादविद्याम्—अनन्तरोक्तार्थवैपरीत्यलक्षणं मिथ्याज्ञानं ममायं सुखदो ममायं दुःखद इत्यादिरूपां मिथ्यावासनां वा जहीहि—त्यज, च पुनरवधेहि—यथा सुखं भवति दुःखं च न भवति तथा सावधानो भव; अत्र वृत्ते प्रतिपादितार्थस्य संवादकगाथा—अप्पा नई वेअरणी, अप्पा मे कूडसामली। अप्पा कामदुघा धेणू, अप्पा में नंदणं वणं ॥ १ ॥ इत्यादिकाऽवसेया इति। नन्वात्मनो दुःखनरकादिरूपताऽत्र कथं दर्शितेति चेन्न, धर्मधर्मिणोरभेदात्संवृतत्वासंवृतत्वपर्यायभेदेऽपि पर्यायपर्यायिणोरभेदाच्च ॥ २७२ ॥ २ ॥

---

कारणे कर्मणि प्रवृत्तत्वात्, त्वमेवासीति सर्वत्र संबंधनीयम्, अथवा दुःखानां भोक्तृत्वात्त्वमेव दुःखं, यथेदं भोगिगृहं दातृगृहं, परं गृहं भोगि दातृ च कथं भवति?, भोगी दाता च गृह्येव भवति, परमाश्रये आश्रयिण उपचारादित्यादयः प्रयोगा अविप्रतिपन्नास्तथैवायं प्रयोगोऽपि, तथा त्वमेव नरको—नरकगतिकारणे कर्मणि प्रवृत्तत्वाद्, अथवा नरकदुःखानां भोक्तृत्वाद्, यथा गृहं स्त्रीतिवत्, तथा त्वमेव शर्मापि—सुखमपि, सुखप्राप्तिकारणे कर्मणि प्रवृत्तत्वाद्, अथवा सुखानां भोक्तृत्वात्, तथा त्वमेव शिवं—मोक्षः, मोक्षकारणे चारित्रे प्रवृत्तत्वेन, यदा तदा वा मोक्षाश्रयितया भावित्वेनाभेदोपचारात्, तथा त्वमेव कर्माणि कर्मात्मनोर्लोहाग्निवदभेदतया मिलितत्वात्सकलकर्मभोक्तृत्वाद्वाऽभेदोपचारात्, तथा मनः—चेतस्त्वमेव मनसः प्रवर्त्तननिवर्त्तनयोरीशत्वेनाभेदोपचारात्, तेन कारणेन हे आत्मन्! अवज्ञाम्—अनादरमर्थाद्धर्मकर्मणि कल्ये परुत्परारिवर्षे वा करिष्येऽहमिति धर्मकर्मेतिरूपां जहाहि, च पुनरवधेहि—सावधानमना भव, धर्मकर्मणि पटुर्भवेतिभावः ॥ २७२ ॥ २ ॥

साम्यकारणमविद्यात्यागमुपदिश्य साम्यकार्यं संगत्यागमुपदिशन्नाह—

निःसंगतामेहि सदा तदात्मन्नर्थेष्वशेषेष्वपि साम्यभावात् ।
अवेहि विद्वन्! ममतैव मूलं, शुचां सुखानां समतैव चेति ॥ २७३ ॥ ३ ॥

धनवि०—हे आत्मन्! यतः कारणादनंतरोपदेशे सर्वं त्वमेवासीति प्रतिपादितं तत्—तस्मात्कारणात्सदा—सर्वकालमशेषेषु—समस्तेष्वप्यर्थेषु—सुखदुःखजनकेषु साम्यभावात्—समतापरिणामान्निःसंगतां—नवविधपरिग्रहे ममताराहित्यमेहि—आ समंतादेहि "गत्यर्थाः प्राप्त्यर्थाः" इति वचनात्प्राप्नुहीत्यर्थः; हे विद्वन्!—हे धीमन् त्वमिति वक्ष्यमाणमवेहि—जानीहि, इतीति किमित्याह—शुचां—शोकानां मूलं—मुख्यकारणं ममतैव—निःसंगताऽभाव एव भवति, सुखानां—सकलसौख्यानां मूलं—प्रधानकारणं समतैव—साम्यमेव भवतीति ॥२७३॥३॥

अनंतरं सामान्यतः सकलपदार्थविषयिणी समता निर्ममता चोपदिष्टा, अथ च विशेषविषयिणीं समतां चोपदिशति—

स्त्रीषु धूलिषु निजे च परे वा, संपदि प्रसरदापदि चात्मन्! ।
तत्त्वमेहि समतां ममतामुग्, येन शाश्वतसुखाद्वयमेषि ॥ २७४ ॥ ४ ॥

---

रत्न०—अथ सर्वत्र निस्संगतायाः प्राधान्यमुपदिशति—निस्संगतामेहीति० व्याख्या—हे आत्मन्! तत्—तस्माद्धेतोस्त्वं सदा निस्संगतां—धनगृहादिसंगराहित्यमेहि—प्राप्नुहि, कस्मात्?—साम्यस्य भावो—भावनं चिंतनं तस्मात्, केषु?—अशेषेष्वप्यर्थेषु, सर्वेषां पदार्थानामनित्यत्वादित्यर्थः, हे विद्वन्!—पण्डित शुचां—शोकानां मूलं—कारणं ममता एव वर्त्तते इत्यवेहि, सर्वेषां सुखानां मूलं समता—साम्यं वर्त्तते इति चावेहि, इदमेव ज्ञात्वा निस्संगतामेहीति पूर्वापरसंगतिरिति ॥ २७३ ॥ ३ ॥

धनवि०—हे आत्मन्! तत्–तस्मात्स्त्रीषु–ललनासु धूलिषु–मार्गपतितरेणुषु च पुनर्निजे–स्वजने परे च–परजने वैरिणि वा च पुनः संपदि–राज्यादिसमृद्धौ प्रसरदापदि च–निःस्वतादिलक्षणायामागच्छद्विपत्तौ ममतामुग्–इष्टवस्तुनि ममत्वत्यजनशीलः सन् त्वं समतां–साम्यमेहि–प्राप्नुहीति, येन समताकरणेन शाश्वतसुखाद्वयं–शाश्वतसुखेन–मोक्षसुखेन सहाद्वयम्–ऐक्यमेषि–अधिगच्छसीत्यर्थः ॥ २७४ ॥ ४ ॥

अथ साम्यस्यैव सकलकमनीयपदार्थसार्थसारतां दर्शयन्नुपदिशति—

**तमेव सेवस्व गुरुं प्रयत्नादधीष्व शास्त्राण्यपि तानि विद्वन्!।**
**तदेव तत्त्वं परिभावयात्मन्!, येभ्यो भवेत् साम्यसुधोपभोगः ॥ २७५ ॥ ५ ॥**

---

रत्न०—निस्संगता तु ममत्वमोचनेन भवतीत्याह–स्त्रीषु धूलिष्विति० व्याख्या—हे आत्मन्! त्वं तत्त्वं–सारं समतां–साम्यमेहि–प्राप्नुहि, कासु?–स्त्रीषु, तथा धूलिषु, पुनः कस्मिन्?–निजे–स्वजने पुत्रादौ तथा परे–अन्यस्मिन् वैर्यादौ, तथा कस्यां?–संपदि–सुवर्णमणिमाणिक्यगृहादिकायां, पुनः कस्यां?–प्रसरंती या आपद्–विपत् तस्यामपि, त्वं किंलक्षणो?–ममतां–ममत्वं मुंचसीति ममतामुग्, इदमेव सर्वेषु पदार्थेषु स्त्र्यादिषु समताकरणे समर्थं विशेषणमिति, येन समताप्रापणेन शाश्वतसुखस्य–मोक्षसुखस्याद्वयम्–ऐक्यमेषि–प्राप्नोषीति, अत्र यथा धूलिषु रागं न चिंतयसि तथा स्त्रीष्वपि मा चिंतय, यथा च निजेषु द्वेषं न चिंतयसि तथा परेष्वपि मा चिंतय, यथा संपद्यागतायां मुदं वहसि तथाऽपदि प्रसृतायां मम पूर्वकर्मक्षयो भवतीति दुःखितो मा भवेतिलक्षणां समतां तत्त्वमेहीतिभावः ॥ २७४ ॥ ४ ॥

धनवि०—हे विद्वन् !-धीमन् तमेव गुरुं-धर्मोपदेष्टारं प्रयत्नाद्-उद्यमात्सेवस्व-भजस्व, च पुनः प्रयत्नाच्छास्त्राण्यपि-ग्रन्थानपि तान्यधीष्व-पठ, च पुनस्तदेव तत्त्वं-परमार्थसद्वस्तु ध्येयमित्यर्थो वि(परि)भावय-विचिंतय ध्यानविषयं कुरु, येभ्यो-गुरुशास्त्राध्ययनतत्त्वचिंतनेभ्यः साम्यसुधोपभोगः-समताऽमृतास्वादो भवेत्-स्यादिति; अत्रार्थे संवादो "दृढतामुपैति वैराग्यवासना येन येन भावेन। तस्मिंस्तस्मिन् कार्यः कायमनोवाग्भिरभ्यासः ॥ १ ॥" (१६) इति प्रशमरतिप्रकरणे, इति ॥ २७५ ॥ ५ ॥

अथैनं ग्रन्थमुपसंहरन् ग्रन्थश्रवणफलमुपदर्शयति—

समग्रसच्छास्त्रमहार्णवेभ्यः, समुद्धृतः साम्यसुधारसोऽयम् ।
निपीयतां हे विबुधा ! लभेध्वमिहापि मुक्तेः सुखवर्णिकां यत् ॥ २७६ ॥ ६ ॥

धनवि०—हे विबुधाः !-पंडिताः सलात्कारणाद्भवद्भिरयम्-अध्यात्मकल्पद्रुमाभिधाने ग्रन्थे स्थितः समग्रसच्छास्त्रमहार्णवेभ्यः-न कष्टधर्मशास्त्रमहासमुद्रेभ्यः समुद्धृतः-सम्यक्प्रकारेणोद्धारविषयीकृतः संगृहीत इतियावत् साम्यसुधारसः-समतामृतनिर्यासो

---

रत्न०—अथ सद्गुरुसेवया सर्वं शुभं प्राप्यत इति तत्रार्थे आत्मानमुपदिशति-तमेव सेवस्वेति० व्याख्या—हे आत्मन् ! प्रयत्नाद्गुरुं तमेव सेवस्व, प्रयत्नादिति सर्वत्र योज्यं, हे विद्वन् ! आगमान्-शास्त्राण्यपि तानधीष्व-पठ, तथा तदेव तत्त्वं परिभावय-चिंतय, येभ्यो-गुरुसेवनशास्त्राध्ययनतत्त्वपरिभावनेभ्यः साम्यमेव सुधा-अमृतं तस्या उपभोगो भवेत्, कुगुरुसेवनकुशास्त्राध्ययनकुतत्त्वपरिभावनैः संसारमूलकारणैश्च न किमपीति तत्त्वम् ॥ २७५ ॥ ५ ॥

रत्न०—अथैतद्ग्रंथस्य शुभोत्पत्तिस्थानकथनेनोपादेयतामाह-समग्रसच्छास्त्रेति० व्याख्या—हे पण्डिता ! अयं ग्रंथः साम्यमेव सुधारसो

निपीयतां—श्रूयतामिति, आदरेण श्रवणं पानमुच्यते; यद्—यस्मात्कारणादिहापि—मनुष्यभवे स्थितोऽपि मुक्तेः—मोक्षस्य सुखवर्णिकां—सौख्यस्य वर्णिका—तत्स्वरूपसूचकस्तदेकदेशस्तां लभेध्वं—प्राप्नुयात इति ॥ २७६ ॥ ६ ॥

अथ ग्रन्थकारस्तच्छिष्यो वा ग्रन्थकारनामविषयप्रयोजनानि सूचयन्नेतद्ग्रंथाध्ययनं कर्त्तव्यमित्युपदिशन्नाह—

**शान्तरसभावनात्मा, मुनिसुंदरसूरिभिः कृतो ग्रन्थः ।**
**ब्रह्मस्पृहयाऽध्येयः, स्वपरहितोऽध्यात्मकल्पतरुरेषः ॥ २७७ ॥ ७ ॥ गीतिः ॥**

धनवि०—एषः—अनन्तरमुक्तः **शान्तरसभावनात्मा**—नवमरसभावनस्वरूपो **मुनिसुंदरसूरिभिः**—संतिकरस्तोत्रगुर्वावलीप्रभृत्यनेकग्रंथग्रथननैपुण्यद्वादशकैः श्रीतपगच्छप्रकाशनदिनकरैः श्रीसोमसुंदरसूरिपट्टधरैः श्रीमुनिसुंदरसूरिगणधरैः **कृतो**—निर्मितः **स्वपरहितः**—स्वस्य—ग्रन्थकर्तुः परस्य च—ग्रन्थश्रोतुर्हितः—सदैव सुंदरपरिणामोऽध्यात्मकल्पतरुः—अध्यात्मकल्पद्रुमनामा ग्रन्थः—शास्त्रं **ब्रह्मस्पृहया**-

---

यत्र सः, अथवा साम्यमेव सुधारसस्तन्मयः साम्यसुधारसो निपीयताम्—अत्यादरेण श्रूयतां, युष्माभिरिति कर्तृपदं, किंलक्षणः ?—समुद्धृतः—कर्षितः, केभ्यः ?—समग्राणि-समस्तानि संति—शोभनानि शास्त्राणि—धर्मशास्त्राणीत्यर्थः तान्येव महार्णवा—महासमुद्रास्तेभ्यः, तान्निर्मथ्येत्यर्थः, यद्—यस्मात्कारणाद्यूयमिहापि मुक्तेः सुखवर्णिकां लभेध्वम्, अपरोऽपि सुधारसो विबुधैः—देवैर्निपीयते महार्णवसमुद्धृतश्च भवति तं च विबुधाः पीत्वा इहापि—देवभवेऽपि मुक्तिसुखवर्णिकां लभंत इति साम्यस्य सुधारसोपमानमन्वर्थमिति ॥ २७६ ॥ ६ ॥

रत्न०—अथास्य ग्रन्थस्य सान्वर्थनामकथनपूर्वकमध्ययने प्रवर्त्तयन्नाह—**शान्तरसभावनेति०** व्याख्या—अध्यात्मकल्पद्रुमनामैष ग्रन्थो विबुधैः-पण्डितैरध्येयः—पठनीयोऽथवा ध्येयः—चिंतनीयः, कया ?—ब्रह्मणः—प्रथमपक्षे ज्ञानस्यापरस्मिन् पक्षे मुक्तेः स्पृहया—वांछया, किंलक्षणः ?—शांतरसस्य

गुप्तिकागनयाऽध्येयः—पठनीयः, अत्र मुनिसुंदरसूरिभिरित्यनेन ग्रन्थकारनाम सूचितं, शान्तरसभावनेत्यनेन विषयः सूचितः, ब्रह्मस्पृहयेत्यनेन प्रयोजनं सूचितमिति ॥ २७७ ॥ ७ ॥

अथ ग्रन्थकारः स्वकृतग्रन्थस्याव्युच्छित्तिनिमित्तं प्रांतमंगलाचरणकरणव्याजेन स्वप्रतिज्ञातजयश्र्यंकमुपदर्शयन्नेतद्ग्रंथाध्ययने एतद्ग्रंथोक्ताचरणे च फलमाह, अथवा पूर्वपद्ये पठनफलमुपदर्शितमथ च पठनानंतरं तत्रैव मनोरमणे फलं दर्शयति—

**इममिति मतिमानधीत्य चित्ते, रमयति यो विरमत्ययं भवाद्द्राग्।**
**स च नियतमतो रमेत चास्मिन्, सह भववैरिजयश्रिया शिवश्रीः ॥ २७८ ॥ ८ ॥**

धनवि०—यो **मतिमान्**—बुद्धिमान् पुमानिमम्—अनंतरोक्तं श्रुतिप्रत्यक्षमध्यात्मकल्पद्रुमाभिधं ग्रन्थम**धीत्य**—अध्ययनविषयीकृत्येतिग्रन्थोक्ताचरणप्रकारेणममेव ग्रन्थं **चित्ते**—मनसि **रमयति**—पुनः पुनरनुभवति **सोऽयम**ध्ययनानंतरं पुनः पुनरनुभविता पुमान् **भवात्**—संसाराद्**द्राग्**—शीघ्रं **विरमति**—निवर्त्तते;**अतः**—अस्माद्भवविरमणाद**स्मिन्**—ग्रन्थाध्ययनानुभवितरि पुंसि च **भववैरिजयश्रिया सह शिवश्रीः**

---

भावनैवात्मा—स्वरूपं यस्य सः, पुनः किल० ?—कृतो—निर्मितः, कैः ?—मुनिसुंदरसूरिभिः, पुनः किं० ?—स्वस्य—ग्रन्थकर्तुः परेषा च—शिष्यादीनां हितो—हितकृद्, अध्यात्मशास्त्रत्वादुभयेषामपि हितकृदित्यर्थः ॥ २७७ ॥ ७ ॥

रत्न०—अथास्य ग्रन्थस्योपसंहारवाक्यमाह—**इममिति०** व्याख्या—इति—अमुना प्रकारेणोक्तमिममध्यात्मकल्पतरुनामानं यो मतिमानधीत्य चित्ते रमयति—क्रीडयति वारंवारं परावर्त्तनेनेति सोऽयं मतिमान् भवान्नियतं—निश्चितं द्राक्—शीघ्रं विरमति—निवर्त्तते, संसाराद्विरक्तो भवति, अतः-अस्माद्विरमणादस्मिन् मतिमति पुंसि शिवश्रीः—मोक्षलक्ष्मी रमेत, कया कृत्वा ?—सहभवा—सहजाता अर्थादात्मना सहेति ये वैरिणः—क्रोधमानमाया-

मोक्षलक्ष्मीः कल्याणकमला वा रमेत—क्रीडां कुर्यात्; अत्र भवः—संसारः स एव वैरी—शत्रुस्तस्य जयश्रीः—विजयलक्ष्मीस्तया भववैरिजयश्रिया; अत्र जयश्रीत्यनेन ग्रन्थस्यास्य जयश्र्यंकता दर्शिता, तद्दर्शनेन चैतद्ग्रंथकारस्य स्वप्रतिज्ञानिर्वाहोऽपि समर्थितो भवतीति ॥२७८॥८॥

इति नवमश्रीशान्तरसभावनात्मस्वरूपोऽध्यात्मकल्पद्रुमग्रन्थो जयश्र्यंकः श्रीमुनिसुंदरसूरिभिः कृतः समाप्तः ।

इति श्रीतपागच्छनायकभट्टारकश्रीमुनिसुंदरसूरिनिर्मितस्य तत्पट्टपरम्पराप्रभावकपातसाहश्रीअकब्बरप्रतिबोधकभट्टारकश्रीहीरविजयसूरिश्रीविजयसेनसूरिभावितार्थस्य षोडशशाखस्याध्यात्मकल्पद्रुमस्याधिरोहिणीटीकायां सकलशास्त्रारविन्दप्रद्योतनमहोपाध्यायश्रीकल्याणविजयगणिशिष्योपाध्यायश्रीधनविजयगणिविरचितायां साम्यरहस्यनाम्नी षोडशी पद्पद्धतिरिति ॥ १६ ॥

श्रीहीरविजयसूरीश्वरशिष्यै रामविजयविबुधवरैः । श्रीसुमतिविजयवाचकशिष्यैरपि सूरविजयज्ञैः ॥ १ ॥
संभूय शोधिताऽसावध्यात्मसुरद्रुमस्य पदघटना । निर्दोषैर्दोषज्ञैर्निर्दोषा खलु विधेयेति ॥ २ ॥

---

लोभरागद्वेषाख्याः षट् तेषां जयश्रिया—जयलक्ष्म्या, तेषां जयेनैव शिवश्रीप्राप्तिरिति, अथवा भवः—संसारः स एव वैरी तस्य जयश्रिया सहास्मिन् शिवश्री रमेतेत्यपि व्याख्यानमिति ॥ मंगलम् ॥ २७८ ॥ ८ ॥ इति षोडशोऽधिकारः ॥

इति नवमशान्तरसभावनात्माध्यात्मकल्पद्रुमनामाऽयं ग्रंथः संपूर्णः श्रीमुनिसुंदरसूरिभिर्विरचितश्चिरं जयतु, रंजयतु लोकं ॥

श्रीशांतिचंद्रवरवाचकदुग्धसिंधुलब्धप्रतिष्ठवरवाचकरत्नचंद्रः । अध्यात्मकल्पफलदस्य चकार टीकां, तत्राधिकार इति षोडश एष सार्थः ॥१६॥

इति श्रीशान्तरसभावनानाम्नाऽध्यात्मकल्पद्रुमो जयश्र्यंकः श्रीमुनिसुंदरसूरिभिः समर्थितः श्रीतपागच्छनायकपरमगुरुभट्टारकप्रभुश्रीसोम-सुंदरसूरिप्रसादेन, विवृतश्च महोपाध्यायश्रीसकलचंद्रगणिशिष्योत्तमउपाध्यायश्रीशान्तिचंद्रगणिशिष्यरत्नउपाध्यायश्रीरत्नचंद्रगणिभिः श्रीतपाग-च्छनायकप्रवर्द्धमानसागरकुमतनिवारणजगदुपकारकभट्टारकप्रभुयुगप्रधानसमानश्री ५ विजयदेवसूरिसूरिदेवानां प्रसादेन दीक्षागुरुविद्यागुरुश्रीजंबूद्वीप-प्रज्ञप्तिसूत्रानेकग्रन्थवृत्तिकारकमहोपाध्यायश्रीशान्तिचंद्रगणिप्रसादेन ॥

---

## अथ प्रशस्तिर्लिख्यते

श्रीवीरपद्माम्बुजभास्कराभः, श्रीमत्सुधर्मा गणभृद्बभूव । अद्यापि वाणी प्रसरीसरीति, यस्य प्रभोः पण्डितवक्त्रवासा ॥ १ ॥ बभूव तत्पट्टपरंपरायां, सूरिर्जगच्चंद्र इति प्रसिद्धः । तेने तपागच्छ इति प्रसिद्धिं, यस्माद्गणोऽय प्रथितावदातः ॥ २ ॥ परम्परायामपि तस्य जात, आनन्दपूर्वो विमला-ख्यसूरिः । साधुक्रियामार्गविकाशभास्वान्, जगज्जनानन्दकरः प्रतीतः ॥३॥ तस्यापि पट्टे विजयाग्रदानसूरिर्बभूव प्रबलप्रतापः । राशिं गुणानां किल यस्य धीरं, ततोः समानांकुरुते फणीन्द्रः ॥ ४ ॥ बभूव सूरिः किल तस्य पट्टे, श्रीहीरपूर्वो विजयोर्जितश्रीः । प्राप प्रतिष्ठामसमां स सूरिर्नरे-न्द्रदेवेन्द्रनतामजस्रम् ॥ ५ ॥ तस्यापि पट्टेऽजनि सूरिराजः, सेनोत्तरश्रीविजयो यशस्वी । ततार जैनागमवारिराशिं, नावा स्वबुद्ध्योत्तमभा-गधेयः ॥ ६ ॥ विजयते किल तत्पदसेवया, शुभसूरिपदः प्रणयी गुरौ । विजयदेवगुरुर्गरिमाम्बुधिस्तपगणे गगने किमु चंद्रमाः ॥ ७ ॥ श्रीआनन्दविमलगुरुशिष्याः श्रीसहजकुशलविबुधवराः । लुंपाकमतमपास्यांगजमलमिव निर्मला जाताः ॥ ८ ॥ तेषां शिष्या मुख्या वाचक-वरसकलचंद्रगणयः । चंद्रा इव वचनसुधा वर्षर्षे विबुधवरपेयाम् ॥ ९ ॥ श्रीशान्तिचंद्रा वरवाचकेंद्रास्तेषां च शिष्या बहुशिष्यमुख्याः ।

बभूवुरुद्दामगुणैरुपेताः, प्रभावकाः श्रीजिनशासनस्य ॥ १० ॥ श्रीमज्जंबूद्वीपप्रज्ञप्तेर्वृत्तिसूत्रणे चतुराः । येषां बुद्धिं सुरगुरुरपीहते विश्वगेयश्रुतयशसाम् ॥ ११ ॥ "इति गीत्यार्या" तेषां गुरूणां गुणसागराणां, प्रसादलेशं समवाप्य चक्रे । अध्यात्मकल्पद्रुमवृत्तिमेनां, परोपकृद्वाचकरत्नचंद्रः ॥ २२ ॥ श्रीविद्यमानगच्छाधिराजवरविजयदेवसूरीणाम् । प्राप्यानुज्ञां तपगणगगनांगणभास्करश्रीणाम् ॥ १३ ॥ युँगमुँनिरसँशशि (१६७४) वर्षे मासीषे विजयदशमिकादिवसे । शुक्लेऽध्यात्मसुरद्रुमवृत्तिश्चक्रे मया ललिता ॥ १४ ॥ अध्यात्मशास्त्रे विवृतिं विवृण्वता, यदर्जितं पुण्यमनन्यचेतसा । संघेषु कल्याणपरम्परा परा, प्रवर्त्ततां तेन दिने दिनेऽधिका ॥ १५ ॥ मात्सर्यमुत्सार्य कृतज्ञलोकैः, संशोधनीया परिवाचनीया । धर्मोपदेशेन च लेखनीया, वृत्तिः किलैषा च प्रवर्त्तनीया ॥ १६ ॥ अनुष्टुपां सहस्रे द्वे, तयोपरि चतुःशती । एकोनषष्ठ्यम्यधिका, वर्द्धते वर्णयामलम् ॥ १७ ॥

इत्यध्यात्मकल्पद्रुमवृत्तिः अध्यात्मकल्पलतानाम्नी संपूर्णा ॥ संवत् १६७४ वर्षे आश्विनमासि शुक्लदशम्यां **श्रीसूरतबंदरे** उपाध्यायश्रीरत्नचंद्रगणिभिरध्यात्मकल्पलता विरचिता ॥ श्रीप्रद्युम्नचरित्र १ श्रीसम्यक्त्वसप्ततिसम्यक्त्वरत्नप्रकाशनामबालावबोध २ श्रीसमवसरणस्तवबालावबोध ३ श्रीहितोपदेश ४ भ्रातृभिः सह श्रीभक्तामरस्तव १ श्रीकल्याणमंदिरस्तव २ श्रीदेवाप्रभोस्तव ३ श्रीधर्मस्तव २ श्रीऋषभवीरस्तव ५ श्रीकृपारसकोष ६ श्रीनैषधमहाकाव्य ७ श्रीरघुवंशमहाकाव्य ८ वृत्तिभगिनीभिः सह रममाणा श्रीअध्यात्मकल्पद्रुमवृत्तिरध्यात्मकल्पलतानाम्नी विबुधपाणिगृहीता बहुसंतानपरंपरावती चिरं जयतु ॥

इति श्रेष्ठि-देवचन्द्र-लालभाई-जैनपुस्तकोद्धारे-ग्रन्थाङ्कः ८९

मुद्रित-
ग्रंथसूचिः

# शेठ देवचंद लालभाई जैन पुस्तकोद्धार फंडद्वारा मुद्रित ग्रन्थो

| अंक | ग्रन्थनुं नाम, तेना कर्त्ता विगेरे | मूल्य रु. आ. पा. |
| --- | --- | --- |
| १ | ×भक्तामरस्तोत्र श्रीमानतुंगाचार्यकृत, श्रीप्रभाचंद्रसूरि तेमज मुनिश्री श्रीविशालराजना शिष्ये रचेली बे टीकाओ सहित | ०–८–० |
| २ | ×[illegible] पूर्व मुनिवर्यकृत | ०–१–६ |
| ३ | ×[illegible] श्रीशुभविजयगणिकृत, | ०–१–६ |
| ४ | ×पाक्षिकसूत्र, खामणा अने पाक्षिक सूत्र उपर श्रीयशोदेवसूरिकृत टीका सहित | ०–६–० |
| ५ | ×अध्यात्ममतपरीक्षा महामहोपाध्याय श्रीयशोविजयकृत स्वोपज्ञ टीका सहित | ०–६–० |
| ६ | ×षोडशक प्रकरण श्रीहरिभद्रसूरिकृत, श्रीयशोविजय अने श्रीयशोभद्रनी बे टीकाओ सहित | ०–६–० |
| ७ | ×कल्पसूत्र श्रीभद्रबाहुस्वामीकृत, श्रीविनयविजयउपाध्यायनी टीका सहित | ०-१२-० |
| ८ | ×वंदारुवृत्ति, श्रीदेवेन्द्रसूरिकृत टीका साथे | ०–८–० |
| ९ | ×दानकल्पद्रुम ( धन्ना-चरित्र ) श्रीजिनकीर्तिसूरिकृत | ०–६–० |
| १० | ×योग फिलोसॉफी ( अंग्रेजीमां ) श्रीयुत वीरचंद राघवजी गांधीना चिकागोना भाषणो | ०–५–० |
| ११ | ×जल्पकल्पलता मुनिश्रीरत्नमंडनकृत | ०–३–० |
| १२ | ×योगदृष्टिसमुच्चय श्रीहरिभद्रसूरिकृत, स्वोपज्ञ टीका साथे | ०–३–० |
| १३ | ×कर्म फिलोसोफी ( अंग्रेजीमां ) श्रीयुत वीरचंद राघवजी गांधीना चिकागोना भाषणो | ०–५–० |
| १४ | ×आनंद काव्य महोदधि मौक्तिक १ लुं ( प्राचीन जैन मुनिराजाओ रचेला गुजराती काव्योनो संग्रह ) | ०-१०-० |
| १५ | ×श्रीधर्मपरीक्षा पंडित पद्मसागरकृत | ०–५–० |
| १६ | ×शास्त्रवार्तासमुच्चय श्रीहरिभद्रसूरिकृत, श्रीयशोविजय उपाध्यायनी टीका सहित | ०–२–० |

| अंक | ग्रन्थनुं नाम, तेना कर्त्ता विगेरे | मूल्य रु. आ. पा. |
|---|---|---|
| १७ | ×कर्मप्रकृति श्रीशिवशर्माचार्यकृत, श्रीमलयगिरिसूरिनी टीका सहित | ०-१४-० |
| १८ | ×कल्पसूत्र (मूल) श्रीभद्रबाहुस्वामीकृत, श्रीकालिकाचार्यनी कथा सहित | ०-८-० |
| १९ | ×पंचप्रतिक्रमण सूत्र, गणधरादि पूर्व मुनिवर्यकृत | ०-४-० |
| २० | ×आनंद काव्य महोदधि मौक्तिक २ जुं ( प्राचीन जैन मुनिराजाओ रचेला गुजराती काव्योनो संग्रह ) | ०-१०-० |
| २१ | ×उपदेशरत्नाकार, श्रीमुनिसुंदरसूरिकृत | १-४-० |
| २२ | ×आनंद काव्य महोदधि मौक्तिक ३ जुं ( प्राचीन जैन मुनिराजाओ रचेला गुजराती काव्योनो संग्रह ) | ०-१०-० |
| २३ | ×चतुर्विंशतिजिनानंदस्तुति श्रीमेरुविजयगणिकृत | ०-२-० |
| २४ | ×षट्पुरुषचरित मुनिक्षेमंकरगणिकृत | ०-२-० |
| २५ | ×स्थूलभद्रचरित श्रीजयानंदसूरिकृत | ०-२-० |
| २६ | ×धर्मसंग्रह भाग १ श्रीमान् विजय उपाध्यायकृत | १-०-० |
| २७ | ×संग्रहणीसूत्र श्रीश्रीचंद्रसूरिकृत, श्रीदेवभद्रसूरिनी टीका सहित | ०-१२-० |
| २८ | ×सम्यक्त्वपरीक्षा ( उपदेशशतक ) श्रीविबुधविमलसूरिकृत | ०-२-० |

| अंक | ग्रन्थनुं नाम, तेना कर्त्ता विगेरे | मूल्य रु. आ. पा. |
|---|---|---|
| २९ | ×ललितविस्तरा ( चैत्यवंदनसूत्रवृत्ति ) श्रीहरिभद्रसूरिकृत श्रीमुनिचंद्रसूरिनी पञ्जिका सहित | ०-८-० |
| ३० | ×आनंदकाव्य महोदधि मौक्तिक ४ थुं ( प्राचीन जैन मुनिराजाओ रचेला गुजराती काव्योनो संग्रह ) | ०-१२-० |
| ३१ | ×अनुयोगद्वारसूत्र ( पूर्वार्ध ) श्रीहेमचंद्रसूरिकृत टीकासह | ०-१०-० |
| ३२ | आनंद काव्य महोदधि मौक्तिक ५ मुं ( प्राचीन जैन मुनिराजाओ रचेला गुजराती काव्योनो संग्रह ) | ०-१०-० |
| ३३ | ×उत्तराध्ययनसूत्र भाग १ श्रीभद्रबाहुस्वामीकृत निर्युक्ति तथा श्रीशांतिसूरिनी टीका सहित | १-५-० |
| ३४ | ×मलयसुंदरीचरित्र श्रीजयतिलकसूरिकृत | ०-७-० |
| ३५ | ×सम्यक्त्वसप्ततिका श्रीहरिभद्रसूरिकृत श्रीसंघतिलकाचार्यनी टीका सहित | १-०-० |
| ३६ | ×उत्तराध्ययन भाग २ श्रीभद्रबाहुस्वामीकृत निर्युक्ति तथा श्रीशांतिसूरिनी टीका सहित | १-१२-० |
| ३७ | ×अनुयोगद्वारसूत्र ( उत्तरार्ध ) श्रीहेमचंद्रसूरिकृत टीकासह | ०-१-० |
| ३८ | ×गुणस्थानक्रमारोह श्रीरत्नशेखरसूरिकृत, स्वोपज्ञ टीका साथे | ०-२-० |

| अंक | ग्रन्थनुं नाम, तेना कर्त्ता विगेरे | मूल्य रु. आ. पा |
|---|---|---|
| ३९ | ×धर्मसंग्रहणी भाग १ श्रीहरिभद्रसूरिकृत, श्रीमलयगिरिनी टीका सहित | १-८-० |
| ४० | ×धर्मकल्पद्रुम श्रीउदयधर्मगणिकृत | १-०-० |
| ४१ | ×उत्तराध्ययन भाग ३ श्रीभद्रबाहुस्वामीकृत निर्युक्ति अने श्रीशान्तिसूरिनी टीका सहित | १-१४-० |
| ४२ | ×धर्मसंग्रहणी भाग २ श्रीहरिभद्रसूरिकृत, श्रीमलयगिरि आचार्यनी टीका सहित | १-४-० |
| ४३ | ×आनन्द काव्य महोदधि मौक्तिक ६ ठुं (प्राचीन जैन मुनिराजोए रचेला गुजराती काव्योनो संग्रह) | ०-१२-० |
| ४४ | ×पिण्डनिर्युक्ति श्रीभद्रबाहुस्वामीकृत, श्रीमलयगिरि-आचार्यनी टीका सहित | १-८-० |
| ४५ | ×धर्मसंग्रह (उत्तरार्ध) श्रीमान् विजय उपाध्यायकृत | १-४-० |
| ४६ | ×उपमितिभवप्रपंचाकथा (पूर्वार्ध) श्रीसिद्धर्षि मुनिराजकृत | २-०-० |
| ४७ | ×दशवैकालिकसूत्र श्रीशय्यंभवसूरिकृत, श्रीहरिभद्रसूरिनी टीका सहित. | २-८-० |
| ४८ | ×श्राद्धप्रतिक्रमणसूत्र, श्रीरत्नशेखरसूरिनी टीका सहित | २-०-० |
| ४९ | ×उपमितिभवप्रपंचाकथा (उत्तरार्ध) श्रीसिद्धर्षि मुनिराजकृत | २-०-० |

| अंक | ग्रन्थनुं नाम, तेना कर्त्ता विगेरे | मूल्य रु. आ. पा. |
|---|---|---|
| ५० | ×जीवाजीवाभिगमसूत्र श्रीमलयगिरिनी टीका सहित | ३-४-० |
| ५१ | ×सेनप्रश्न (प्रश्नोत्तररत्नाकर) श्रीशुभविजयगणिकृत | १-०-० |
| ५२ | ×जम्बूद्वीपप्रज्ञप्ति (पूर्वार्ध) श्रीशान्तिचंद्रनी टीका सहित. | ४-०-० |
| ५३ | ×आवश्यकवृत्तिटिप्पण श्रीहेमचंद्रसूरिकृत | १-१२-० |
| ५४ | ×जम्बूद्वीपप्रज्ञप्ति (उत्तरार्ध) श्रीशान्तिचंद्रनी टीका सहित | २-०-० |
| ५५ | ×देवसीराइप्रतिक्रमण गणधरादि पूर्वमुनिवर्यकृत | ०-३-० |
| ५६ | ×श्रीपालचरित्र (संस्कृत) श्रीज्ञानविमलसूरिकृत | ०-१४-० |
| ५७ | ×सूक्तमुक्तावलि | २-०-० |
| ५८ | ×प्रवचनसारोद्धार (पूर्वार्ध) श्रीनेमिचंद्रसूरिकृत श्रीसिद्धसेनसूरिनी टीका सहित | ३-०-० |
| ५९ | ×तंदुलवेयालिय (चउसरण) श्रीविजयविमलनी टीका सहित | १-८-० |
| ६० | ×विंशतिस्थानकचरित्र श्रीजिनहर्षगणिकृत. | १-०-० |
| ६१ | ×कल्पसूत्र श्रीभद्रबाहुस्वामीकृत श्रीविनयविजयनी टीका स० | २-०-० |
| ६२ | ×सुबोधासमाचारी श्रीश्रीचंद्राचार्यकृत | ०-८-० |
| ६३ | ×सिरिसिरिवालकहा (श्रीपालचरित्र) श्रीरत्नशेखरसूरिकृत | १-४-० |
| ६४ | ×प्रवचनसारोद्धार (उत्तरार्ध) श्रीनेमिचंद्रसूरिकृत श्रीसिद्धसेनसूरिनी टीका सहित | ४-०-० |

| अंक | ग्रन्थनुं नाम, तेना कर्त्ता विगेरे | मूल्य रु. आ. पा. |
|---|---|---|
| ६५ | ×लोकप्रकाश भाग १ द्रव्यलोकप्रकाश संपूर्ण उपाध्याय श्रीविनयविजयकृत | २-०-० |
| ६६ | ×आनंद काव्य महोदधि मौक्तिक ७ मुं ( प्राचीन जैन मुनि राजाओ रचेला गुजराती काव्योनो संग्रह ) | १-८-० |
| ६७ | ×तत्त्वार्थाधिगमसूत्र अध्याय १ थी ५ पहेलो भाग वाचकवर्य उमास्वातिकृत, सिद्धसेनगणिनी टीका सहित | ६-०-० |
| ६८ | ×नवपद लघुवृत्ति, श्रीदेवगुप्तसूरिकृत स्वोपज्ञवृत्ति | १-०-० |
| ६९ | ×पंचवस्तुकग्रन्थ हारिभद्रीय स्वोपज्ञ टीका सहित | ३-०-० |
| ७० | ×आनंद काव्य महोदधि मौक्तिक ८ मुं ( गुजराती काव्य संग्रह-कुमारपालरासो ) | १-८-० |
| ७१ | ×आचारप्रदीपः | १-८-० |
| ७२ | ×विचाररत्नाकरः | ३-०-० |
| ७३ | ×नवपदप्रकरण बृहद्वृत्तिसहित | ४-०-० |
| ७४ | ×लोकप्रकाशः विभागः २ ( क्षेत्रलोकप्रकाश ) | २-८-० |
| ७५ | ×महावीरचरित्र प्राकृत गुणचन्द्रगणिकृत | ४-०-० |
| ७६ | ×तत्त्वार्थाधिगमसूत्र अध्याय ६ थी १० बीजो भाग, वाचकवर्य उमास्वातिकृत सिद्धसेनगणिनी टीका सहित | ६-०-० |

| अंक | ग्रन्थनुं नाम, तेना कर्त्ता विगेरे | मूल्य रु. आ. पा. |
|---|---|---|
| ७७ | ×लोकप्रकाशः विभागः ३ (काललोकप्रकाश ) | २-०-० |
| ७८ | ×भरतेश्वरबाहुबलिवृत्तिः विभाग १ शुभशीलगणिकृत | २-०-० |
| ७९ | ×भक्तामर-कल्याणमन्दिर-नमिऊण स्तोत्रत्रय सटीक | ५-०-० |
| ८० | ×प्रियङ्करनृपकथा | १-८-० |
| ८१ | ×अनेकार्थरत्नमञ्जूषा अष्टलक्षार्थी समयसुंदरगणिकृत | ३-०-० |
| ८२ | कल्पसूत्र ( बारसासूत्र ) सचित्र | १२-०-० |
| ८३ | ×ऋषभपञ्चाशिका टीकाभाषान्तरसहित | ४-०-० |
| ८४ | ×जैनधर्मवरस्तोत्र टीकाभाषान्तर सहित | ३-०-० |
| ८५ | आवश्यकसूत्रम् मलयगिरीयटीका विभाग ३ जो सम्पूर्ण | २-८-० |
| ८६ | लोकप्रकाश विभाग ४ ( भावलोकप्रकाश ) | २-०-० |
| ८७ | भरतेश्वरबाहुबलिवृत्ति विभाग २ शुभशीलगणिकृत | १-०-० |
| ८८ | प्रशमरति श्रीउमास्वातिकृत श्रीहरिभद्रसूरिकृत टीका सहित | १-८-० |
| ८९ | अध्यात्मकल्पद्रुमः श्रीमुनिसुंदरसूरिकृत श्रीधनविजयगणि अने श्रीरत्नचंद्रगणिकृत टीका साथे | ३-८-० |
| ९० | गौतमीयमहाकाव्य श्रीरूपचंद्रपाठककृत मूल, तथा उ० श्रीक्षमाकल्याणकृत टीका सहित | १-८-० |

# श्रीमतीआगमोदयसमितिद्वारा मुद्रिताः

लभ्यग्रन्थाः—



प्राप्तिस्थानम्—

**शेठ देवचंद लालभाई जैनधर्मशाला, बडेखान् चकला, गोपीपुरा सुरत.**

## ॥ इति श्रीअध्यात्मकल्पद्रुमः समाप्तः ॥

उपा० श्रीधनविजयगणिविरचितया अधिरोहिण्याख्यया पदपद्धत्या वाचक-
श्रीरत्नचंद्रकृतया अध्यात्मकल्पलताख्यया च वृत्त्या विभूषितः ॥

इति श्रेष्ठि-देवचन्द्र-लालभाई-जैनपुस्तकोद्धारे—ग्रन्थाङ्कः ८९